# सूचीपत्रम्

## प्रथमो भागः



## द्वितीयो भागः

श्रीमद् भगवद्

बादरायणव्याससम्मत-

# ब्रह्मसूत्रभाष्यनिर्णयः

## प्रथमः पादः—ब्रह्मसूत्रपरिचयः

### भूमिका

—

मङ्गलाचरणम्

उपास्यदेवताः पञ्च सम्पूज्य मनसा हरिम् । रुक्मिणीं कालिकामिष्टां तासां मध्ये विशेषतः ॥
तं मूलब्रह्म परं ब्रह्म स्वात्माऽभिन्नं विभाव्य च । देवीं सरस्वतीं व्यासं कृष्णाख्यं तं महामुनिम् ॥
शुकं तच्छिष्यमत्र गौडं ततः शिष्यक्रमेण वै । गोविन्दं शङ्कराचार्यं भाष्यकारं जगद्गुरुम् ॥
पद्मपादादिकांश्चैव सम्प्रदायप्रवर्तकान् । तदन्वयेसमुत्पन्नं महान्तं भगवान् पुरीम् ॥
मौनीसम्पन्नकर्तारं ब्रह्मविद्याविशारदम् । तस्य शिष्यक्रमायातं तोतापुरीं तपोनिधिम् ॥
रामकृष्णं च तच्छिष्यं रामकृष्णात्मरूपकम् । युगावतारवर्यं च साक्षात् कैवल्यनायकम् ॥
विवेकानन्दनामानं तच्छिष्यं विश्ववन्दितम् । वेदान्ताद्वैतसिद्धान्तप्रचार-जीवनव्रतम् ॥
तच्छिष्यं विरजानन्दं सन्यासगुरुरूपिणम् । अच्युतानन्दमाराध्य दीक्षागुरुं सरस्वतीम् ॥
ततो विद्यागुरून् सर्वान् समभ्यर्च्य यथाक्रमम् । प्रमथनाथमाचार्यं लक्ष्मणशास्त्रिणं तथा ॥
योगेन्द्रनाथतीर्थं च पार्वतीचरणं तथा । सर्वशास्त्रप्रवक्तारं यत्कृपावशतो मया ॥
व्यासोक्तब्रह्मसूत्राणां यद्भाष्यं व्याससम्मतम् । तदेवात्र विनिर्णेतुं प्रयत्नः क्रियतेऽधुना ॥
सन्यासिचिद्घनानन्दपुरीनाम्नात्मशुद्धये । शास्त्रलक्षणपारोक्तमार्गेणैव यथामति ॥
ततोऽन्यभाष्यकारांश्च सम्प्रदायप्रवर्तकान् । भास्करं लक्ष्मणं चैव रामानुजापराभिधम् ॥
मध्वाचार्यं च निम्बार्कं श्रीकण्ठं श्रीपतिं तथा । विज्ञानभिक्षुकं चैव वल्लभं पुष्टिमार्गिणम् ॥
बलदेवं च गौडीयं पूजयामि यथाक्रमम् । आशीर्वादो मया तेषां प्रार्थ्यते करुणापि च ॥
येन तत्कृतभाष्याणां गुणदोषविनिर्णये । मतिमान्द्यं न जायेत पक्षपातादिकं तथा ॥
सत्यविनिर्णयादत्र न मे स्याच्चलिता मतिः । इत्यपि प्रार्थना तेषां सविधे क्रियते मया ॥
एतावत्कालपर्यन्तं सूत्राणामर्थनिर्णयः । सूत्रच्छन्दरचनाशैलीमाविष्कृत्य न कैः कृतः ॥
प्रयासोऽयमपूर्वोऽस्तु स्खलनं तेन शंक्यते । तथापि करुणा तेषां सहायो जायतां मम ॥
भाष्योत्कर्षविचारेऽस्मिन् सुदुस्तरमहार्णवे । भूयान्मे कर्णधारोऽत्र भूयास्तेषामनुग्रहः ।

## ग्रन्थारम्भः

सर्वकारणकारणम् एकमेवाद्वितीयं सत्यज्ञानानन्दस्वरूपम् अनन्तम् असङ्गं नित्यं ब्रह्म, तज्ज्ञानजन्यमोक्षश्च इत्यादिकं सर्वम् अलौकिकविषयान्तर्गतम्। एतादृशे अलौकिके विषये अनाद्यपौरुषेयश्रुतिरेव प्रमाणम् इत्येव वेदान्तिनां शिष्टाणां मतम्। तच्छ्रुतिसिद्धान्त-ज्ञापनाय भगवन्नारायणावतार-कृष्णद्वैपायनापरनामा महर्षिबादरायणः ब्रह्मसूत्राणि विरचयामास, द्वापरान्ते कलेरादौ वा प्रायेण अद्यप्रभृति पञ्चसहस्रवर्षेभ्यः पूर्वम्।

## शाङ्करभाष्यावलम्बनेन ब्रह्मसूत्रपरिचयप्रस्ताव

तेषां ब्रह्मसूत्राणां शाङ्करभाष्यमेव इदानीम् उपलभ्यमानानां भाष्याणां मध्ये प्राचीन-तमम्। इतः प्राचीनतरं भाष्यम् इदानीं नोपलभ्यते। तत्र प्राचीनविषये प्राचीना एव यथा प्रमाणं, न तथा अर्वाचीना इत्येव प्रायेण सर्वैर्मन्यते। अतो ब्रह्मसूत्राणां भगवद्-बादरायण-व्यास-सिद्धान्त-सम्मत-भाष्य-निर्णयार्थम् इदानीम् अधिगम्यमानानां भाष्याणां मध्ये यत् प्राचीनतमं शाङ्करभाष्यम्, यत् प्रायेण अद्यप्रभृति सार्द्धद्वादश-शतवत्सरेभ्यः प्राक् प्रणीतम् इति प्रसिद्धम्, तदेव भाष्यम् अवलम्ब्य ब्रह्मसूत्राख्यग्रन्थस्य आदौ किञ्चित् परिचयप्रदानं समुचितमेव।

## ब्रह्मसूत्रपरिचयः

तथा हि शाङ्करभाष्यानुसारेण एतद्ब्रह्मसूत्रग्रन्थस्य ५५५-सूत्राणि वर्त्तन्ते। एतैः सूत्रैः तन्मतेन १९१-संख्यकानि अधिकरणानि भाष्यटीकाकृद्भिः ग्रन्थेऽस्मिन् सन्निवेशितानि।* अधिकरणञ्च विचारविशेषः, एतद्द्वारा तत्त्वनिर्णयो मीमांसादर्शनस्यैव वैशिष्ट्यम्।

## तत्र अधिकरणस्वरूप-परिचयः

तत्र अधिकरणं षडङ्गम्, यथोक्तं भाट्टदीपिकाया तट्टीकाभाट्टचिन्तामणौ च "अधि-करणं तु वेदवत् षडङ्गं यदाहुः

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
प्रयोजनं सङ्गतिश्च प्राञ्चोऽधिकरणं विदुः॥

पञ्चाङ्गमिति प्रामादिकः पाठ इति" (माद्राज-संस्करण-५म-पृष्ठे द्रष्टव्यम्)।

## तत्र प्रथमाधिकरणपरिचयः

तद् यथा अस्य ग्रन्थस्य प्रथमं यदधिकरणं तत् जिज्ञासाधिकरणं नाम। तत्र सङ्गतिस्तावत्, प्रथमा श्रुतिमीमांसारूपा श्रुतिसङ्गतिः। द्वितीया श्रौतब्रह्मणो विचाररूपा शास्त्रसङ्गतिः। तृतीया तादृशब्रह्मणः श्रुतिवाक्येषु समन्वयरूपा अध्यायसङ्गतिः। चतुर्थी

* मतान्तरेण ५५६-सूत्राणि १९२-अधिकरणानि कुत्रचिद् दृश्यन्ते।

स्पष्टब्रह्मलिङ्गकश्रुतिवाक्यानां समन्वयरूपा पादसङ्गतिः। अस्य प्रथमाधिकरणत्वात् अधिकरण-सङ्गतिर्नाम षष्ठी सङ्गतिर्नास्ति।

अस्य विषयस्तावत् वेदान्तवाक्यविचारः। अथवा तन्मूलम् "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" (बृ २।४।५) इत्यादि श्रुतिवाक्यजातम्।

संशयस्तु ब्रह्म विचार्यं न वा इति।

पूर्वपक्षस्तु—ब्रह्म न विचार्यम्, तत्र हेतवोऽपि।

सिद्धान्तपक्षः पुनः—ब्रह्म विचार्यमेव, तत्र हेतवोऽपि।

प्रयोजनं अस्य पूर्वपक्षे—एतत् शास्त्रं न आरम्भणीयम्। सिद्धान्तपक्षे तु—शास्त्रमेतत् आरम्भणीयमेव। एतादृशो यः पञ्चाङ्गसंवलितो विचारः स एव अधिकरणम् इत्युच्यते। एतादृशानि अधिकरणानि अस्मिन् ग्रन्थे शाङ्करभाष्यानुसारेण १९१-संख्यकानि भवन्ति।

एतच्च अधिकरणं क्वचित् एकेन सूत्रेण, क्वचिच्च एकाधिकेन रचितं दृश्यते। तस्य च अधिकरणस्य पूर्वपक्षोऽपि क्वचित् एकेन सूत्रेण, क्वचिच्च एकाधिकेन रचितः। सिद्धान्तपक्षोऽपि तथैव। कुत्रचित् अधिकरणे सिद्धान्तसूत्रमात्रं विद्यते, पूर्वपक्षस्तत्र ऊहनीयः। क्वचिद् एकस्मिन् सूत्रे एव पक्षद्वयमपि दृश्यते, तत्र एकाधिकसूत्रेण अधिकरणं रचितम्। एकाधिकसूत्रात्मकाधिकरणस्थले पूर्वपक्षस्तु अधिकरणारम्भे अधिकरणमध्ये वा सकृत् द्विर्वा दृश्यते। परन्तु कुत्रापि अधिकरणं न केवलं पूर्वपक्षमात्रावसानमिति। संक्षेपतः इयमेव अधिकरणरचनाप्रणाली, विस्तरस्तु अग्रे वक्ष्यते। एवम् अस्य ब्रह्मसूत्रग्रन्थस्य भाष्यकृतां मध्ये सूत्रव्याख्याने बहुषु मत-भेदेषु सत्सु अपि अधिकरणविषयिणी अस्येयं रचनाशैली सर्वसम्मतैव, तत्र न कोऽपि भाष्यकारः परस्परं विवदते।

### ग्रन्थप्रकृतिविषये मतभेदः

शांकरभाष्यमतेन ग्रन्थस्य अस्य ५५५-सूत्रे १९१-अधिकरणे चत्वारोऽध्यायाः। परन्तु प्रत्यध्यायं चत्वारः पादाः वर्तन्ते, तेन ग्रन्थोऽयं षोडशपादात्मको भवति इति सर्वसम्मतम्। अस्य ग्रन्थाध्यायपादसंख्यायाम् अध्याय-पादविभागे वा सर्वेषामेव भाष्यकृतां मध्ये कोऽपि मतभेदो न दृश्यते, तथापि सूत्रसंख्यायां सूत्रपाठे सूत्रार्थे अधिकरणविभागे पूर्वोत्तर-पक्षीय-सूत्रनिर्देशे च तेषां मध्ये महान् मतभेदो दृश्यते। ते च भाष्यकाराः प्राधान्येन शंकर-भास्कर-रामानुज-निम्बार्क-मध्व-श्रीकण्ठ-श्रीकर-वल्लभ-विज्ञानभिक्षु-बलदेवाचार्याः इति।

### शाङ्करभाष्यस्य व्याससम्मतत्वशङ्का

श्रीमच्छङ्कराचार्यपरभाविनाम् एतेषां भाष्यकृताम् ईदृशमतभेददर्शनेन आशङ्क्येत मनसि जायते—किं शाङ्करसूत्रव्याख्यानं सूत्रकृद्भगवद्व्याससम्मतं न वा? यतः श्रीमच्छङ्करमत-विरोधिभाष्येषु तत्तद्भाष्यकर्तारः सर्वे एव स्वस्वभाष्यं भगवद्व्याससम्मतं भाष्यमिति वर्णयन्तीति।

अतः शाङ्करसूत्रव्याख्यानं सर्वेभ्य उपलभ्यमानभाष्येभ्यः प्राचीनतममपि व्याससम्मतं न वा इत्येव सन्दिह्यते।

### व्याससम्मतभाष्यनिर्णयस्य प्रयोजनम्

अतः सर्वेषां भाष्याणां मध्ये कतमत् कियद् वा व्याससम्मतमिति निर्णेतुं प्रयासः क्रियते। यतो यद् भाष्यं सूत्रकृदभिमतं, तदेव प्रमाणं भवितुम् उचितं सूत्रार्थनिर्णये। वेदान्तवाक्यार्थनिरूपणस्य व्याससूत्रार्थनिरूपणाधीननिरूपणत्वात्, व्यासस्यैव वेदार्थज्ञानसम्पन्नानां श्रेष्ठतमत्वाच्च। ततश्च ब्रह्मज्ञानाय वेदान्तमतमेव अनुसरणीयं मोक्षकामैः। यथोक्तं मुण्डकोपनिषदि

"वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद् यतयः शुद्धसत्त्वाः।
ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे॥" (३।२।६)

अर्थाद् वेदान्तार्थविज्ञानं मोक्षहेतुः इत्यवगम्यते, तच्च ब्रह्मसूत्रार्थज्ञानाधीनम्।

### व्याससम्मतभाष्यनिर्णये बाधा

किन्तु सर्वैः भाष्यकृद्भिः सूत्रव्याख्यानकाले स्वस्वमतानुकूलम् एतादृशं दुश्छेद्यं युक्तिजालं विस्तारितं, यद् दृष्ट्वा "व्यासाभिमतनिर्णय" असम्भव इति प्रतिभाति सर्वेषाम्। यदि एतत् कल्प्यते, अयं मतभेदश्चेत् निराकरणीयः, तदा व्यासशिष्यपरम्पराक्रमेण या व्याख्या अविच्छेदेन आयाता, तच्छरणं विना उपायान्तरं नास्तीति, यतो भगवद्व्यासेन अस्मिन् ग्रन्थमध्ये एतदर्थं किमपि इङ्गितं कृतम् इति न दृश्यते, एतदर्थं किञ्चिदपि सूत्रादि रचितम् एतदपि नैव उपलभ्यते। ततश्च "अयं व्याससम्प्रदायः" इति सर्ववादिसम्मतो कोऽपि सम्प्रदायो दृश्यते लोके। अतो ब्रह्मसूत्राणां व्यासाभिमत-व्याख्यानिर्णयः कथमपि न सम्भवति इति यद्यपि प्रतिभाति

### व्याससम्मतभाष्यनिर्णयसम्भावना

तथापि विशेषेण सावधानतया सत्यानुसन्धित्सया च सूत्राणाम् आलोचने कृते एवं प्रतीयते, यत् सूत्रकारैः एतदर्थं न किमपि इङ्गितं कृतम् इति कल्पनं न समीचीनम्। यतः सूत्रकृतो भगवतः स्वकृतसूत्राणां व्याख्या नानाजनैः नानाविधा करिष्यते इत्येतत् न कदापि तस्य अभीष्टं भवितुमर्हति। मद्वचनं न कोऽपि बोद्धुं शक्नुयात् एतादृशी इच्छा नैकस्यापि ग्रन्थकारस्य भवेत्। न कोऽपि इच्छेत् मद्वचनम् आश्रित्य सर्वे विवदन्तामिति। अतो व्याससूत्राणां नानाव्याख्यानं निवारयितुं ग्रन्थकृद्भिः भगवद्व्यासदेवैः सूत्रमध्ये स्पष्टम् इङ्गितं अकृतेऽपि, तत् न तत्र सर्वथा विद्यते इति कल्पनं न सङ्गतम्। एवमपि स्यात्—सूत्राणामर्थः शिष्यवर्गैः गुरुमुखाद् अधिगम्यताम् इत्युद्दिश्य सूत्रकृता भगवता तादृशम् इङ्गितं स्पष्टतया न कृतम्। यतो गुरुमुखाद् अनागता विद्या न सफला भवति इत्येव प्रसिद्धं लोके।

यथाहु —"सम्प्रदायविहीना ये मन्त्रास्ते विफला मता" इति। विषयेऽस्मिन् प्रायेण विसंवादो नास्ति। अतो मन्यते एतस्मादेव कारणात् सूत्रकृता भगवता ग्रन्थस्य ग्रन्थकर्तुं अध्याय-पादाधिकरणानाञ्च नामादिकं न ग्रन्थमध्ये सन्निवेशितम्, तथैव पूर्वोत्तरपक्षनिर्णायक-परिभाषासूत्रादिकमपि न कृतम्, एतत् सर्वं गुरुवक्त्रेभ्य शिष्यसम्प्रदाये अधिगम्यताम्—इत्येव तस्य आशय आसीत्। किन्तु तथापि सर्वासां चिन्तानां कश्चित् साधारणनियमो वर्तते एव, तेन सूत्ररचनाया अपि केनचित् साधारणेन नियमेन भवितव्यम्। तत तन्नियमानुवर्तिभि अपरैरपि प्रयत्ने कृते प्रागुक्तविषयादिनिर्देश कर्तुं शक्यते। ये खलु "शाङ्करसम्प्रदाय एव व्याससम्प्रदाय" इति मन्यन्ते, तेषां शाङ्करभाष्यमेव व्यासमतानुसारि भाष्यम् इत्यवधारणे न कापि बाधा भवेत्। ये तु अत्र विप्रतिपन्ना, नूनं तेषां कृते स्यात् अनेन न अनावश्यकी एतन्निर्णयचेष्टा।

व्याससम्मतभाष्यनिर्णयस्य दुरवगाहत्वम्

नूनमेतत् कार्यम् अतीव दुरवगाहम्। इयत् दुरवगाह यत स्वयं भगवन्त सूत्रकार विना येन केनापि एतत् कार्यं करिष्यते, तेनैव भ्रमितव्यम्। यत एकस्य चिन्तितं नान्यै सम्यग ज्ञातु शक्यते, सर्वान्तर्यामिणं विना। न ज्ञायते एतस्मादेव कारणात् किं महामहा-पण्डित-सिद्धमहापुरुष-सदृशै आचार्यवृन्दै एतत् ब्रह्मसूत्रग्रन्थभाष्यरचनायां कृतायामपि व्यासाभि-मतसूत्रार्थनिर्णयाय पृथग् वा विशिष्य कश्चित् प्रयासो न कृत। "अयमेव व्यासाभिमत-सूत्रार्थ इतोऽन्यो न कश्चित् अर्थ सम्भवेत्' इत्येव किमपि प्रयत्नाधिक न तै कृतम्।

शङ्करवृत्तिकारयो सम्बन्ध

विभिन्नभाष्यसन्दर्भसन्दर्शनेन सर्वेषां मनसि ईदृशी चिन्ता स्वाभाविकी। यत शाङ्करभाष्ये दृश्यते भगवद्भाष्यकृता शङ्कराचार्येण ततोऽपि सुप्राचीनवृत्तिकारस्य व्याख्यानं बहुषु स्थलेषु खण्डितम्, तदर्थं युक्तिरपि प्रदर्शिता, यथा आनन्दमयाधिकरणे दृश्यते। परन्तु वृत्तिकारात् प्राचीन व्याख्यानम् अवलम्ब्य नैतत् कृतम्। तथैव शङ्करभगवत प्राक्तनानां बोधायनोपवर्षादीनां मतम् अनुवर्तमाने शङ्कराचार्यपरभाविकै भास्कर-रामानुजादिभि आचार्यै सह यत्र अधिकरण-पूर्वोत्तर-पक्षविभागादिषु सूत्रार्थनिर्णये च शङ्करभगवतो मतभेदो दृश्यते, तत्र फलत बोधायनादिभि सह शङ्करभगवतोऽपि मतभेद सञ्जात—इति कल्पयितु शक्यते, तथा सति तत्र बोधायनादीनां वाक्यम् अवलम्ब्य पतोद्द्यानभीष्टमतनिरसन शङ्करभगवता कर्तुमुचितम् आसीत्, परन्तु तेन नैतत् कृतम्। न वा भास्कर-रामानुज-परवर्तिभि शाङ्करभाष्यटीकाकृद्भि कैरपि एतत् समाचरितम्, येन शङ्करभगवतस्तत्र तथैव आशय आसीत्—इत्यपि अनुमातु शक्येत। एव वृत्तिकृन्मतखण्डनस्थले ततोऽपि प्राचीनभाष्यादिक प्रमाणतया प्रदर्शनीयमेव आसीत्, तदपि न भाष्यकृता कृतम्—इति तु प्रागेव उक्तम्। तात्त्विक-मतभेद-निरसनाय केवलम् एकस्मिन् स्थले वृत्तिकृतोऽपि प्राचीनतर-स्वसम्प्रदाय-प्रवर्तक-शुकशिष्य-गौडपादाचार्य-

प्रणीतमेकं कारिकावाक्यमुद्धृत्य प्रमाणत्वेन उपन्यस्तं शङ्करभगवता। परन्तु बहुषु स्थलेषु नैतत् कृतम्। अन्यत्र भगवदुपवर्षाचार्यस्य वाक्यमुद्धृत्यैव विरुद्धमतं निराकृतम्। एवं च पूर्वाचार्याणां मतं तेषां वाक्यावलम्बनेन न स्थापितं, न वा ततोऽपि पूर्वाचार्यवचनप्रमाणैः खण्डितं भगवत्पादैः। एतस्य को हेतुरिति नैव बोद्धुं शक्यते।

## वृत्तिकारादीनां नामानुल्लेखकारणम्

अथ किं ब्रह्मसूत्रस्य प्राचीनवृत्तिभाष्याणां तदा विलोपः सञ्जातः, अतः शङ्करभगवतः तेषां सम्यक् उपलम्भो नाभवत्, तेन तेषां वचनादिप्रमाणं नोपस्थापितम्, अथवा सुलभत्वाद् अतिप्रसिद्धत्वाद् अनावश्यकत्वाद् वा, तेषां भाष्यादीनां मतानां च अनुकूलवचनादिकं न प्रदर्शितम्, अथवा भास्कर-रामानुजादीनां व्याख्यानं बोधायनोपवर्षादिप्रणीत-प्राचीनवृत्तिभाष्यानुगं न भवति, अतः शाङ्करभाष्यस्य तत्परवर्त्ति-भास्कर-रामानुजादिभाष्यैः सह विरोधेऽपि बोधायनोपवर्षादिप्रणीत-प्राचीनभाष्यादिभिः सह अविरोधात् शाङ्करभाष्ये बहुषु सूत्रव्याख्यानादिस्थलेषु भास्करादीनां मतबीजखण्डनार्थं स्वबुद्ध्युद्भावितं तर्कादिकं सन्निवेशितम्, भास्कर-रामानुजादि-मतोपजीव्यत्वेन प्रथितबोधायनोपवर्षादीनां वाक्यानि प्रमाणत्वेन न प्रदर्शितानि भाष्यकृद्भगवता, असम्बद्धत्वाद् असम्भावितत्वाच्च इति निर्णेतुं न शक्यते। शाङ्करभाष्ये पूर्वपक्षत्वेन उपन्यस्तानां मतवादानां प्रायेण भास्कर-रामानुजादिभिः सिद्धान्तरूपेण परिग्रहः कृतः। ते खलु मतवादा न सर्वत्र बोधायनोपवर्षादीनां सम्मता—इति शाङ्करभाष्यटीकादिभ्य उपलभ्यते। यतः शाङ्करभाष्ये वृत्तिकार-मतखण्डनस्थले भाष्यटीकाकृद्भिः तन्नाम्नः सर्वत्र समुल्लेखः कृतः, अन्यत्र न इति दृश्यते। अतः शाङ्करभाष्ये पूर्वपक्षत्वेन उपन्यस्तानां मतवादानां कियन्तो मतवादा अपरैः पूर्वाचार्यैः उद्भाविताः, कियन्तो वा बोधायनोपवर्षादिभिः प्रकल्पिताः, कति वा भाष्यकृद्भिः स्वयं समुद्भाविता इति निर्णेतुं न शक्यते। अतो बोधायनोपवर्षादिभिः सह भास्कर-रामानुजादीनां सम्बन्धो यथा दुर्निर्णेयः तथा वृत्तिकारादीनामपि इत्येव गम्यते।

## भास्करादीनां भाष्यप्रामाण्यविवेचनम्

अथ पुनः यथैव शङ्करभगवता वृत्तिकार-मतखण्डनाय प्राचीनतर-वृत्तिभाष्यकृतां वाक्यादिकं न प्रदर्शितम्, तथैव शङ्कर-परभविक-भाष्यवृत्तिकृतोऽपि भास्कर-रामानुजादयः अधिकरण-विभागादिविषये सूत्रार्थनिर्णये च शाङ्करभाष्येण सह यत्र भिन्नमतावलम्बिनोऽभवन्, तत्र शाङ्करव्याख्यानादिखण्डनाय शङ्करपूर्ववर्त्ति-भाष्यादिकं न तैः प्रमाणत्वेन प्रदर्शितम्। भास्कराचार्यः रामानुजाचार्यश्च शङ्कराविर्भावानन्तरं शाङ्करभाष्यप्रतिवादम् अतिप्रबलतया कृतवन्तौ, तथापि उक्ताधिकरण-विभागादिषु तौ आचार्यवर्यौ शङ्करं नानुसरन्तौ अपि शङ्कर-पूर्ववर्त्ति-भाष्यादि-प्रमाणेन शाङ्करव्याख्यानं न खण्डितवन्तौ, स्वावलम्बिताधिकरणविभागादीन् एव सर्ववादिसम्मतान् इव कृत्वा तौ स्वमतेन विवृतवन्तौ एव। एतस्यापि को हेतुरिति नैव बोद्धुं शक्यते।

### रामानुजादीनां वृत्तिकारानुसरणे संशयः

रामानुजाचार्येण वृत्तिकारवाक्य सकृद् द्विर्वा उद्धृतम्, तदपि साक्षाद् वृत्तिकारवाक्य न वेति सन्दिह्यते। यामुनाचार्यादिभिः यद् वृत्तिकार-वाक्यत्वेन वर्णितम्, तदेव नूनं रामानुजाचार्येण उद्धृतम्। भास्कराचार्येण तु एकमेव उपवर्षवाक्यम् उद्धृतम्। तत्रापि सन्देहावसरो वर्त्तते। अत ताभ्यां वृत्तिग्रन्थो न दृष्ट—इत्येव प्रतीयते। रामानुजाचार्येण स्पष्टतया उक्तम्—"विस्तीर्णां बोधायनवृत्तिं पूर्वाचार्याः संचिक्षिपुः, तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते' इति। यदि तेन बोधायनवृत्ति दृष्टा स्यात्, तदा तेन "तन्मतानुसारेण" इति न लिखितं भवेत्, अपितु तेन "तदनुसारेण" इत्येव लिखितं स्यात्। अतो भगवता रामानुजाचार्येण बोधायनवृत्ति न उपलब्धा इत्येव स्पष्टतया प्रतीयते।

### भास्करादीनां वृत्त्यनुसारित्वे संशय

भगवता शङ्कराचार्य्येण तु वृत्तिग्रन्थो दृष्ट एवेति सम्भाव्यते। यतस्तेन मतभेदस्थले आदितोऽन्तपर्यन्तं सर्वत्र भाष्ये वृत्तिकारमतं निरस्तम्। यत्र तेन वृत्तिकारमतं न खण्डित, तत्र वृत्तिकारेण सह शङ्करभगवत ऐकमत्यमेव आसीत्—इत्येव अनुमीयते। वृत्तिग्रन्थम् अनवलोक्य भाष्यमध्ये आदित अन्तपर्य्यन्त तन्मतखण्डनं न सम्भवति। तेन भास्कर-रामानुजादीना यत् सूत्रव्याख्यानं तद् वृत्तिकारविरुद्ध शाङ्करसूत्रव्याख्यानमेव, अथवा शङ्कर भगवत्सयुक्त वृत्तिकारव्याख्यानमेव। अत तैर्वर्णितं यद् वृत्तिकारमतं तत् शङ्करवर्णितवृत्तिकारमतमेव। तेषां वृत्तिकाराभिमत-सूत्रार्थोपलम्भमूल शाङ्करभाष्यमेवेति प्रतिभाति। भास्कर रामानुजादयो वृत्तिग्रन्थम् अनुपलभ्य यथा शाङ्करभाष्यत एव वृत्तिकारमतं तन्मतेन सूत्रार्थादिकं च विदितवन्त—इति वक्तु शक्यते, न तथा शङ्करभगवान् वृत्तिग्रन्थम् अनुपलभ्य वृत्तिग्रन्थाद् अन्यत कुतश्चित् भाष्यान्तरतो वृत्तिकारमतं तन्मतेन सूत्रार्थादिकं च अधिगतवान्—इति कल्पयितुं शक्यते। तेन भास्कर-रामानुजादीनां मतं सूत्रव्याख्यानं च सर्वथा वृत्त्यनुसारि—इत्यत्र न निश्चय।

### व्यासवृत्तिकारयो सम्बन्ध

तथैव वृत्तिकारमतमेव व्याससम्मतम् इत्यपि वक्तुं न कोऽपि समर्थो भवेत्, वृत्तिकारेण सह व्यासस्य एतदनुकूलसम्बन्धाभावात्। वृत्तिकारस्य ऋषित्वकल्पनमपि न तत्र आनुकूल्यं विदधाति, ऋषीणामपि मतभेददर्शनात्। अत कतमत् सूत्रव्याख्यानं व्यासमतानुसारि इत्यस्य निर्णय सुदूरपराहत एवेति प्रतिभाति।

### व्यासमतस्य दुर्निर्णेयत्वे हेतु

किं बहुना, व्यासमतवर्णनम् एवमेव सुदुष्करं विवादास्पदीभूतञ्च, यत् सूत्रकृता साक्षादुपदेशं विना कृत सूत्रार्थो न सर्वै स्वीकरणीय—इति भास्करादिभाष्यकृद्भि सर्वै अव-

धारितम्। अत्र मुख्यकारणञ्च एकं यद् वर्त्तते, तद् ग्रन्थकर्त्तुः ग्रन्थमध्ये विषयसन्निवेशो न केवलं युक्तिम् अनुसरति, किन्तु ग्रन्थकर्त्तु. इच्छामपीति। अतो भगवद्व्यासाद् अन्यै. व्यासमतनिर्णयः अतीव दुष्करो भवति। अतएव "एतदेव व्यासमत नान्यत्" इति न केनापि अवधारयितुं शक्यम्। वस्तुतस्तु एकस्मात् सर्वज्ञाद् ईश्वराद् अन्यः कोऽपि सम्पूर्णतया सर्वज्ञो न भवितुम् अर्हति। तेन अन्य. अपरस्य हृद्गताशयम् आविष्कर्त्तुं न सर्वथा सम्पूर्णतया समर्थो भवेत्। अत. सिद्धमहापुरुषाणाम् अवतारकल्पानाम् आचार्याणाम् अपि व्यासमतनिर्णयः अतीव दुःसाध्यः इत्यत्र सन्देहावसरो नास्ति, का कथा स्वमत-प्रख्यापनार्थिनाम् व्याससम्प्रदायवहिर्भूतानां भाष्यकर्त्तृणाम् इति प्राचीनभाष्यकर्त्तारोऽपि विदितवन्तः।

### व्याससम्मतभाष्यनिर्णयसम्भावनाहेतुः

तथापि ब्रह्मसूत्रस्य सूत्रकाराभिमतार्थनिर्णये नैराश्यं न भजनीयम्। यतो ग्रन्थरचनायां विषयसन्निवेशक्रमादिकमेव ग्रन्थकारस्य सर्वथा इच्छाधीनं भवति। विषयादिकं तु प्रायेण युक्त्यधीनमेव। ततश्च ग्रन्थरचनाया ग्रन्थकर्त्तु. इच्छानुसारि-विषयसन्निवेशादिमध्ये युक्तिभागोऽपि संगतो भवति। अस्य व्याससूत्रस्य तादृशयुक्तिभागमात्रम् अवलम्ब्य अस्माभिरपि व्याससूत्रस्य व्यासाभिमतार्थः निर्णेतुं शक्यते। युक्तिः खलु सर्वेषां सम्पत्ति., युक्त्यनुसरणं हि अस्माकं स्वभावः, सा तु न इच्छाधीना, इच्छया न युक्तेः सामर्थ्यम् अन्यथाकर्त्तुं शक्यते, अतो युक्तिसहायैः अस्माभि व्याससूत्रस्य युक्तिमूलकाभिप्रेताशाः तथा तस्य इच्छामूलकाशा अपि कथञ्चित् आविष्कर्त्तुं शक्येरन्। उपक्रमोपसंहारादि-षडविधतात्पर्य-निर्णायकलिङ्गै. सर्वेषां ग्रन्थानां तात्पर्यनिर्णयः सम्भवति। व्यवहारोऽपि तथैव दृश्यते। एवं च एतादृशभागद्वयं निरूप्य एतेनैव उपायेन व्याससूत्रस्य व्यासाभिमतार्थनिर्णयप्रयासो न व्यर्थो भवेत् कथञ्चन। एवं रीत्या सूत्रार्थनिर्णये कृते व्यासेच्छामूलक-सूत्रार्थमध्येऽपि संशय-विपर्ययादीनां सम्भावना स्वल्पा एव अवशिष्येत। अतो विषयसन्निवेशादिरूप-व्यासाभिमताधिकरणविभागादि-समालोचनेन तथा तात्पर्यनिर्णायकलिंगबलेन सूत्रार्थनिर्णये अस्माक नैराश्य न शोभनम्, परस्परविरुद्धभाष्याणि एव अत्र सहायतां गमिष्यन्ति।

### निबन्धरचनाया प्रवृत्तिहेतु

नूनं मादृश-स्वल्पबुद्धीनाम् एतादृश कर्म सुतराम् अशोभनं, किमधिकम् असङ्गतमेव। तथापि एतदर्थं योऽयं मे प्रयत्न, तस्य अयमेव आशयः यदि ममेमां व्यर्थचेष्टां दृष्ट्वा असन्तोषवशात् अनुकम्पावशाद् वा कोऽपि महात्मा विषयेऽस्मिन् प्रवर्त्तेत, स यदि ब्रह्मसूत्राणां व्याससम्मतार्थनिर्णयकार्ये प्रवृत्तो भवेत्, तदैव अहं सफलप्रयासो भवेयम्। यतस्तदा कदाचित् व्यासाभिमतसूत्रार्थनिर्णय. पूर्णतां प्राप्नुयात्।

### ग्रन्थनामादिनिर्णयप्रस्तावः

एतदर्थम् आदौ अस्माभिर्द्रष्टव्यम्—एतद्ग्रन्थस्य किं नाम भवितुम् उचितम्, कथम् एतस्य ब्रह्मसूत्रं नाम सम्भवत्, कश्च ग्रन्थकर्ता, को वा अस्य प्रतिपाद्यविषय इति। यतो भगवद्व्यासेन कुत्रापि सूत्रमध्ये एतस्य नामादिकं न सन्निवेशितम्। दृश्यते च ग्रन्थोऽयं बहुभिर्नामभिः प्रचलितो लोके। यथा—भिक्षुसूत्रम्, ब्रह्मसूत्रम्, शारीरकमीमांसा, ब्रह्ममीमांसा, शारीरकसूत्रम्, व्याससूत्रम्, वेदान्तदर्शनम्, उत्तरमीमांसा चेति। ततश्च ग्रन्थकर्तृनिर्णयेऽपि महान् मतभेदो वर्तते। केषांचिन्मतेन ग्रन्थोऽयं बादरायणव्यासेन प्रणीतः, अन्यैरुच्यते—अयं कृष्णद्वैपायनव्यासप्रणीत इति। बहुभिर्मन्यते तौ द्वौ अभिन्नौ पुरुषौ, अन्यैश्च तयोर्भेद एव अनुमन्यते। पाश्चात्यमताश्रयैः आधुनिकैश्च बहुभिर्मन्यते—गौतमबुद्धपरभविकेन केनचिद् व्यासनामधारिणा ग्रन्थोऽयं विरचित इति। अस्य प्रतिपाद्यविषयेऽपि तथैव मतभेदो दृश्यते। केषांचिन्मतेन अस्य प्रतिपाद्यं ब्रह्मज्ञानम्, अन्येषां—ब्रह्मोपासनम्, अपरेषां च उभयमेव। एवञ्च एतद्ग्रन्थविषये बहवो मतभेदा वर्तन्ते। अत एतद्विषयादिकम् आदावेव अस्माभिर्निरूपणीयम्।

### ग्रन्थरचनाकौशलनिर्णयप्रस्तावः

ततश्च द्रष्टव्यम्—ग्रन्थस्यास्य कीदृशं रचनाकौशलमिति। अत्र ये अध्यायपादाधिकरण-सूत्रविभागा दृश्यन्ते, तत्र कीदृशं कौशलम् अवलम्बितं सूत्रकृद्भगवता? पूर्वोत्तर-पर्वीय-सूत्ररचनायां च कौशलं कीदृशम् अनुसृतम्? एतेषाम् अध्याय-पादाधिकरणानां प्रतिपाद्य-विषय-निर्णयोपायश्च कीदृशः? एतस्य ग्रन्थस्य रचनाकौशल-निर्णयावसरे सर्व एते विषया निर्णेयाः। यत एवंप्रकारेण अस्य रचनाकौशले आविष्कृते सति अस्य सूत्रार्थ-निर्णयश्चापि सुगमो भविष्यति। तथा सति अस्य सूत्रार्थनिर्णये सूत्रार्थनिर्णेतॄणां स्वेच्छाचारिता स्वातन्त्र्यं वा न सम्भविष्यति, भाष्य-वृत्तिकृतामपि कतमः कियत्परिमाणं व्यासमतानुसारी इत्यपि बोद्धुं सर्वं शक्यम्। सर्वे व्याख्यातारः प्रायेण मतविशेषं मनसि निधाय तदेव मतविशेषं प्रतिपिपादयिषवः सन्तः सूत्रार्थं वर्णयाञ्चक्रुः, न तु सूत्राक्षरानुसारेण सूत्रार्थं प्रादुष्कृतवन्तः। परन्तु नैष सूत्रार्थनिर्णये सम्यक् पन्थाः। सूत्राक्षरानुसारेण सूत्रार्थनिर्णये कृते सति सूत्रार्थनिर्णयः सुष्ठु भवेत्, सूत्रकाराभिप्रायश्च सफलो भविष्यति, श्रुत्यर्थोऽपि विनिर्णीतो भवेत्।

### अलौकिकविषये वेदप्रामाण्यम्

एतदर्थम् अस्माभिरादौ मुख्य एको मीमांसादर्शनसिद्धान्तः स्मर्तव्यः। स च अस्मिन् ब्रह्ममीमांसाग्रन्थेऽपि उपयुज्यते। यतः कर्ममीमांसा ब्रह्ममीमांसा च इति ग्रन्थद्वयं श्रुत्यर्थनिर्णयार्थं जैमिनि-व्यासमुनिभ्यां रचितम्। तेन बहवः सिद्धान्ताः, ये कर्ममीमांसायाम् उपयुक्ताः, तेऽपि ब्रह्ममीमांसायामपि अवलम्बनीयाः। तयोः अयमेकः सिद्धान्तः—यत्, एकस्मात् ईश्वराद्

वेदाद् वा अन्यो न कोऽपि सम्पूर्णतया सर्वज्ञो भवितुम् अर्हति। देवता वा ऋषिर्वा मनुष्यो वा वेदज्ञानं विना न कोऽपि सम्पूर्णतया सर्वज्ञपदवीम् आरोढुं शक्नोति। अपौरुषेयः तथा अभ्रान्तः अयमेव वेदो यागादिरूप-कर्मसु तथा निर्विशेषाद्वैतब्रह्मणि एवम् अलौकिकविषयेषु एकमेव प्रमाणम्। अलौकिकविषयेषु वेदादन्यो न कोऽपि प्रमाणत्वेन गण्यते। वेदभिन्नानि यानि प्रमाणानि प्रत्यक्षादीनि तानि चेत् वेदानुकूलानि, तदैव प्रमाणानि भवन्ति, न तु तानि स्वतन्त्रतया अनयो. कर्म-ब्रह्मविषययो' प्रमाणानि भवन्ति। कर्ममीमांसाया अयमेकः सिद्धान्तो ब्रह्ममीमासायामपि गृहीत. अस्ति। अत. अलौकिकविषये वेदा एव प्रमाणम्।

### धर्मब्रह्मणोः वेदैकप्रमाणगम्यत्वम्

वस्तुतस्तु युक्तिरपि इमं सिद्धान्तम् अनुगृह्णाति समर्थयति च। यतो यागादिकम् अद्वैतब्रह्म च न लौकिकविषयौ भवतः। लोकैः स्वातन्त्र्येण एतयोः अस्तित्वमपि कल्पयितुं न शक्यते, वेदभिन्नेन केनापि उपायेन एतयोः स्वरूपम् अवगन्तुं न पार्यते। यत "एतन्मन्त्रेण अनुष्ठितस्य यागस्यास्य एतत फलम्" स्वातन्त्र्येण एतत् कल्पयितुम् अनुसन्धातुश्च न कस्यापि प्रवृत्तिर्भवितुम् अर्हति। तथैव सर्वविध-विशेष-विरहितम् अप्रमेयम् अद्वैतब्रह्मवस्तु न कस्यापि कल्पनाविषयो भवति। कल्पना हि दृष्टानुरूपा, दृष्टविपरीतं कल्पनं न कस्यापि मनसि उदेति। निर्विशेष-ब्रह्मवस्तु हि सर्वथा दृष्टविपरीतम्। अतः सर्वविशेष-विरहितं ब्रह्मवस्तु सर्वेषा दृश्यानाम् अदृश्यानाञ्च मूलं कारणं भवेदिति न कोऽपि कल्पयितुम् इच्छेत् शक्नुयाद् वा। तेन कर्म च ब्रह्म च उभयमपि सर्वथैव अलौकिकं वस्तु। अनाद्यपौरुषेयवेदादेव अस्मिन् अलौकिक-विषयसद्भावे अवगते सत्येव अस्य सम्भावनाऽसम्भावने युक्तिविचाराभ्याम् अनुसन्धातुं वय प्रवृत्ता भवेम, अन्यथा एषा अनुसन्धानप्रवृत्तिरपि अस्माकं मनसि न उदीयात्। अतो युक्तिरपि समर्थयते—यत् अलौकिकविषये वेदा एव प्रमाणम्, अन्यानि प्रमाणानि तेषा सहायभूतान्येव इति।

### अलौकिकविषये वेदान्तकर्ममीमांसयोर्भेद

वेदान्ते तु सिद्धान्तोऽयं प्रकारान्तरेण परिगृहीतो दृश्यते। तन्मतेन एक ईश्वर एव सर्वज्ञः, वेदा हि अस्य ईश्वरस्य ज्ञानज्ञापकाः शब्दराशय एव। अयमेव अत्र मीमांसा-द्वयमध्ये एको विशेषः। अपरश्च कर्ममीमासामतेन कर्मविषये वेदा एव प्रमाणम्, अनुमानादिकम् अप्रमाणम्। ब्रह्ममीमांसामतेन तु ब्रह्मविषये वेदा एव प्रमाणम्, अनुमानादिकं तत्र सहकारीति विशेष', ब्रह्मणो भूतवस्तुविषयत्वात्। कर्मणः भूतवस्तुविषयत्वं नास्ति। ततोऽयम् अनयो-र्द्वयोरेकः प्रभेदः। यथोक्तं शाङ्करभाष्ये "न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्म-जिज्ञासायां, किन्तु श्रुत्यादयः अनुभवादयश्च यथासम्भवम् इह प्रमाणम्, अनुभवावसानत्वाद् भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य।" (२य सूत्रभाष्यम्)।

एव तत्त्वोपदेशार्थम् अवलम्बितो भगवता बादरायणेन। एवञ्च अभ्रान्त-तत्त्वोपदेशोऽपि सम्भावितो जात। व्यक्तिविशेषस्य मतावलम्बनेन नायं सम्भवः इति प्रागेव उक्तम्। अतो ब्रह्मसूत्ररचनाया बादरायण-भगवताम् इदमेकम् उद्दिष्टम् आसीत् यत् वेदान्तवाक्येषु आपात-दृष्टविरोधाना निरासमुखेन तत्त्वोपदेश कृतः स्यात्। अतो वेदान्तार्थमीमांसापि ब्रह्मसूत्र-ग्रन्थस्य एकम् उद्देश्यम्, तेनैव तत्त्वोपदेशश्च अस्य एकं रचनाकौशलम्। तथा सति उपनिषदा मध्ये यत्र यत्र तात्पर्यसंशयः प्रायेण बहूना भवति, तत्रत्य-संशयापनोदन-सहकारेण वेदान्त-सिद्धान्त-प्रकाशनमपि ब्रह्मसूत्र-ग्रन्थस्य प्रथमं रचनाकौशलं भवति।

### उपनिषत्सिद्धान्त एव व्यासमतम्

अथ इदमेव चेत् ब्रह्मसूत्ररचनाकौशलं, श्रुत्यर्थनिर्णय एव यदि अस्य उद्देश्यम्, तदा एतदपि वक्तुं शक्यम् अस्य उपलभ्यमानाना बहूना भाष्याणां मध्ये यद् भाष्यं मुख्यतया उपनिषत्-प्रमाणावलम्बनेन औपनिषदार्थ-स्पष्टीकरणाय रचितम्, तदेव भाष्यं व्यासाभिमतं ब्रह्मसूत्राणाम् इति। व्यासाभिमत-सूत्रार्थो न कदापि उपनिषत्-सिद्धान्तविरोधी उपनिषन्मत-निरपेक्षो वा भवितुम् अर्हति। सूत्राणा योऽर्थः उपनिषत्सिद्धान्तानुकूलः, स एव व्यासाभिमत-सूत्रार्थः। व्यासाभिमतं हि न कदापि उपनिषत्-सिद्धान्ताद् अन्यद् भवितुम् अर्हति।

### शाङ्करमतस्य औपनिषदत्वं व्यासानुसारित्वञ्च

मतञ्च एतद् एतादृशदृढतया शङ्करभगवता अवधारितं समाश्रितञ्च, यद् व्याससूत्राणा व्याख्यानकाले, यथा आनन्दमयाधिकरण-व्याख्यायां, तदधिकरणान्तर्गतसूत्राणाम् आपातप्रतीतार्थो-नाम् अन्यथासाधनमपि कृतम्। यतः तत्र सूत्राणाम् आपातप्रतीतार्थानुसरणे श्रुतिसूत्रयोः मध्ये विरोधशङ्का अवश्यम्भाविनी, तत्परिहारार्थं शङ्करभगवता सूत्राणा तम् आपातप्रतीतार्थं परित्यज्य श्रुत्यर्थानुकूलोऽर्थः प्रकटीकृतः, एतेन श्रुत्यर्थमीमांसारूपा श्रुतिसङ्गतिरपि तत्र संरक्षिता। आनन्दस्वरूपस्य ब्रह्मण आनन्दमयत्ववर्णने तु आनन्दधर्मवत्त्वमेव सिध्यति, तन्न श्रुतितात्पर्य्यम्, "आनन्दो ब्रह्मेति व्यजानात्" "विज्ञानमानन्द ब्रह्म" "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" "सच्चिदानन्दं ब्रह्म" इत्यादि श्रुतयः ब्रह्मण आनन्द-मयत्वरूपाम् आनन्दधर्मिताम् अतिस्पष्टतया वारयन्ति। अत सूत्रव्याख्यानकौशलेन शङ्करभगवता तत्र ब्रह्मण आनन्दस्वरूपत्वम् प्रतिपादितम्, श्रुत्यर्थमीमांसारूप-व्यासाभिप्रायश्च प्रकटीकृतः। ततश्च

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" (महा. आ. १म अ. २६७)

इति सर्वसम्मतिम् अनुरुध्य

"तथाऽऽनन्दमयश्चापि ब्रह्मणाऽन्येन साक्षिणा। सर्वान्तरेण सम्पूर्णो ब्रह्म नान्येन केनचित्॥ ४।३।४५
यदिदं ब्रह्मपुच्छाख्यं सत्यज्ञानाद्वयात्मकम्। स रस सर्वदा साक्षान्नान्यथा सुरपुङ्गवा॥" ४।३।४६

(सूतसंहिता पुणा ७०,४ पृ०)

इति सूतसंहितावचनानुकूल्यम् आकलय्यता भाष्यान्तरप्रणेतॄणाम् उपर्युक्तविरोधश्च स्फोरित । वाक्यं च इदं कठरुद्रोपनिषत्स्वपि पठ्यते इति तासामपि आनुकूल्य, सुवर्णे सौगन्ध्यमिव । एवं च शङ्करकृत-व्याससूत्रव्याख्यानेनानेन सूत्ररचनायां व्यासस्य श्रुत्यर्थानुसरणमेव मुख्यम् उद्देश्यं प्रधानं कौशलं वा आसीत्, न तु स्वमतानुसारेण तत्त्ववर्णनं व्यासाभिमेतम्—इत्येव अवगम्यते । अत शङ्करमतस्य यथा औपनिषत्त्वं तथैव व्यासमतानुसारित्वमपि इत्येव पश्यते । एतेन व्यास सूत्रस्य श्रुत्यर्थविप्रकरणमेव लक्ष्यम् आसीत्—इत्यपि निश्चीयते । अत श्रुत्यर्थानुसरणमेव ब्रह्मसूत्ररचनाकौशलम् इति शङ्कराचार्यकृतब्रह्मसूत्रव्याख्यानसन्दर्भेनापि प्रतीयते ।

तत्र प्रतिकूलमतवादिनः समर्थनम् ।

एतदेव प्रतिकूलमतवादिभिश्च समर्थितं इत्यत । यतो बहवो, यथा वाराणसीय पण्डितवर-महामहोपाध्याय-रामभिश्र शास्त्रिमहोदया, तथा तदनुसारिण काशी-संस्कृत-विद्यालयाध्यक्ष-डाक्टर-थिबोप्रभृतय प्रोचु—"ब्रह्मसूत्राणां रामानुजभाष्यमेव सूत्राणां स्पष्टार्थानुगततया व्यासमतानुगतं, शाङ्करभाष्यन्तु वेदान्ततात्पर्यानुकूलम्, न तु सूत्राणां स्पष्टार्थानुसारि, अतो न व्यासमतानुगतम्" इति । शाङ्करभाष्यस्य आङ्लभाषानुवादभूमिकायां डाक्टर-थिबो एतदेव मतं प्रकटीकृतवान् । तद्दर्शनेन तत्र तत्र पाश्चात्त्यभावापन्ना एतद्देशीया विद्वांस एतदेव सत्यमिति अमन्यन्त । तत्र नूनं रामभिश्र थिबोप्रभृतयो विशिष्टाद्वैतवादानुरागिण आसन् । ते खलु अद्वैतमत विघातेन स्वमतपरिपोषणार्थं तथैव प्रोक्तवन्त इत्येव प्रतिभाति । परन्तु एतेन तै अनिच्छद्भिरपि शाङ्करभाष्य व्याससम्मतत्वेन अनुमोदितम् । यतो व्याससूत्राणि श्रुत्यर्थमीमांसामुखेनैव तत्त्वोपदेशार्थं विरचितानि इत्यपि तै प्रतिपादितम् । सत्यं खलु एवमेव स्वय प्रकाशते । एव च अनुकूलमतवादिभि शाङ्करमतविरोधिमतवादिभिश्च सर्वै एतत् स्वीकृतं भवति—यत् श्रुत्यर्थमीमांसाद्वारा तत्त्वोपदेश एव ब्रह्मसूत्रविरचने सूत्रकृताम् अभिप्राय । अत श्रुत्यर्थानुसरणमेव मुख्यतया ब्रह्मसूत्ररचनाकौशलम् ।

स्मृतौ श्रुतिवत् प्रामाण्यशङ्कानिरास

तत्र केचित् प्राहु—शङ्करभगवतो यत् सूत्रार्थान्यथाकरणं तत् अनवद्यतम्, यत स्मृतिरपि प्रमाणं भवति । यथोक्तम्—"श्रुति स्मृति सदाचारश्चायो धर्मस्य लक्षणम्" इति । भगवदवतारो व्यास ईश्वरवत् सर्वज्ञ, तन्मतञ्च स्मृतिरेव । तेन तन्मतमपि श्रुतिवत् प्रमाणं कथं न भवेत् ? अत श्रुत्यर्थानुरोधेन शङ्करभगवतो यत् सूत्रार्थान्यथाकरण तन्न समीचीनम् । व्यासमतमपि श्रुतिवत् समादरणीयमेव इति । एतत् तु नैव वक्तु शक्यते, यत "श्रुतिस्मृति-विरोधे तु श्रुतिरेव गरीयसी" इत्येव शास्त्रनिर्णय । भगवता व्यासेनापि स्वग्रन्थमध्ये द्वितीयाध्यायस्य प्रथमपादस्य प्रथमसूत्रे "स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाश दोषप्रसङ्गात्" इत्यत्र सर्वज्ञ-कपिलस्मृति-सिद्धान्त-निरसनावसरे इदमेव सिद्धान्तितम् । अतो

वेदाविरुद्धस्मृतिरेव प्रमाणम्। तेन व्यासमतमपि यदि श्रुतिविरुद्ध भवेत्, तदपि नादरणीयं भवितु युक्तम्। अतो व्याससूत्रग्रन्थे यत्र येषां सूत्राणाम् आपातप्रतीयमानोऽर्थ श्रुत्यर्थविरुद्धत्वेन प्रतीयते, तेषाम् अन्यथाव्याख्यान शङ्करभगवत. सङ्गतमेवेति प्रतिभाति। एतेन यथा छात्रेण गुरो. दोषाच्छादन क्रियते, येन स छात्रपदवाच्यो भवेत्, तथा शङ्करभगवता स्वगुरोरपि गुरो व्यास-भगवत शङ्करसम्प्रदाय-प्रवर्त्तकस्य तत्कृतसूत्रेषु आपात-प्रतीत न्यूनतापरिहारः कृत, अथवा भगवत. व्यासस्य स्वेच्छाकृत-ग्रन्थग्रन्थि श्लथीकृत एव इति सिद्धम्। अतः सूत्राणां क्वचित् क्वचित् आपातप्रतीतानाम् अर्थानाम् अन्यथाकरणं शङ्करभगवत. समुचितमेवेति प्रतिभाति। नैतत् तस्य दोषाय भवितुम् अर्हति कथञ्चन।

### शवरादिना सूत्रान्यथाकरणसमर्थनम्

नापि शङ्करभगवत एतदाचरणम् अनन्यसाधारणम्। जैमिनीय-कर्ममीमांसायाम् उपवर्षवृत्तौ शवरभाष्ये च जैमिनीयसूत्राणां श्रुत्यर्थानुरोधेन वृत्तिभाष्यकृद्भि अन्यथाकरण दृश्यते। "लोके येषु अर्थेषु प्रसिद्धानि पदानि, तानि सति सम्भवे तदर्थानि एव सूत्रेषु इति अवगन्तव्यम्" इत्युक्त. भाष्यकृता शवरस्वामिना। व्याख्यातञ्च एतत् भगवता वार्त्तिककारेण भाष्योपोद्घाते

"वैदिकं जैमिनीयञ्च यत्र वाक्य विरुध्यते। यथाश्रुतगृहीतेऽर्थे तत्रेदमुपदिश्यते ॥
अध्याहारादिभि. सूत्रं वैदिकञ्च यथाश्रुतम्। नेय, विरोधेऽन्योन्यस्य वैदिकाना भवन्तु ते ॥"

इत्यादिकं द्रष्टव्यम्। अत्र सुचरितमिश्रटीकापि द्रष्टव्या। शङ्करभगवता एतस्यैव अनुसरणं कृतम्, नान्यत नवीन किञ्चिदपि समाचरितम्। किमु वक्तव्यम् शाङ्करभाष्यस्य मीमांसाभाष्यानुसृतय सर्वे शवरस्वामिपादानाम् लेखशैलीम् अनुसृत्यैव। अत. एतदाचरण शङ्कर-भगवतो न दोषाय भवति।

वस्तुतस्तु शङ्करभगवता व्याससम्मतसूत्रार्थ एव प्रकटीकृत, यत तेन न कुत्रापि एवं प्रतिपादितं, यत् सूत्रकृताम् अयम् आशय, मया तु एवम् अन्यथा उच्यते इति। अत इदं स्वीकर्त्तव्यं यत् यदेव श्रुत्यभिमतं तदेव व्यासेन सूत्रितं, यदेव च व्यासाभिमतं तदेव भाष्यकृता भाष्यमुखेन विवृतम् इति न कस्यचिद् आक्षेपस्य अवकाश ।

श्रुत्यर्थानुसरणमेव सूत्ररचनाया कौशलम्

अत श्रुत्यर्थानुरोधेन व्याससूत्राणां आपातप्रतीयमानार्थस्य अ यथाकरण यथाप्रयोजनं समुचितमेव प्रतिभाति, तेन श्रुत्यनुसारेण तत्त्वोपदेशप्रदानमेव व्याससूत्ररचनायां सूत्रकृद्भगवत मुख्यमेकं कौशलम् इत्यत्र न सन्देहावसर कश्चिदपि वर्तते। लौकिकालौकिकविषयेषु सर्वत्र पौरुषेयत्वकल्पनम् अवैदिकानां पाश्चात्त्यानामेव शोभते। अतो ब्रह्मसूत्रेषु स्वतन्त्रस्य व्यासमतस्य अनुसन्धानं प्रतिपादनञ्च तेषामेव शोभनं, न तु अस्माकम् वेदापौरुषेयत्ववादिनाम्। अत श्रुत्यनुसारि-व्याख्यानमेव व्यासस्य सम्मतम्। श्रुत्यर्थानुसरणमेव सूत्ररचनाया कौशलम्।

सूत्रेषु व्यासमतानुप्रवेशाशङ्कानिरास

तत्रापि केचिन्मन्यन्ते—व्यासेन भगवता स्वकीयब्रह्मसूत्रमध्ये केवल वेदान्त सिद्धान्तानुसरणं कृतम्, तत्र तस्य तप सिद्धस्वानुभवस्य लेशोऽपि न प्रविष्ट—इत्यत्र किं प्रमाणम्? तस्मिन् अलौकिकब्रह्मतत्त्वविषये सूत्रकृता उपनिषदतिरिक्त प्रमाणं स्वानुभवरूप-योगिप्रत्यक्षादिक न किञ्चिदपि उपन्यस्तम्—इत्यत्र किं गमकम्? अत सूत्रकृन्मतमपि तत्र प्रदर्शितम्—इत्येव समीचीनकल्पनम्। तथा हि सर्वैं सर्वं न समानाकारं गृह्यते। यद् यस्य ज्ञातं भवति, तद् तस्य भावविशेषानुविद्धं सद् गृहीत भवेत्। धर्ममेकं दृष्ट्वा यज्ज्ञानं जायते, तन्न सर्वेषां समानाकारं भवति, कश्चित् तं हेयम् अन्य उपादेय मन्यते। यथोक्तं—

"गजत्रातेति वृद्धाभि श्रीकान्त इति यौवते।
यथास्थितश्च बालाभि दृष्ट शौरि सकौतुकम्"॥ इति।

एवं वेदान्तेषु यद् ब्रह्म उपदिष्टं भवति, तत्र केषाञ्चित् द्वैतबुद्धि, अन्येषाम् अद्वैतबुद्धि, अपरेषां विशिष्टाद्वैतबुद्धि उदेति। कर्मोपासनविषयेऽपि तथैव बुद्धिभेदो भवत्येव। तेन व्यासस्यापि वेदार्थ-विषयिणी या बुद्धि, सापि तस्य संस्कारानुरूपैव भविष्यति। संस्कारं विहाय न कापि सामान्याकारा बुद्धि उदेति कुत्रचित्। अतो वेदान्तार्थम् अनुसरतापि भगवता व्यासेन ब्रह्मसूत्रमध्ये तस्य स्वमतमेव वर्णितम्। तेन ब्रह्मसूत्र वेदान्तार्थनिर्णये व्यासमतमेव, नान्यद् भवितुम् अर्हति, ब्रह्मसूत्र न केवल वेदान्तार्थावलम्बनेन वेदान्तसिद्धान्तप्रदर्शनार्थं रचितम् इति वक्तु शक्यते।

नैतद् युक्तम्। यत सर्वत्र ज्ञेयवस्तुषु धर्मद्वय दृश्यते, ज्ञेयनियतम् आपेक्षिक च। यथा, घटे घटत्वं ज्ञेयनियतम्, क्षुद्रत्वमहत्त्वादिक हेयोपादेयत्वादिकं वा परापेक्षम्। तत्र घटत्वे

सर्वेषाम् ऐकमत्यं दृश्यते। द्वैतवादौ तु ज्ञानभेदः प्रसिद्ध एव। तेन वेदान्तानाम् अद्वैतब्रह्मणि यदि तात्पर्य्यं स्यात्, तदा तत्र अद्वैतबुद्ध्युदय एव समुचितः, तत्र कश्चित् संस्कारानुप्रवेशः न कल्पनीयः। ज्ञानधीनधर्मेण न वस्तुस्वरूपान्यथा-कल्पनं युक्तम्। एवं यदि वेदान्तानां द्वैतब्रह्मणि वा विशिष्टाद्वैतब्रह्मणि वा तात्पर्य्यं स्यात्, तदा तथैव तत् कथं न प्रतिभायात्? एवं कर्मोपासनादिविषयेष्वपि बोद्धव्यम्। संस्कार-प्रभावेण न कोऽपि घटं पटयितुम् ईष्टे। संस्कारानुप्रवेशवशात् न वस्तुस्वरूपान्यथात्वं भवति। अथ चेद् एवं कथञ्चिदपि भवेत्, तदा अविदुषामेव तथा भाव्यम्, न तु प्रेक्षावतां विचारशीलानाम्; का कथा व्यासादीनां निर्मलबुद्धीनां भगवदवताराणाम् ऋषिप्रभृतीनाम्। अतो व्याससूत्रमध्ये केवलं वेदान्तसिद्धान्तवर्णनं सूत्रकृता पक्षे न असम्भावितम्। सूत्रकृतापि द्वितीयाध्याय-प्रथमपादस्य श्रुत्यर्थनिर्णयाय सर्वत्र श्रुत्यर्थानुसरणं कर्त्तव्यम् इति मत्वा सर्वज्ञ-भगवत्-कपिलमतस्य निरवकाशत्व-शङ्कायाम् "अन्यस्मृत्यनवकाशदोषप्रसङ्गः" (२।१।१) इत्युक्त्वा वेदान्तार्थे पौरुषेयत्व-गन्धलेशानुप्रवेश-शङ्कापि निवारिता। एतेन निश्चीयते वेदान्तार्थ-निर्णायक-व्याससूत्रेऽपि व्यास-मतलेशानुप्रवेश-शङ्कापि न कर्त्तव्या। श्रुत्यर्थनिर्णयार्थं यो लोकवेद-साधारण-नियमो मीमांसकैः आविष्कृतः अवधारितश्च, तेनैव नियमेन श्रुत्यर्थनिर्णयः कर्त्तव्य इत्येव भगवद्व्यासस्य अभिप्रायः। अतो व्याससूत्रमध्ये स्वातन्त्र्येण व्यासाभिमत न किञ्चिदपि वर्त्तते। वेदान्तसिद्धान्त एव तत्र वर्णितः। यथोक्तं भाष्यकृता शङ्करभगवता "वेदान्त-वाक्य-कुसुम-ग्रथनार्थत्वात् सूत्राणामिति।" (१।१।२ सूत्रभाष्यम्)

### व्यासस्य श्रुत्यर्थज्ञानवत्त्वे शङ्कानिरासः

अथात्र कैश्चित् शङ्क्यते किं व्यास एव श्रुत्यर्थम् अधिगतवान्, नान्यः! इत्यत्र किं प्रमाणम्? यतः श्रुत्यर्थमेव अवलम्ब्य ऋषीणां मध्ये मतभेदो दृश्यते। अत एव कल्प्यते श्रुत्यर्थविषये ऋषीणां मध्ये यो मतभेदः, स तु सर्वमान्य-श्रुत्यर्थेषु अपरिहार्य्य-स्वस्वमतानुप्रवेशजन्यः, यतो यदेव अधिगम्यते, तदेव सर्वेषां स्वमत-प्रभाव-प्रभावितं सद् अधिगतं भवति। तेन श्रुतीनां सर्वमान्यार्थ-निर्णयो निश्चितमेव असम्भवी। अतएव व्यासमतमेव तदीय-ब्रह्मसूत्रमध्ये प्रकटीकृतं, स्वेच्छया अनिच्छया वा इत्येव प्रतिभाति इति?

एतदपि न सङ्गतम्। यतः सर्वमान्यश्रुत्यर्थज्ञानं प्रमाण-सापेक्षम्, न तु इच्छासाध्यम्, आकस्मिकं वा। आत्म-संयुक्त-मन संयुक्तेन्द्रियसन्निकृष्टे घटे तज्ज्ञानम् अवश्यम्भावि सर्वेषाम्। यथा घटज्ञाने सर्वघट-साधारणं घटत्वज्ञानमपि भवति, तथा श्रुत्यर्थमध्ये श्रुतितात्पर्य्यरूपेण किञ्चिज्ज्ञानमपि भवत्येव। अतः संस्कार-प्रभाव-विमुक्तं सर्वमान्यं ज्ञानं न असम्भवि। साम्प्रदायिकाग्रह-वर्ज्जनपूर्वकं सत्यानुसन्धित्सामात्रम् अवलम्ब्य यदि कोऽपि एतदर्थं यतेत तेनैतद् उपलम्भनीयम्, नैतत् दुष्करम् असम्भवि वा, तेन व्यासमतमेव ब्रह्मसूत्रमध्ये प्रकटीकृतमिति न कल्पनीयम्।

ऋषीणां श्रुत्यर्थानभिज्ञत्वशङ्कानिरासः

यदि उच्येत—किं तदा कपिल-कणाद-गौतम-पतञ्जलि-जैमिनि प्रभृतयः महर्षयः श्रुत्यर्थविरोधिन आसन्? व्यासेन भगवता यदा तेषां मतानि स्वकीय-ब्रह्मसूत्रमध्ये खण्डितानि, तदा व्यास-मतानुसारेणैव नूनं तेषां मतानि न श्रुत्यर्थानुगतानि, अथवा व्यासमतमेव न श्रुतिसम्मतम्। अत एतदेव वरं, यत् सर्वसम्मत-श्रुत्यर्थ एव असम्भवी।

अत्रेदं वक्तव्यम्—व्यासोक्तमेव सर्वथा श्रुत्यर्थानुगामि—इत्येव समीचीनम्, यतः कपिल-कणादादि-महर्षयः श्रुतिभिन्नं योगिप्रत्यक्षम् अनुमानादिकञ्च जगत् कारण-ब्रह्म-तत्त्व-विनिर्णये प्रमाणत्वेन मन्यन्ते। भगवता व्यासेन तु तत्र श्रुतेरेव प्रामाण्यम् अभाणि। अनुमानादिकञ्च तस्याः सहकारित्वेन गृह्यते। अतो व्यासोक्तं यावत् श्रुत्यर्थानुसारि, न तावत् अन्येषाम् ऋषीणां मतम्। कपिलादीनां मते, अनुमानादीनां ब्रह्मविषये प्रमाणत्वेन गृहीतत्वात् तेषां सिद्धान्तमध्ये स्वाभिमत-प्रवेशो लब्धावसरः सञ्जातः। व्यासमते तु अनुमानादीनां श्रुत्यनुसारित्वेन श्रुतेरेव च प्राधान्येन गृहीतत्वात्, व्यासोक्तश्रुत्यर्थमध्ये पुरुष-बुद्धि-प्रवेशावसरः न कल्पनीयः। एतेन भगवता व्यासेनैव श्रुतेः सिद्धान्तकीर्तनं यथा कृतम्, न तथा अन्यैः कपिलादि-महर्षिभिः। तथापि कपिल-कणादादीनामपि श्रुत्यर्थाविरोधि-ज्ञानवत्त्वं न असिद्धम्, न वा सर्वसम्मत-श्रुत्यर्थ एव असम्भवी।

ऋषीणाम् अभ्रान्तत्वम्

किं तदा सांख्यादि-दर्शनकर्तारः कपिलादि-महर्षयो यथार्थश्रुत्यर्थानभिज्ञाः, भ्रान्ता वा आसन्? व्यासमतस्य श्रुत्यर्थानुकूलत्वात्, व्यासेन च कपिलकणादादिमतखण्डनात्, श्रुतेः अनन्यपरत्वाच्च।

नैतत् कल्पयितुं शक्यते। तेषां भ्रान्तत्व-श्रुत्यर्थानभिज्ञत्व-कल्पनम् अनावश्यकम्। ते खलु प्रत्यक्षादि-प्रमाणानुरागिणां श्रुति-स्वरूपानभिज्ञ-पृथग्जनानां कृते मोक्षमार्गप्रदर्शनार्थं सहज-बुद्धि-ग्रहणोपयोगि यावन्मात्रं प्रयोजनं, तावन्मात्रम् उपदिष्टम्। प्रत्यक्षानुमानादि प्रमाणेभ्यः श्रुतिप्रमाणं बलवत्तरमिति प्राकृतजना न बोद्धुं शक्नुवन्ति, न वा अभिलष्यन्ति। तत्त्वज्ञानं हि मोक्षस्य उपायभूतम्, उपेयस्तु सर्वदुःख-निवृत्तिरूपो मोक्षः। स एव सर्वेषां परमपुरुषार्थः। तत्र ऋषीणां मतभेदः प्रायेण नास्त्येव, योऽप्यस्ति सोऽपि मोक्षस्वीकर्त्तव्य एव, अतः अकिञ्चित्करः। कपिलादयो दर्शनकर्त्तारः सर्वे तत्र अनावृत्तिरूप-दुःख-राहित्यादिविषये अभिन्न-मताव-लम्बिनः। परन्तु उपाय-भूत-तत्त्वविषये अधिकारानुरोधादेव तेषां न ऐकमत्यम्। श्रुतिभिन्न-प्रत्यक्षादि प्रमाणानुरागबाहुल्यात् ते द्वैतवादिनो भवन्ति। सद्-असत्-सदसत्-कार्यवादादिषु तेषाम् अनुरक्तिः प्रभञ्च स्वाभाविकी च। ये तु विशिष्टाद्वैत-द्वैताद्वैतादि-मत-वादिनः, तेऽपि फलतो द्वैतवादिन एव। विशेषण-विशेष्ययोर्भिन्नत्वात्, द्वैताद्वैतयोर्विरुद्धत्वाच्च। तेऽपि अलौकिक-

विषये योगिप्रत्यक्षानुमानादिकं श्रुतिवत् प्रमाणं मन्यन्ते। तेन तेऽपि द्वैतवादि-समानाः प्रत्यक्षादि-प्रमाणशरणाः। वेदान्ते यादृश-सूक्ष्मदृष्टि-चित्तैकाग्र्य-गुरुभक्ति-वैराग्य-शास्त्र-विश्वासादिकं श्रुतितात्पर्यभूत-निर्विशेष-ब्रह्मज्ञानाधिकार-सम्पादनार्थम् अपेक्षितम्, अन्यत्र तादृशम् अनावश्यकम्। तथा च प्राकृतजनानां कृते सानुकम्पा सर्वज्ञ-कपिलादि-महर्षयः तत्त्वविषये श्रुति-निरपेक्ष-प्रमाण-सिद्धानि मतानि प्रचारयामासुः। तेन तेषु मतेषु क्वचित् क्वचित् श्रुत्यननुमत-सिद्धान्तः प्रविष्टः। तेषामेव मतानां व्यासेन भगवता स्वकीयब्रह्मसूत्रग्रन्थमध्ये खण्डनं कृतम्। अतस्तेषां कपिल-कणादादि-महर्षीणां भ्रान्तिकल्पनं श्रुत्यर्थानभिज्ञत्वानुमानं वा नैव युक्तम्। न वा सर्वसम्मतश्रुतिसिद्धान्तनिर्णयः असम्भवः।

### प्रत्यक्षादीनां श्रुतिवत् प्रमाणत्वशङ्कानिरास.

अथ चेत् मतम्- श्रुतिवाक्यतः श्रुत्यर्थनिर्णये प्रत्यक्षानुमानादि-प्रमाणानां यथा प्रयोजनं भवति, तथा श्रुतिप्रतिपाद्यविषयेऽपि तेषां प्रयोजनं भवत्येव। तेन श्रुतिप्रतिपाद्ये अलौकिकविषयेऽपि प्रत्यक्षादीनामपि उपयोगः कथं न भवेत्? प्रत्यक्षादिभ्यः प्रमाणेभ्यः श्रुतेर्बलवत्तरत्वं न स्वीकार्यम्। ब्रह्मसाक्षात्कारादेव संशयादीनां समुच्छेदस्य उपदेशात् "भिद्यते हृदयग्रन्थिः" इत्यादिश्रुतिभ्यः। अतः श्रुत्यर्थब्रह्मनिर्णये प्रत्यक्षादिप्रमाणानामपि उपयोगः अस्ति एव इति?

नैतदपि सङ्गतम्, श्रुतिप्रतिपाद्यब्रह्मविषये प्रत्यक्षादीनां गतिर्नास्ति। यतः श्रुतिवाक्यतः श्रुत्यर्थनिर्णयो न अलौकिकविषयः। तेन तस्मिन् लौकिकविषये लौकिक-प्रमाणानि आवश्यकान्येव। लौकिकविषये लौकिकप्रमाणानि त्यक्त्वा अलौकिक-प्रमाण-शरणीकारो न समर्थनीयः, आदरणीयश्च। श्रुतिप्रतिपाद्यस्य अलौकिक-विषयस्य तु लौकिक-प्रमाणानाम् अगोचरत्वात्। यतः श्रुतिप्रतिपाद्यं ब्रह्म असङ्गं निर्विशेषम् अद्वैतवस्तु। परमार्थतः न तज् ज्ञेयं प्रमेयं वा। ज्ञेयत्वं प्रमेयत्वं च ज्ञातृ-ज्ञेय-प्रमातृ-प्रमेय-भेदसत्ताधीनम्। तत्र श्रुतेरपि यत् प्रमाणत्वं, तत् तु निषेधमुखेनैव, न विधिमुखेन। अद्वैतब्रह्मज्ञानं न घटादि-ज्ञानवज् ज्ञानम्। ब्रह्म तु वृत्तिव्याप्यं, न तु फलव्याप्यम्। घटादिकन्तु उभयमेव। वृत्तिविषयता हि वृत्तिव्याप्यता, भग्नावरणचिद्विषयता हि फलव्याप्यता। ब्रह्मणि फलव्याप्यता नास्ति, ब्रह्मणः सर्वावभासकत्वात्, स्वप्रकाशत्वाच्च। तत्रापि ब्रह्मविषये या वृत्तिः सापि आत्मघातिन्येव। वृत्तिर्यदा ब्रह्माकारा भवितुम् ईहते, तदा क्रमेण सा विलुप्यते, ब्रह्मणो निराकारत्वात्। एवम् अशतः वृत्तिविलोपानुभवजन्यसंस्कारबलेन अद्वैतब्रह्मज्ञाने सम्यग् जाते वृत्तेः निरवशेष-विलोपः अनु-मीयते, कल्प्यते वा। श्रुतिप्रमाणेनैव वृत्तेः एतादृशी विलोपात्मिका पुनरावृत्तिपरिशून्या अद्वैत-ब्रह्माकारता सम्भाविता। युक्त्या तस्याः सम्भावना न सिध्यति। एतदपि श्रुतौ निषेधमुखेन ब्रह्मपरिचायकं यद् असङ्गम् अद्वैतम् अखण्डम् अनन्तं निर्गुणं निष्क्रियम् अवाङ्मनसोगोचरम्

अज्ञेयम् अप्रमेयं निर्विशेषम् इत्यादिकं वाक्यजातम्, तेनैव ब्रह्मणः एतादृशी श्रुतिव्याप्यता सम्भाविनी। एवं श्रुतितात्पर्यभूताद्वैत-ब्रह्मवस्तुनि श्रुतेरेव प्रमाणत्वम्। एतेन ब्रह्मण अप्रमेयत्वं श्रुतिप्रमाणकत्वञ्च न व्याहन्यते। अत्र श्रुत्यर्थनिर्णये प्रत्यक्षादिप्रमाणानां यादृशी उपयोगिता, तादृशी न श्रुतिप्रतिपाद्य विषये इति सिद्धम्, "तद् ब्रह्म उपनिषत्परम्" "तं तु औपनिषदं पुरुषं पृच्छामि" इत्यादि-श्रुतेः "शास्त्रयोनित्वात्" इति न्यायाच्च।

सूत्रेषु व्यासमतानुप्रदर्शनाशङ्कानिरासः

अथ चेत् अत्र शङ्क्यते—ब्रह्मसूत्रमध्ये व्यासेन भगवता जैमिनि-काष्र्णाजिनि-बादरि काशकृत्स्नात्रेयौडुलोमि-प्रभृति-महर्षीणां मतमपि नामग्रहणपूर्वकमेव प्रदर्शितम्। बादरायण इति स्वनामग्रहणपूर्वकं स्वमतमपि उद्घोषितम्। तत् कथं ब्रह्मसूत्रमध्ये वेदान्तमतमेव वर्णितं, न तु व्यासस्य स्वमतमपीति?

नेयं शङ्का सङ्गता। यतः शिष्यबुद्धि-वैशद्याय पूर्वपक्षतया मतान्तरं प्रदर्श्य तत्तन्मत खण्डनं कृतं व्यासेन भगवता। तेन तेषां मतं न तत्र गृहीतम् आसीत् इति स्पष्टमेव। नामग्रहणपूर्वकं स्वमतोल्लेखश्च, अपीतरेषां ऋषीणां मतैः सह श्रुतितात्पर्यस्य अविरोधस्थले एव स्वमत प्रदर्शनार्थं, नान्यत्र। अन्यत ऋषयो यत्र परस्परं न विवदन्ते, तादृशस्थलेषु सर्वत्र तु श्रुतितात्पर्यमेव ब्रह्मसूत्रमध्ये विवृतम् इत्यनेन एतदेव प्रमाणितम्। तत्र स्वमतोल्लेखश्चापि न कृतः, अतो व्यासेन तु यत्र स्वमत प्रदर्शनं कृतं, तत्र अन्यैरपि तथा कर्तुं शक्यं, यदि श्रुत्यनुकूलयुक्तियुक्तं स्यात्—इति तत्रापि व्याससम्मतिरस्ति—इत्यपि तत्र सूचितं भवति। अतो ब्रह्मसूत्रमध्ये श्रुतितात्पर्यप्रकाशनादृते व्यासस्य स्वमत प्रदर्शनं न व्यासस्य अभिप्रेतम् इति। एतेन एतदपि बोद्धुं शक्यते यदि अन्येन केनापि व्यासस्य श्रुतिसिद्धान्त-विरुद्धतां कथमपि प्रदर्शयितुं शक्यते, तदा तन्मतमपि व्यासस्य आदरणीयमेव भवेत्। यतः श्रुतितात्पर्यमेव व्यासमतम्, नान्यत् किमपि। अतः ब्रह्मसूत्रमध्ये वेदान्तमतमेव वर्णितं, न तु व्यासस्य अन्यत् किञ्चित् स्वमतमपीति।

शङ्करव्याससाक्षात्कारस्य समर्थनम्

वस्तुतस्तु एतदनुकूलः प्रवादोऽपि वर्तते। हिमालयप्रदेशे उत्तरकाश्यां यदा शङ्कर व्यासयोर्मध्ये सूत्रार्थालोचनं जातं, तदा व्यासेन शाङ्करभाष्यं दृष्ट्वा उक्तम्—'अहो मम सूत्ररचनासु दोषारोपः कृत इति कश्चित् दृश्यते। तथाप्ययं न दुनोति माम्, यतो भवता महाशय एव समुद्-घाटित" इति। एतादृशी उदारता सत्यार्थिनः भगवतो व्यासस्यैव सम्भवति शोभते च। अतो वेदान्तमतमेव ब्रह्मसूत्रमध्ये उपन्यस्तं भगवता व्यासेन, न स्वमतम्—इति निश्चितम्।

ब्रह्मसूत्रस्य औपनिषदमतानुसरणम्

एवञ्च शङ्कराचार्य-परमर्षिके भास्कर-रामानुजाचार्यादिभिः वेदान्त-व्याख्यानद्वारैव

वेदान्तमतम् अनुसृत्यैव च स्वमतस्थापनं कृतं, न तु केवलं युक्तिसाहाय्येन अन्यदर्शनाद्यवलम्बनेन वा कृतम्, अथवा स्वकीय-तपःसिद्धालौकिकाभिज्ञता-प्रभावेण कृतम्। एतेन ब्रह्मसूत्रमध्ये वेदान्तानुसारि-युक्ति-विचारस्यैव प्रामाण्यं सर्ववादि-सम्मतमिति प्रतिभाति। तेन व्यासस्य तत्कृतसूत्रमध्ये स्वमत-प्रदर्शनं सर्वथा श्रुत्यनुकूलं श्रुत्यधीन-युक्तिमूलकमिति सिद्धम्। साङ्ख्य-योग-वैशेषिक-बौद्ध-जैन-शैवानां मतखण्डनं तेषां वेद-तात्पर्य-विरुद्धत्वं निश्चित्यैव। जैमिनि-बादरि-कार्ष्णाजिन्यौडुलोम्यात्रेय-प्रभृतीनां मतखण्डनं तेषां वेदान्ततात्पर्य-विरुद्धत्वं संशय्येति विशेषः। साङ्ख्यादिमतखण्डने श्रुतेर्युक्तेश्च उभयोरपि प्राधान्यं, जैमिनीयमतखण्डने श्रुतेरेव प्राधान्यमित्यपि बोद्धव्यम्। अतो वेदान्त-मत-वर्णनमेव ब्रह्मसूत्रमध्ये कृतं भगवता व्यासेन, न तु स्वमतवर्णनमिति ध्येयम्। अतः श्रुतिव्यासमतयोः न भिदाशंकापि।

### बौद्धादिमतखण्डनाद् ब्रह्मसूत्रस्य आधुनिकत्वशङ्का

अत्र केचिद् आहुः वेदान्तार्थमीमांसैव न केवलं ब्रह्मसूत्र-रचनाया उद्देश्यम्, यतः तस्मिन् बौद्ध-जैन-प्रभृतीनां वेदबाह्यानामपि मतखण्डनं दृश्यते। बौद्ध-जैनादिमतं वेदान्तेषु न हि दृश्यते; अतः तत्-सम्बन्धिनी मीमांसा न वेदान्तार्थमीमांसान्तर्गता, तेन दार्शनिकरीत्या स्वातन्त्र्येण जगत्तत्त्वादि-निर्णयोऽपि तस्य उद्देश्यं वस्तु भवति। एवञ्च ग्रन्थोऽयं न कलेरादौ व्यासेन रचितः, किन्तु कले सार्द्धद्विसहस्र-वत्सरेषु समतीतेषु गौतम-बुद्धाविर्भावानन्तरं किमधिक नागार्जुन-दिङ्नाग-वसुबन्धु-धर्मकीर्त्तिभ्यः अपि परं, केनचिद् व्यास-नामधारिणा विदुषा विरचितः। इदानीमपि कथक-सम्प्रदायमध्ये विदुषां व्यासोपाधिः दृश्यते एव। अतो न ब्रह्मसूत्रं केवलं वेदान्तार्थ-मीमांसारूपम्, किन्तु स्वातन्त्र्येण जगत्तत्त्वादि-निर्णयपरम्, न वा पञ्चसहस्र-वर्षप्राचीन-व्यासविरचितमिति ?

### ब्रह्मसूत्रस्य आधुनिकत्वशङ्कानिरसनम्

नैतत् सङ्गतम्, यतो बौद्ध-जैनादीनां मतं सार्द्ध-द्विसहस्र-वर्षप्राचीन-गौतमबुद्ध-महावीरयोः पूर्वस्मिन् कालेऽपि आसीत् इति उभयवादि-सम्मतमेव। तथा हि बौद्ध-ग्रन्थेषु दृश्यते गौतमबुद्धाविर्भावात् प्राक् द्वाविंशति बुद्धाः समभवन्। गौतमस्तु त्रयोविंशः। तत्पश्चात् चतुर्विंशः मैत्रेयो बुद्धः आगमिष्यति इति। बौद्धजातकादि-ग्रन्थेषु इयं कथा सुप्रसिद्धा एव, सुविदिता च सर्वेषां विदुषाम्। जैनमतेऽपि गौतम-बुद्ध-समकालीन-महावीरात् पूर्वं ऋषभदेवात् आरभ्य त्रयोविंशति तीर्थङ्करा आविर्बभूवुः, महावीरः तत्र अन्तिमः। ऋषभदेवस्य कथा श्रीमद्भागवतेऽपि दृश्यते। तत्र तस्य भगवदवतारत्वं च उक्तम्। एतदपि सर्वेषां सुविदित-मेव यत् पञ्चसहस्रवर्षेभ्यः प्राक् कलेरादौ व्याससमकालीनः ककुच्छन्दनामा कश्चिद् बुद्ध आसीत्। तत्र कनकमुनिः तत्र [illegible], ततो गौतमो बुद्धः सञ्जात इत्यपि प्रसिद्धम्। एतदर्थं [illegible] प्रभृतीनां ग्रन्था द्रष्टव्याः। अतएव प्राचीन-बौद्ध-जैनादि-

मतखण्डनं कृतमेव । अतो बौद्धादिमत-खण्डनेन ब्रह्मसूत्रस्य आधुनिकत्वं न शंकनीयम् ।

### विष्णुपुराणतो बौद्धजैनादिमतानां प्राचीनत्वम्

बौद्ध-जैनमतानां प्राचीनत्वं वैदिकग्रन्थेष्वपि दृश्यते । तथा हि—विष्णुपुराणे बुद्धार्हदाविर्भाव-सम्बन्धिनी एका कथा दृश्यते । तत्र आसुरस्वभावान् देवस्वभावापन्न-जनगणोत्पीडनपरान् यागयज्ञादि वेदोक्त-कर्मानुष्ठानजन्यापूर्व-बलेन बलीयसो जनान् तादृश-पापानुष्ठानात् निवर्तयितुं भगवान् विष्णुः देवस्वभावापन्नजनैः प्रार्थितः सन् स्वशरीरात् मायामोह-नामकं कञ्चित् पुरुषं जनयामास । कर्मफल-क्षयिष्णुत्व-हिंसामयत्वादिदोषान् वैदिक-कर्मकाण्डे प्रदर्शयता तेन पुरुषेण वेदान्तसम्मतं ज्ञानफल-निर्वाण-महात्म्यं परवर्तिविज्ञानवाद-शून्यवाद-बीजभूतं उपदेशं तेभ्यः आसुरस्वभावापन्नेभ्यः सर्वेभ्यः प्रदत्तं । तदनुसारेण ते आसुरभावापन्ना जना यागयज्ञाद्यनुष्ठानादिकं कर्मकाण्डं विहाय निर्वाण-साधनपरा बभूवुः, कर्मादिना चित्तशुद्ध्यभावात् तु ते विज्ञानवादिनः तथा शून्यवादिनः बौद्धाः सञ्जाताः । यागादि-जन्य-शुभादृष्ट-विरहिताश्च सन्तो दुर्बलाः जाताः, तेन देवगण-वध्याश्च बभूवुरिति । तद् यथा विष्णुपुराणे तृतीयांशे—

पराशर उवाच—

इत्युक्तो भगवांस्तेभ्यो मायामोहं शरीरतः । समुत्पाद्य ददौ विष्णुः प्राह चेदं सुरोत्तमान् ॥१७।४१

श्रीभगवानुवाच—

मायामोहोऽयमखिलान् दैत्यांस्तान् मोहयिष्यति । ततो वध्या भविष्यन्ति वेदमार्गबहिष्कृताः ॥४२

पराशर उवाच—

अर्हथैनं महाधर्मं मायामोहेन ते यतः । प्रोक्तास्तमाश्रिता धर्ममार्हतास्तेन तेऽभवन् ॥ १८।११

पराशर उवाच—

पुनश्च रक्ताम्बरधृङ् मायामोहोऽजितेक्षणः । अन्यानाहासुरान् गत्वा मृद्वल्पमधुराक्षरम् ॥ १८।१४

मायामोह उवाच—

स्वर्गार्थं यदि वो वाञ्छा निर्वाणार्थमथासुराः । तदलं पशुघातादिदुष्टधर्मैर्निबोधत ॥ १८।१५
विज्ञानमयमेवैतदशेषमवगच्छथ । बुध्यध्वं मे वचः सम्यग् बुधैरेवमुदीरितम् ॥ १८।१६
जगदेतदनाधारं भ्रान्तिज्ञानार्थतत्परम् । रागादिदुष्टमत्यर्थं भ्राम्यते भवसङ्कटे ॥ १८।१७

पराशर उवाच—

एवं बुध्यत बुध्यध्वं बुध्यतैवमितीरयन् । मायामोहः स दैतेयान् धर्ममत्याजयन्निजम् ॥ १८।१८

इति । तत्र श्रीधरस्वामिकृत-टीकायाम्—

"आर्हतमतम् उक्त्वा बौद्धमतम् आह—"पुनश्च" इति सप्तभिः । "रक्त" इत्येतदाचारप्रदर्शनम् ।१४। अत्र हि 'विज्ञानमयं बुद्धिमयम्' इत्यादिना योगाचाराणाम् आत्मख्यातिवाद उक्तः ।१६। अनाधारम् इति माध्यमिकमत-शून्यख्याति-पक्षोक्तिः । भ्रान्तिज्ञाने च

तदर्थश्च तत्परं तन्निष्ठम् ।१७। एव बुध्यत इत्यत्र पुनरुक्तिः बौद्धपदनिरुक्त्यर्था" ॥१८॥ इति ।

एवं च स मायामोहो वेदान्तोक्त-विज्ञानस्वरूप-ब्रह्मज्ञानोपदेशेन जगतो भ्रान्तिरूपत्व-प्रदर्शनेन, तथैव "तद् यथा कर्मचितो लोकः क्षीयते" इत्यादि कर्मनिन्दासूचक-श्रुत्युपदेशेन च कर्मपरान् दैत्यान् यागाद्यनुष्ठानात् प्रतिनिवर्त्तयामास । ते खलु पश्चात् चित्तशुद्ध्यभावाद् ब्रह्ममार्गपरिभ्रष्टाः सन्तो बौद्धा इति नाम्ना प्रसिद्धिं गताः । वैदिकानां दैत्यानां बुद्धिमोहोत्-पादनाय आदौ वेदम् आश्रित्य दुर्युक्ति-प्रदर्शनस्य आवश्यकत्वात् । एतेन वेदप्रामाण्यवादि-प्राचीन-बौद्धसद्भावः कल्पयितुं शक्यते ।

### भागवतवचनेन तस्य समर्थनम्

श्रीमद्भागवते भगवदवतार-ऋषभदेवस्य कथा श्रूयते । स एव जैनानाम् आदि-पुरुषो मतप्रवर्त्तकश्चेति तैरपि स्वीक्रियते । कीटकदेशे भगवदवताररूप-बुद्धस्य आविर्भावकथा तत्रैव उपलभ्यते । अपरेषु पुराणेष्वपि भगवतो बौद्धावताररूपत्वं वर्णितम् । तेन गौतम-महावीराभ्यां पूर्वमपि बौद्ध-जैनमत-सत्त्वं तथा तेषां मतानां वैदिकमत-मूलकत्वं वैदिक-पुराणादि-ग्रन्थेभ्योऽपि अवगम्यते ।

### वेदान्तसारवचनेन तस्य समर्थनम्

ततो वैदिक-धर्मानुसारि-वेदान्तसारादिषु बहुषु प्राचीनार्वाचीनग्रन्थेषु बौद्ध-विज्ञानवाद-शून्यवादयोः बीजभूतानि वेदान्त-तात्पर्य-पूर्वपक्षरूपाणि श्रुतिवाक्यानि प्रदर्शितानि सन्ति यथोक्तं वेदान्तसारे

"बौद्धस्तु 'अन्योऽन्तर आत्मा विज्ञानमयः' ( तै २।४।१ ) इत्यादिश्रुतेः, कर्त्तुः अभावे करणस्य शक्त्यभावात्, 'अहं कर्त्ता' 'अहं भोक्ता' इत्याद्यनुभवाच्च बुद्धिः आत्मा इति वदति । अपरो बौद्धः 'असदेव इदम् अग्र आसीत्' ( छाः ६।२।१ ) इत्यादिश्रुतेः, सुषुप्तौ सर्वाभावात् 'अहं सुप्तः', सुषुप्तौ न आसम्'- इति उत्थितस्य स्वाभाव-परामर्श-विषयानुभवात् च "शून्यम् आत्मा" इति वदति ।"

तत्र तयोरपि खण्डनप्रसङ्गे उक्तम् अस्ति

"एतेषां पुत्रादीनां शून्य-पर्यन्तानाम् अनात्मत्वम् उच्यते । एतैः अतिप्राकृतादि-वादिभिः उक्तेषु श्रुतियुक्त्यनुभवाभासेषु पूर्वपूर्वोक्त-श्रुतियुक्त्यनुभवाभासानाम्, उत्तरोत्तर-श्रुति-युक्त्यनुभवाभासैः आत्मत्व-बाधदर्शनात् पुत्रादीनाम् अनात्मत्वं स्पष्टमेव इति । किन्तु 'प्रत्यक् अस्थूलः अचक्षु अप्राणः अमनाः अकर्त्ता चैतन्यं चिन्मात्रं सत्' इत्यादि-प्रबलश्रुति-विरोधात् पुत्रादि-शून्यपर्यन्तम् अखिलम् अनात्मैव ।"

एतेन बौद्ध-जैनमतद्वयं तथा चार्वाकाद्यपर-दार्शनिकमतान्यपि वेदमूलकानीति प्रतीयते । तानि च वेदान्त-तात्पर्योपकारार्थं तस्मिन् पूर्वपक्षतया सन्निवेशितानि इति । तत्र

सांख्य-योग-माहेश्वर-पाञ्चरात्र-भागवत-मतानि अपि च अवैदिकानि, वैशेषिक-बौद्ध-जैन-मतानि तु ततोऽपि तथा—इत्यादि सूत्रभाष्येन अवगम्यते—इति विशेषः। अतो वेदान्तभाष्यवचनेनापि बौद्धानां वैदिकमत-मूलत्वम् सिध्यति।

उपवर्ष-शबरस्वामिभाष्येणापि बौद्धानां प्राचीनत्वम्

ततः "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थे अनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" इति पूर्वमीमांसायाः १।१।५ सूत्रस्य शबरभाष्येऽपि मीमांसाद्वयवृत्तिकारोपवर्षवचनं यत् उद्धृतं, तत्र बौद्ध-क्षणिकविज्ञानवाद-खण्डनावसरे श्रुत्यारण्यकोक्त-पूर्वपक्षभूत-वाक्यस्यैव बौद्धविज्ञानवादं प्रदर्श्य तस्यैव सिद्धान्तभावेन तन्निरसनं कृतमिति दृश्यते। उपवर्षाचार्यस्तु बहूनां मतेन गौतमबुद्धादपि प्राचीनः। अस्माकमपि तथैव निर्णयः।*
एतेन प्राचीनबौद्धा वेदप्रामाण्यं स्वीकुर्वन्ति स्म—इत्यपि अवगम्यते।

तत्र पूर्वमीमांसासूत्रे (१।१।५) उपवर्षकृत-बौद्धमतम् अनूद्य शबरस्वामिना उक्तम्—'अथ अस्मिन् अर्थे मार्गं भवति, विज्ञानघन एव एतेभ्यः भूतेभ्यः समुत्थाय तान्येव अनुविनश्यति, न प्रेत्य संज्ञास्ति" इति (६५ पृ पुणा स १८५० शकाब्दे मुद्रितपुस्तके)। ततः तदेव उपवर्षाचार्यमतम् अनूद्य शबरस्वामिना प्रत्युक्तं च "अथ यदुक्तम्—'विज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थाय तान्येव अनुविनश्यति न प्रेत्य संज्ञास्ति' इति, अत्र उच्यते—'अत्रैव मा भगवान् मोहान्तम् अपीपदिदिति परिचोदनोत्तरकाले अपहृत्य मोहाभिप्रायम् अस्य भणितवान्—'न वा अरे मोहं ब्रवीमि, अविनाशी वा अरे अयम् आत्मा अनुच्छित्तिधर्मा मात्रासंसर्गस्तु अस्य भवती'ति। तस्मान्न विज्ञानमात्रं, तस्मात् वैलक्षण्यम्" (सू० ६।५)। (७१ पृ पुणा सं १८५० शकाब्दे मुद्रितपुस्तके)। एतेन वैदिकदार्शनिकग्रन्थतोऽपि प्राचीन-बौद्धमत-सत्त्वम् अनुमीयते।

बौद्धग्रन्थादपि बौद्धानां प्राचीनत्वम्

ततो बौद्ध-शान्तरक्षितकृत-तत्त्वसंग्राहाख्य-ग्रन्थे वैदिक-निमित्त-शाखीयं बौद्धमतमेकम् उपलभ्यते, तेन वेदप्रामाण्यं स्वीकुर्वाणाः केचन बौद्धा अपि आसन्—इत्यपि अनुमातुं शक्यते, तद् यथा—

"किन्तु वेदप्रमाणत्वं यदि युष्माभिरिष्यते। तत् किं भगवतो बुद्धे सर्वज्ञत्वं न गम्यते ॥३५११
"निमित्त-नाम्नि सर्वज्ञो भगवान् मुनिसत्तमः। शाखान्तरे हि विस्पष्टं पठ्यते ब्राह्मणैर्बुधैः ॥"३५१२

तत्र टीका—"तथा हि निमित्तं नाम शाखान्तरम् अस्ति। तत्र स्फुटतरम् अयमेव भगवान् शाक्यमुनिः सर्वज्ञः पठ्यते। तत् किमिति बुद्धे वेदं प्रमाणयद्भिरपि भवद्भिः असौ मतिः क्षिप्यते।" (तत्त्वसंग्रहे ९०१ पृ)। एतेन बौद्धदार्शनिक-ग्रन्थतोऽपि वेद-प्रामाण्यवादि-प्राचीन-बौद्धमत-सत्त्वं प्रमीयते। ततश्च वेदप्रामाण्यं केषाञ्चिद् बौद्धानां स्वीकृतमेव आसीत्—

* पं युधिष्ठिर मीमांसक-कृत-संस्कृत-व्याकरणशास्त्र-इतिहासो नाम ग्रन्थो द्रष्टव्यः।

इत्यपि प्रतीयते; यतो ये खलु ब्राह्मणा निमित्त-शाखा-प्रमाणतो बुद्धस्य सर्वज्ञत्वं स्वीकुर्वन्ति स्म, नूनं ते वैदिकाना दृष्टौ बौद्धा एव, यतोऽन्यत्र वैदिकाना ग्रन्थे निमित्त-शाखाया अवैदिकत्वम् उद्घोषितम्। बौद्धाना मध्ये बहुभि. तेषा बौद्धत्वं स्वीकृतम् इत्येव सम्भाव्यते।

### वेदस्य सर्वज्ञानाकरत्वम्

ततो वेदादेव सर्वविध-मनुष्योचित-लोकव्यवहारो वर्णात्मकभाषा-प्रयोगादयश्च सर्वे आविर्भूता मनुष्यसमाजे, वेदादेव एतत् सर्वम् अस्माभि. उपलब्धम् इत्यपि ज्ञातुं शक्यते। जगत्कारण-तत्त्वानुसन्धानं सर्वदृश्यादृश्य-वस्तुतत्त्वनिर्णयः सर्वविध-दार्शनिक-मतवादा इत्येतानि सर्वाण्येव वेदादेव अस्माभिः अधिगतानि इति युक्तित. शास्त्रतश्च अवगम्यते। तत्र शास्त्रम्

"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥"

"नामरूपं च भूताना कर्मणा च प्रवर्त्तनम्। वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः॥"

"सर्वेषा चैव नामानि कर्माणि च पृथक् पृथक्। वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे॥"

इति महाभारत-मनुसंहिता-विष्णुपुराणादिषु उक्तमस्ति। अतः सर्वज्ञानमूलं तथा सर्वव्यवहारमूलं हि वेदा एव—इति शास्त्रादपि अवगम्यते।

### युक्त्यापि तस्य समर्थनम्

युक्तितश्चापि एतत् प्रमाणयितुं यथा शक्यते तद् इत्थम् अस्माकं सर्वे व्यवहारा॰ सर्वाः चिन्ताश्च वर्णात्मकभाषामूलकाः। इयं वर्णात्मक-भाषा सर्वैः सर्वथा कुतश्चित् पुरुषात् शिक्षणीया। नेयं कदाचित् स्वयं परिस्फुरति। यस्य इय वर्णात्मक-भाषा कदापि न श्रुतिगोचरीभूता, तस्य इयं न स्वयं विकशति। शाखामृग-शृगाल-शार्दुलादिभिः अपहृता बहव. शिशवो यदा मनुष्यसमाजे कथमपि पुनरानीताः, तदा ते मानवोचितभाषा-ज्ञानविरहिता दृष्टाः। ततः यथाकालं मानवभाषा-श्रवणानन्तरं ते मानवभाषाभाषिणः अभवन् इत्यत्र बहवो दृष्टान्ताः सन्ति। बधिरता-रोगापगमे सति मूकत्व विलुप्यते इत्यपि दृश्यते। सान्निपातिक-ज्वररोग-वशात् भाषा-विस्मरणे जाते तदानीं श्रुतभाषानुरूपं भाषाज्ञानं जायते, न तु पूर्वभाषा-स्फुरणं भवति। अकवर-नृपतिना परीक्षितं चेदम्। तेन सद्यःप्रसूत-शिशुद्वयं धात्री-साहाय्यतो मनुष्योच्चारित-शब्द-श्रवण-सुयोग-विरहितं कृत्वा पालितम्। तयोः वयःप्राप्तौ न कापि वर्णात्मकभाषा स्फुरिता, ततः सा भाषा यदा तयो. श्रुतिगता जाता, तदा क्रमेण तौ द्वौ बालकौ वर्णात्मक-भाषाभाषिणौ जातौ। एवं बहुविधै॰ प्रमाणैः इयं भाषा सर्वदा शिक्षिता भाषैव, न तु हास्य-क्रन्दनादिवत् स्वयं विकाश-शीला सहजा वा इत्येव प्रमाणितम्। तथा च इमा भाषा विना न कोऽपि मनुष्योचित-व्यवहारः कस्यापि सम्भवति, का कथा गुरुशिष्यादिक्रमेण विद्याऽऽदानप्रदान-शास्त्राभ्यासादि-मूलक-व्यवहारादीनाम्। एतद्भाषाया यन्मूलं तद् वेदा॰ एव। वेदेष्वेव शब्दपूर्विका सृष्टिः उक्ता। यथा "स भूरिति व्याहरन् भूमिम् असृजत" इति वेदेष्वेव

तस्य नित्यत्वादिकम् उपदिष्टम्, यथा 'विरूप नित्यया वाचा' इत्यादि। वेदेष्वेव उक्तम्—वेदद्वारैव प्रभगा आदिजरीरिणा, देवर्षिमनुष्यसमाजे इयं वर्णात्मकभाषा प्रत्येक सृष्टे आदौ उपदिष्टा प्रचारिता च। नापि ईश्वरस्य इयम् अपूर्वा सृष्टि, तस्य सर्वज्ञत्वात्। तेन वेदभाषा नित्या तथा अपौरुषेयी एव। वेदभाषात पूर्वं कापि भाषा नासीत्—इत्यपि प्राय सर्वैं स्वीक्रियते च आधुनिकै पाश्चात्त्यभाषाप्रेर्नै अविदितम्। तस्मिन्नेव वेदे सर्वविधा मतवादा दृश्यन्ते। अद्वैतवादाभासरूपं विज्ञानवादि शून्यवादि-बौद्धानां मतमपि तत्रैव दृश्यते। यथोक्त भट्टपादै कुमारिलै—"विज्ञानमात्र-क्षणभङ्ग-नैरात्म्यादि-वादानामपि उपनिषदर्थवाद प्रभवत्व, विषयेषु आत्यन्तिक राग निवर्तयितुम्" इति। (तन्त्रवार्त्तिकम् १।३।१ सूत्रम्, पुणा-संस्करणम् १६८८)

### अद्वैतमतस्य वेदमूलकत्वम्

अद्वैतमतस्य आविष्करणम् उद्भावनं वा वेदनिरपेक्षं न सम्भवति, असकृतया अद्वैते वेदान्यप्रमाणाभावात्। अतो बौद्ध-जैनादि-मतवादा अपि साक्षात् परम्परया वा सर्वे वेदमूलकाः। यतो वेदतात्पर्यविरुद्ध-मतवादाश्च पूर्वपक्षतया तत्र उपन्यस्ता। वेदत एतान् पूर्वपक्षान् सर्वान् अवगम्य पूर्वसंस्कारवशात् बौद्धादयो भिन्नमतावलम्बिन अभवन्। अतो वेदस्य सर्वज्ञानाकरत्वे पूर्वोद्धृतवाक्यस्य युक्त्यापि समर्थितं भवति। तेन शास्त्र-युक्तिभ्यामेव समर्थितम् एतत् यद् गौतमबुद्धात् पूर्वमपि बौद्ध-जैन-मतादिकम् आसीदेव। तदेव प्राचीन-बौद्धमतम्। तन्मत-खण्डनाय आस्तिक-दर्शनकारै ऋषिभि दर्शनसूत्राणि रचितानि। महर्षि-व्यासेन तदर्थं ब्रह्मसूत्र-ग्रन्थ विरचित।

### ब्रह्मसूत्रे प्राचीनबौद्धमतखण्डनम्

प्राचीन-बौद्धमत-खण्डनानुकूल्यम् एतद् अनुमतं ब्रह्मसूत्रशाङ्कर-भास्करादि-भाष्यैरपि समर्थयितु शक्यते। तत्र "आकाशे चाविशेषात्" २।२।२४, सूत्रे भाष्यकारेण आदौ श्रुतिप्रमाणेन आकाशस्य अवस्तुत्वं खण्डितम्। ततस्तर्केण, तत्र सुगतबुद्धवाक्येनेति दृश्यते। यथा शङ्करभाष्यम्—

"यच्च तेषामेवाभिमतं निरोधद्वयम् आकाशञ्च निरुपाख्यमिति, तत्र निरोधद्वयस्य निरुपाख्यत्वं पुरस्तात् निराकृतम्। आकाशस्य इदानीं निराक्रियते। आकाशे च अयुक्तो निरुपाख्यत्वाभ्युपगम, प्रतिसंख्याऽप्रतिसंख्यानिरोधयोरिव वस्तुत्वप्रतिपत्ते अविशेषात्। आगम-प्रामाण्यात् तावत् 'आत्मन आकाश सम्भूत' (तै २।१) इत्यादिश्रुतिभ्य आकाशस्य च वस्तुत्वसिद्धि। विप्रतिपन्नान् प्रति तु शब्दगुणानुमेयत्वं वक्तव्यम्। गन्धादीनां गुणानां पृथिव्यादि-वस्त्वाश्रयत्व-दर्शनात्। अपि च आवरणाभावमात्रम् आकाशम् इच्छताम् एकस्मिन् सुपर्णे पतति आवरणस्य विद्यमानत्वात् सुपर्णान्तरस्य उत्पित्सत अनवकाशत्व-प्रसङ्ग। यत्र आवरणाभाव तत्र पतिष्यति इति चेत्? येन आवरणाभावो विशिष्यते, तत् तर्हि

वस्तुभूतमेव आकाशं स्यात्, नावरणाभाव-मात्रम्। अपि च आवरणाभाव-मात्रम् आकाशं मन्यमानस्य सौगतस्य स्वाभ्युपगम-विरोधः प्रसज्येत। सौगते हि समये "पृथिवी भगवः किंसन्निश्रया?" इत्यस्मिन् प्रश्न-प्रतिवचनप्रवाहे पृथिव्यादीनाम् अन्ते "वायुः किंसन्निश्रय." इत्यस्य प्रश्नस्य प्रतिवचनं भवति "वायुराकाश-सन्निश्रयः" इति। तत् आकाशस्य अवस्तुत्वे न समञ्जसं स्यात्। तस्मादपि अयुक्तम् आकाशस्य अवस्तुत्वम्। अपि च निरोधद्वयम् आकाशं च त्रयमपि एतत् निरुपाख्यम् अवस्तु नित्यं चेति विप्रतिषिद्धम्। न हि अवस्तुनो नित्यत्वम् अनित्यत्वं वा सम्भवति, वस्त्वाश्रयत्वाद् धर्मधर्मिव्यवहारस्य। धर्मधर्मिभावे हि घटादिवद् वस्तुत्वमेव स्यात्, न निरुपाख्यत्वम्।" भाष्यान्तराणामपि एवमेव आशयः।

### सुगतबुद्धस्य कृति

एतेन सुगतापरनामगौतमबुद्धात् पूर्वं निश्चितं कोऽपि बुद्ध आसीत्, यस्य मतं सूत्रकारेण भगवता व्यासेन निराकृतम्, सूत्रकारस्य प्राचीनतरत्वात्। तदेव शाङ्करभाष्य-वचनेन विज्ञायते। बुद्धवाक्येन बुद्धमतनिराकरणं बुद्धद्वयस्वीकाराद् ऋते बुद्धस्य एकत्वे तस्य स्वविरुद्धवादित्वाङ्गीकरणं विना वा कथमपि न सम्भवति। वस्तुत बुद्धस्य बहुत्वं प्रसिद्धमेव? यथोक्तं लङ्कावतारे

"काश्यपः ककुच्छन्दश्च कनकश्च विनायक। अहं च विरजोऽन्ये सर्वे ते कृतिनो जिना."॥८०२

"अहं चान्ये कृतयुगे शाक्यसिंह कलौ युगे। सिद्धार्थ शाक्यतनयो विष्णुर्व्यासो महेश्वर"॥ ७९४

तत्र ककुच्छन्दस्य आविर्भावकाल. कलेरादौ ३१०१ शकपूर्वाब्दे, यथोक्तं विश्वकोषे। अत्र प्राचीनबौद्धसम्मतं यद् आकाशस्य अवस्तुत्व, तन्न सुगतगौतम-बुद्ध-सम्मतमिति सुस्पष्टमेव। तेनेदम् अनुमीयते, यत् कपिल-कणाद-गौतम-व्यासादिभिः प्राचीनबौद्धमते निराकृते सति सुगतापरनाम्ना गौतमबुद्धेन, ऋषिभि. अनिराकृताशम् अवलम्ब्य बौद्धमतं पुनरुज्जीवितम् इति। बुद्धेन वेदादिशास्त्रं सर्वं वैदिकगुरुभ्य एव अधीतम् इत्यपि बौद्धगणैरेव स्वीकृतमस्ति। दृष्टं चैतद् अश्वघोषादिकृत-बुद्धचरितादि-ग्रन्थेषु। तेन तदखण्डिताशस्य ज्ञानं बुद्धस्य पक्षे न असम्भावितमिति। तदखण्डिताशमेव गौतमबुद्धेन प्रचारितम् इति च। इयमेव गौतमस्य कृति। -

### बौद्धमतप्रचारका.

तदेव बुद्धेन पुनरुज्जीवित-बौद्धमतं बुद्धशिष्यैस्तथा तत्परभविकैः नागार्जुन-दिङ्नाग-धर्मकीर्त्ति-वसुबन्धु-प्रभृतिभिश्च वैदिकशास्त्रपरिमार्जित-बुद्धिभि अदृष्टवशात् स्वधर्मं त्यक्त्वा बौद्धमतं समाश्रयद्भिः सम्यक् परिपुष्टिं प्रापितम्। तैरपि त्यक्तस्वधर्मद्वेषवशात् खलु साङ्ख्य-न्याय-वेदान्तादि-वैदिक-सिद्धान्तादिकं खण्डितम्। तेन योगभाष्यकारव्यास-न्यायभाष्य-कारवात्स्यायन-पूर्वमीमासाभाष्यकारशवर-वेदान्तवृत्तिकारोपवर्ष-साङ्ख्यमतप्रचारकेश्वरकृष्णाचार्य-

प्रभृतिभि वैदिकाचार्य्यैः सर्वैः प्राचीनार्वाचीनबौद्धमत सांख्य-न्याय-मीमांसा-वेदान्तादि-सूत्रभाष्यादि-मुखेन बहुश खण्डितम्।

नवीनबौद्धमतखण्डनकर्त्तारः

तदनन्तरम् उद्योतकर-कुमारिल-मण्डन-प्रभाकर-शङ्कर-वाचस्पत्युदयनादिभि वैदिकाचार्य्यैः एतद्बौद्धमतखण्डनयज्ञे पूर्णाहुति प्रदत्ता। एवं च वैदिकाचार्य्यैः शङ्करादिभि बौद्ध-जैनमत-खण्डनार्थं तत्तन्मत-व्याख्यानकाले महावीर-बुद्धघोषतनानां समन्तभद्र दिङ्नाग-धर्मकीर्त्ति-वसुबन्धु-प्रभृतीनां वाक्यमपि कचिद् उद्धृतं कचिद् अनूदितं वा दृश्यते तेषां ग्रन्थादीनां मध्ये। नैतावता ब्रह्मसूत्रस्य आधुनिकत्वं सिध्यति।

ग्रन्थपाश्चात्यादीनां मतनिरासः

परन्तु एतेषां जैन-बौद्धाचार्य्याणां वाक्यादीनि वेदान्तादि-सूत्रव्याख्यान-मध्ये अवलम्बितानि दृष्ट्वा पाश्चात्यैः "किथ"-प्रभृतिभि तदनुवर्त्तिभिश्च सर्वैः, ततश्च अस्मद्देशीय-शास्त्रि-गुप्त-प्रभृतिभि वैदिक-दर्शनादीनि पुराणादीन्यपि शास्त्राणि सर्वाणि बौद्धदिङ्नागादीनां परवर्त्तीनीति कल्प्यते। वेदस्य सर्वज्ञानाकरत्वम् अपौरुषेयत्वादिकं च अजानद्भि अस्वीकुर्वद्भिश्च तैः, गौतम-बुद्धात् पूर्वं बुद्धमतास्तित्वं न कल्पयितुं शक्यते। सूत्रकारस्य व्यासस्य गौतमबुद्धात् अर्वाचीनत्वं न युक्तं, पाराशर्याभिधकृष्णद्वैपायनस्य व्यासस्य बादरायणस्य सूत्रकारत्वात्। उक्तं च एतत् प्रथमस्थाने, नात्र पुनरालोचनीयम्। आस्तां तावत्, एतेन प्रतिपादितं बौद्धादिमतं वेदान्ते न दृश्यते—इति यदुक्त तद् असङ्गतम्, नापि ब्रह्मसूत्रादिकं न कलेरादौ रचितम्—इति यद् उक्तं, तदपि सङ्गतम्। एवं च ब्रह्मसूत्राणि न श्रुत्यर्थमात्रमीमांसा-रूपाणि परन्तु व्यासस्यैव मतविरोधप्रतिपादकानि—इति यद् आशङ्कितं तच्च क्षोदक्षमं भवति।

गौडपादीयमतस्य बौद्धमतत्वशङ्कानिरासः

अत्रापि केचित् पाश्चात्य-मतावलम्बिनो मन्यन्ते—अद्वैतवेदान्तेनसिद्धान्तो नागार्ज्जुन-दिङ्नागासङ्ग-वसुबन्धु प्रभृति प्रवर्त्तितं बौद्धशून्यवादं विज्ञानवादं च अनुसृत्य आदौ वेदान्ताचार्य्य-गौडपादाचार्य्येण प्रचारित, ततस्तत्प्रशिष्य-शङ्कराचार्य्येण प्रस्थानत्रयव्याख्यान-मुखेन प्रपञ्चित। नायं सिद्धान्त श्रुति-स्मृतिसूत्रेषु दृश्यते, गौडशङ्करादिभि श्रुत्यादीनां व्याख्यान कौशलेनैव एतस्य श्रौतत्वं प्रतिपादितमिति। एतदर्थं तैः गौडपादीयागमाख्यग्रन्थस्य चतुर्थ-परिच्छेदस्य तात्पर्य्येण सह बौद्धमत-सादृश्यं प्रदर्श्यते। प्रायेण बौद्धव्यवहृत-शब्दानां प्रयोगश्च तत्र वर्त्तते इति च तेषां जल्पनम्। मङ्गलाचरणश्लोके "द्विपदावरम्" इति पदेन बुद्धस्य प्रणति कृता इत्यपि तैः प्रतिपाद्यते। तत वेदान्ताचार्य-गौडपादेन तदीयवेदान्तग्रन्थे बुद्धमत-वर्णनस्य हेतु, तैः यः प्रदर्श्यते, स तु बौद्धानां विज्ञानवाद-शून्यवादानाम् आलोचनम् एकस्मिन् काले ब्राह्मण्य-शास्त्राणां साधारणविषयान्तर्गतत्वेन परिगणितम् आसीदिति। यथा शाबरभाष्यस्य

(१।१।५) सूत्रभाष्ये, श्लोकवार्त्तिके निरालम्बवाद. शून्यवादश्च (पृः २१७-३४५), तथा ब्रह्मसूत्रे २।२।२८-२९ सूत्रभाष्ये, बौद्धमतालोचनमिति। एवं च योगदर्शनस्य व्यास-भाष्येऽपि बौद्धमतालोचनं दृश्यते। गौडपादीयागमस्य चतुर्थपरिच्छेदस्य यत् शङ्करभाष्यं, तदपि न प्रसिद्धशङ्कराचार्यविरचितमिति। अतो गौडपादेन तदीयग्रन्थे य. ब्रह्मवाद. परिकीर्त्तितः, स न श्रौतब्रह्मवादः, किन्तु तत्र बौद्धविज्ञानवाद-शून्यवादवर्णनमेवेति बोद्धव्यम् इति।

नैतत् सङ्गतम्। ब्राह्मण्य-शास्त्रेषु यद् बौद्धमतालोचनं, तत् तस्य खण्डनाय, न तु तस्य प्रचयगमनाय, न वा तस्योपादेयत्व-प्रतिपादनाय। शावर-भाष्यादिषु सर्वत्र बौद्धमत-खण्डनमेव दृश्यते। तदर्थं यथाप्रयोजन बौद्धमत-वर्णनं कृतम्। अतस्तत्र बौद्धमत-वर्णनं न ब्राह्मण्यशास्त्राणा साधारण-विषयान्तर्गतत्वेन संवृत्तम्। अत्रापि गौडपादीयागमे स्वमत-वर्णनेन बौद्धमतं प्रत्युक्तमेव। ततश्च अन्तिमश्लोके "नैतद् बुद्धेन भाषितम्" इत्युक्त्या बौद्धमतात् स्वमतस्य भेद एव प्रदर्शितः। निर्विकल्पावस्थाया बुद्धस्य भाषणं न सम्भवेद् इति कृत्वा तस्य समर्थने, "एतत्"-पदस्य व्यर्थतापत्ते., एतत्-पदस्य विशेष-बोधकत्वात्, निर्विकल्पावस्थाया भाषणसामान्यनिषेधस्यैव उचितत्वात्। चतुर्थपरिच्छेदस्य भाष्य न शङ्करकृतमिति यदुक्तं तत् तु साहसमात्रम् अप्रामाणिकोक्तिरेव च।

**श्रौतबौद्धविज्ञानवादयोर्भेद**

ततश्च अत्र यो विज्ञानवादो वेदान्ताचार्येण प्रपञ्चितः, स न बौद्धविज्ञानवाद.। उभयोर्मध्ये महान् प्रभेदो वर्त्तते खलु। वेदान्तिना विज्ञानं "सत्यं ज्ञानमनन्तं ब्रह्म" (तै २।१)। "विज्ञानमानन्द ब्रह्म" (बृ ३।९।२८) इत्यादि श्रुतिचोदितं नित्यं सद् वस्तु। बौद्धाना विज्ञानं क्षणिकम्। तन्मते साकार-निराकारोभयविध-विज्ञानमेव[1] क्षणिकम्। "यत् सत् तत् क्षणिकम्" इत्यनुमानात् "क्षणिक क्षणिकम्" इत्यादि बुद्धवचनाच्च[2]। ततश्च तद् विज्ञानं सद्वैतमेव, न तु अद्वैतम्। तेषा या "अद्वयलक्षणो"क्ति[3] दृश्यते सा ग्राह्य-ग्राहकाभावरूपत्व-बोधनाय आलय-विज्ञानस्य। एतादृशं बहुविज्ञानं प्रत्येक भिन्नम्, तस्य धारा-स्वीकारात् पुरुषभेद-स्वीकाराच्च। तेन तस्य सङ्ख्याबहुत्वमेव सिध्यति। वेदान्तिना यद् विज्ञान, तत् नित्यम् एकम् अद्वैतम्। अत. श्रौतबौद्धविज्ञानवादयो. महान् भेदो वर्त्तते एव।

ततश्च गौडपादीयागमस्य चतुर्थपरिच्छेदस्य यदि बौद्धत्वं स्यात्, तदा कथं नैकस्मिन्नपि बौद्धग्रन्थे गौडपादस्य, तदीयागमाख्य-ग्रन्थस्य वा बौद्धानुसारित्वम् उद्घोषितं? न वा तन्मतं तद्वचनं वा बौद्धग्रन्थे स्वमतानुकूलतया उद्धृतं दृश्यते श्रूयते वा? तेन एतत् कल्पनं सुतराम् अमूलकमेव। शङ्करपरवर्त्ति-वैष्णवाचार्यवृन्दः शङ्करमतस्य बौद्धमतत्व-प्रतिपादनाय बद्धपरिकरो

(१) अद्वयवज्रसंग्रहः तत्त्वरत्नावली (१७-१८ पृ.)। (२) सर्वदर्शनसंग्रहः। (३) सिद्धिका (२६)।

दृश्यते, तैरपि एतद्ग्रन्थस्य बौद्धत्वं न प्रतिपादितम्, प्रत्युत माध्वमतेन एतदागमस्य श्रुतित्वम् अङ्गीक्रियते। ततस्तेषां मतानामेव बौद्धमतत्वप्रतिपादनं सुकरम्। यतः तैः विज्ञानस्य विशेषत्वम् अङ्गीक्रियते, कैश्चित् वा असतो दृश्यत्वं च स्वीक्रियते इत्यादि। अतो वैष्णवाचार्याणां गौडपादस्य बौद्धत्वप्रतिपादनं न सङ्गतम्। अन्यदेतत्, प्रकृतम् अनुसराम।

गौडपादस्य बौद्धत्वं न सम्भवति

गौडपादीयमतेन सह बौद्धमतसादृश्यं न गौडपादीयमतस्य बौद्धत्वप्रतिपादकम्। गौडपादस्य बौद्धसम्बन्धाभावात्, एतदनुकूलप्रमाणाभावाच्च। गौडपादस्य व्यासपुत्रशुकशिष्यत्व-प्रसिद्धेः गौडपादस्यैव प्राचीनत्वं सिध्यति। तेन गौडपादस्य बुद्ध-नागार्जुन-दिङ्नागाद्यनुसरणं न सम्भवति। ततश्च प्रायेण स्वाच्छन्द्यकामिनः स्वधर्मभ्रष्टाः मनुष्याः जनगणा एव बौद्धा बभूवुः, न कोऽपि आजन्मतो बौद्धो वैदिकधर्मं समाश्रित्य वैदिकसमाजे प्रविष्टोऽभवदिति श्रूयते। विप्रमिश्रो धर्मकीर्तेर्मातुलः पितृव्यो वा मीमांसाचार्यः कुमारिलः। स तस्य गुरुरासीत्। अस्य कुमारिलस्य बौद्धमतसमाश्रयो बौद्धमतखण्डनाय, धर्मकीर्त्या सह विचारे पराजितस्य विजेतृधर्म-ग्रहणरूपप्रतिज्ञारक्षणाय च, न तु वैदिकधर्मपरिपोषणाय। तेन बौद्धेन सता बौद्ध-न्यायं परिज्ञाय बौद्धमतम् अन्ते खण्डितम्। एवं च कुत्रापि वैदिकमते बौद्धमतप्रवेशसम्भावना नासीत्। अतो बौद्धा गौडपादमतमेव अनुसृतवन्तः, न तु तद्विपरीतं सम्भवति कदाचित्, गौडपादस्य प्राचीनत्वात्, बौद्धानां वैदिकमतसमाश्रयणाभावात्, बौद्धानां वेदबाह्यत्ववैदिकसमाज-बहिर्भूतत्वादिदोषदर्शनेन गुरुशिष्यादिसम्बन्धाभावाच्च।

बौद्धव्यवहृतशब्दप्रयोगश्च गौडपादीयागमे न तत्र विनिगमको भवति, शब्दव्यवहारस्य स्वेच्छामूलकत्वात्। बौद्धैर्न संस्कृतभाषा उद्भाविता। तादृशशब्दानां गौडपादतोऽपि प्राचीनग्रन्थेषु श्रुत्यादिषु प्रसिद्धत्वाद् बौद्धैरेव अत्र गौडपादस्य अनुसरणं कृतमिति सम्भाव्यते, गौडपादस्य प्राचीनत्वात्, वेदान्ताचार्यत्वेन प्रसिद्धत्वाच्च।

मङ्गलाचरणश्लोकविचारः

गौडपादीयागमस्य मङ्गलाचरणश्लोके यद् 'द्विपदांवरम्' इति पदं, तस्य महाभारते रामायणेऽपि भूरिशः प्रयोगो दृश्यते। महाभारतरामायणादीनां बुद्धादपि प्राचीनत्वं प्रसिद्धमेव, नलभीमार्जुनभीष्मादिषु मनुजश्रेष्ठेषु तस्य प्रयोगात्। द्विपदांवरार्थकं 'द्विपदांवरिष्ठ'-पदं नारायणेऽपि प्रयुक्तं महाभारते नारायणीयपर्वाध्याये दृश्यते। तथैव व्याख्यातं शङ्करभगवता तदध्यायव्याख्याने प्रवृत्तेन आगमभाष्ये। न वा एतत् पदं वैदिकानां बौद्धानां वा कोषग्रन्थे बुद्धपरत्वेन गृहीतम्। यौगिकः शब्द एवैष, न तु योगरूढः। कोषादीन् उपेक्ष्य यो व्यवहारस्तत्र योगरूढत्वकल्पनं न समीचीनम्। अतस्तस्य योगरूढत्वकल्पनं दुराग्रहस्य निदर्शनमेव।

**स्वधर्मभ्रष्टविशेषाणां बौद्धत्वम्**

अत्र ये खलु वैदिका बौद्धा अभवन्, तेषां विवरणं यथा विशालबुद्धिना नैयायिक-शिरोमणिना उदयनाचार्येण प्रदत्तम्, तस्य कुसुमाञ्जलिग्रन्थे तथा आत्मतत्त्वविवेके, तदत्र स्मर्त्तव्यम्। तस्य किञ्चिन्मात्रम् अत्र उद्धियते, यथा

"सम्भवति चैते हेतवो बौद्धाद्यागमपरिग्रहे। तथा हि भूयस्तत्र कर्मलाघवम् इति अलसाः। इतः पतितानामपि अनुप्रवेश इति अनन्यगतिकाः। भक्ष्याद्यनियम इति रागिणः। स्वेच्छया परिग्रह इति कुतर्काभ्यासिनः। पित्रादि-क्रमाभावात् प्रवृत्तिरिति पाषण्ड-संसर्गिणः। "उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते" इत्यादिश्रवणाद् अव्यग्रताभिमानिनः। सप्तघटिकाभोजनादिसिद्धेः जीविका इति अयोग्याः। आदित्य-स्तम्भनं, पाषाणपाटनं, शाखाभङ्गो, भूतावेशः, प्रतिमाजल्पनं, धातुवाद-इत्यादि धन्धनात् कुहक-वञ्चिताः। ततस्तान् परिगृह्णन्ति इति सम्भाव्यते। अतो न ते महाजन-परिगृहीता इति विभागः" ( कुसुमाञ्जलिः ३३१ पृः )। आत्मतत्त्वविवेके कीर्त्तिनाम्ना बौद्धनिन्दनमपि दृश्यते। ४र्थः परिच्छेदः ४३१ पृष्ठः द्रष्टव्यः।

एवं सति यत्र एतादृशम् अवज्ञान-हतादरादिकं बौद्धान् प्रति वैदिकाना, तत्र तयोर्मध्ये विद्यादानादान-सम्बन्धादिकं तथा वैदिकधर्मज्ञानयोर्मध्ये बौद्धमतानुप्रवेश-कल्पनम् उन्मत्तानामेव शोभते।

**विवरणवाक्येन तस्य बौद्धविज्ञानवादिता निरासः**

ततश्च विज्ञाने प्रतिभास्यमानत्वं बौद्धाना भास्करादीना च, न तु अद्वैतिनाम् इत्यपि एकं महद् वैलक्षण्यम् अद्वैतबौद्धमतयोः। उक्तं च पञ्चपादिकाकृद्भिः

"तदेव अहंकर्त्तुः सदैकरूपावगमात् स्थायित्वेऽपि अर्थक्रिया-सम्भवात् न नीलस्य स्वगतापरोक्षत्व-मात्रेण माहायानिकपक्षः समर्थ्यते, किन्तु ग्राहकस्य अहं-कर्त्तुरात्मनः स्थायिनोऽभावे" इत्यादिकम्।

विवृतञ्च एतद् विवरणकृद्भिः "ननु विज्ञाने प्रपञ्चस्य कल्पितत्वं तव तस्य च तुल्यम्। सत्यम्। विज्ञाने प्रतिभास्यमानत्वं च तव ( भट्टभास्करस्य ) तस्य च तुल्यम् इति विज्ञानवादस्त्वदीय ( भास्करीय ) दर्शनं किं न स्यात्? सत्यपि प्रतिभास्यत्वे सत्यमिथ्या-विभागोऽस्ति इति चेत्? इहापि सत्यपि मिथ्यात्वे अर्थक्रियासमर्थ-सत्त्वासत्त्व-विभागोऽस्त्येव। कल्पितत्वे नैव विभागसिद्धिरिति चेत्? प्रतिभास्यत्वेऽपि न सत्यमिथ्या-विभागसिद्धिः" इत्यादि।

एतेनापि अद्वैतबौद्धमतयो प्रभेदः प्रतीयते। एतेन भट्टभास्करस्य समयोऽपि अवगम्यते। स तु शङ्कर-समसामयिक एवेति इत एव सिध्यति इत्यपि अत्र ध्येयम्, पद्मपादेन भास्कर-मतस्य उल्लेखात्।

गौडपादमतस्य शून्यवादत्वशङ्कानिरासः

न वा गौडपादमतं बौद्धानां शून्यवादः। कथाञ्चिद् बौद्धानां मते तत्त्वं शून्यं, तच्च शून्यम् असदेव। अपरेषां बौद्धानां मते तु शून्यं सदेव। अन्येषां बौद्धानां मते पुनः चतुष्कोटि-विनिर्मुक्तं निरुपाख्यम् अवस्तु एव शून्यम्। एतेषां नैकमपि मतं गौडपादाभिमतम्, तन्मते तु अजन्नित्यैकाद्वैत-सद्वस्तु-स्वीकारात्। ततश्च असच्छून्यवादोऽपि असङ्गतः, असतः सत्त्वेन प्रतीत्यर्हत्वं न सम्भवति। यत्र किञ्चित् तत्त्वमपि नास्ति, तत्र तादृशी प्रतीतिः असम्भाविनी। दृश्यजातस्य स्वरूपं यदि असत् स्यात्, तदा यत्र किञ्चित्त्व-प्रतीतिर्न सङ्गता। युक्त्यादिभिः यत्र सिध्यति, तत्र असत्त्वं वा शून्यत्वं वा कल्पयितुं न शक्यते। अतः असच्छून्यवादो न युक्तिसहो न वा श्रुतिसम्मतः। गौडपादीयमतस्य श्रुतियुक्तिसिद्धत्वं प्रसिद्धमेव। अतो न असच्छून्यवादो गौडपादस्य मतम्। न वा बौद्धानां सच्छून्यवादः तस्य मतं भवति, बौद्धमते सतः क्षणिकत्व-स्वीकारात्। "यत् सत् तत् क्षणिकम्" इत्येव तेषां तत्र अनुमानम्। वेदान्तिनां यत् सद् वस्तु तन्नित्यं निष्क्रियम् अजम् एकमेवाद्वितीयम् स्वप्रकाशं श्रुतिसिद्धमेव। श्रौतस्य तस्य युक्त्या सम्भावना-मात्रं कल्पयितुं शक्यते। अतो वेदान्तिनां सद् वस्तु न बौद्धोक्तं सद् भवेत्। बौद्धैः सतोऽक्षणिकत्वाद्वैतत्व-स्वप्रकाशत्व-स्वीकारे तैः औपनिषदं मतं समाश्रितम्, उपनिषदां प्राचीनत्वात्, बौद्धानामपि औपनिषद ज्ञानसद्भाव-स्वीकाराच्च। मैत्रायणि-नृसिंहतापनीयोपनिषदोः 'शून्य'-पदं ब्रह्म-परत्वेन व्यवहृतम्, अविचारितमपव्याक्षेपात्। उपनिषदां पौरुषेयत्वार्वाचीनत्वकल्पनेन एतस्य परिहारप्रयासो वैदिकशिक्षाविरहितानां म्लेच्छानां एव वा शोभते, तेन नास्माकं काचिदपि क्षतिः। शून्यासत्त्ववादिनां कृते एतदेव पुष्कलं यत्—असतो भावोत्पत्तिः, सत्त्वेन प्रतीत्यर्हत्वं वा सत्तादात्म्यं विना न सम्भवति कथञ्चन। अतो गौडपादमतेन सदधिष्ठानत्वेन दृश्यानां प्रतीतिः इत्युच्यते, यथा गौडपादीयागमे—

"उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम्" ॥४।३८ इति

इत एव स्पष्टं प्रतिभाति—शून्यासत्त्व-वादिनां मतं न गौडपादमतम्। * अथ चतुष्कोटि-विनिर्मुक्तं निरुपाख्यम् अवस्तु शून्यमपि न गौडपादेन उपदिष्टम्। चतुष्कोटि-विनिर्मुक्तत्वं नाम "न सत्त्वं, नासत्त्वं, न सदसत्त्वं, न सदसद्भिन्नत्वम्"। अत्र तु द्वौ पक्षौ सम्भवतः। आद्यः—अर्थक्रियाकारित्वं सत्त्वम्, तद्भिन्नम् असत्त्वम् इति कृत्वा तादृशं चतुष्कोटि-विनिर्मुक्तत्वं साधितम्। एतन्मते चतुष्कोटि-विनिर्मुक्तत्वे यत्किञ्चिद् अस्तित्व-मात्रमपि भवेत्। अन्यस्तु—न अर्थक्रिया-कारित्व-राहित्यम् असत्त्वम्, किन्तु अवस्तुत्वमेव असत्त्वम्। अथवा अनस्तित्वमेव तत्। अन्यथा चतुष्कोटि-राहित्यं न निरुपाख्यम् अवस्तु भवेत्। वेदान्तिनां मते तु अर्थक्रिया-कारित्व-राहित्यं सद्ब्रह्म-वस्तुनोऽपि सम्भवेत्। अतो बौद्धैः चतुष्कोटि-विनिर्मुक्तत्वेन यत्

* एतदर्थं पण्डितप्रवर-श्रीहाराणचन्द्र-शास्त्रिपादानां ग्रन्थाधिकम् अनुसन्धेयम्।

सत्त्वस्य निषेधः कृतः, तत् सत्त्वं न अर्थक्रियाकारित्वं, परन्तु तद् अस्तित्वमात्रमेव। एवं च बौद्धानां चतुष्कोटि-राहित्यं शून्यम् इति मते न गौडपादस्य शून्यवादित्वं कल्पनीयम्। तच्च अजातिवादेन न सम्भवति। तन्मते निष्क्रियं शुद्धं सद्वस्तु एव केवलम्। गौडपादस्य अजातिवादेन न एतादृशम् अजं साम्यं सदेव वस्तु स्वीकृतं भवति। वस्तुतस्तु द्वितीयकल्पानुसारि-चतुष्कोटि-विनिर्मुक्तत्वम् असत्त्वस्य नामान्तरमेव। अतो गौडपादीयमते काचिदपि बौद्धशून्यवादिता-कल्पना सुदूरपराहतैव।

### बौद्धानां गौडपादीयमतानुसरणम्

श्रीमदुदयनाचार्य-वाक्येनापि एतस्य समर्थनं कर्तुं शक्यते। तेनोक्तम् शून्य-वादिभिः कुत्रापि शून्यस्य स्वप्रकाशत्वं न स्वीकृतं नापि सूचितम्। अनुमानकुशलैरपि बौद्ध-शून्यवादि-वाक्यतः शून्यस्य स्वप्रकाशत्वम् अनुमातुं न शक्यते। अत एव आत्मतत्त्वविवेक-ग्रन्थे शून्यवाद-निराकरणावसरे अभिहितम् उदयनाचार्यैः

"अस्तु तर्हि शून्यतैव परमनिर्वाणम् इति चेत् ? न। सा हि यदि असिद्धा, कथं तदवशेषं विश्वम् ? परतश्चेत् सिद्धा, परोऽपि अभ्युपगन्तव्यः। स च परो यदि संवृतिरेव, विश्व-शून्यतयोर्न कश्चिद् विशेषः, कथं तदपि अवशिष्येत ? असंवृतिश्चेत् परः, परत एव सिद्धा, अनवस्था। स्वयम् असिद्धा चेत् कथं शून्यत्वमपि साधयेत् ? स्वतः सिद्धा चेत् ? आयातोऽसि मार्गेण," इत्यादि।

एतेन गौडपादस्य मतं न बौद्धशून्यवादः कथमपि भवति। श्रुतिप्रामाण्यम् अनादृत्य गौडपादीय-श्रौत-सद्ब्रह्मवादं च विकृत्य बौद्धैः शून्यवादः परिकल्पित एवेति। प्रागुक्त-विष्णुपुराणवाक्यमपि समर्थयति चैतत्। एवं च गौडपादस्य बुद्धादपि प्राचीनत्वम् अव्याहत-मेव, गौतम-बुद्धमतादपि प्राचीनबौद्धमतसत्त्वं च सिद्धम्। तेन ब्रह्मसूत्रादि-दर्शनशास्त्राणां गौतमबुद्धादपि प्राचीनत्वं प्रमाणितम्। तेषां कलेरादौ आविर्भावश्च अबाधित एवेति। तेन च ब्रह्मसूत्रस्य श्रुत्यर्थ-मीमांसा-रूपत्वादिकं सुसिद्धमेव। कथं तर्हि गौडपादीयवाक्यं "नैतद् बुद्धेन भाषितम्" ( गौ॰ आ॰ ४ प्र ९९ श्लोः ) इति संगच्छते ! तत्र ब्रूमः सुगतगौतमबुद्धात् पूर्वतनबुद्धमतेन सह औपनिषदसिद्धान्तस्य भेदप्रदर्शनार्थम् एतत्। अतः प्राचीनबुद्धमतसत्त्वं प्रामाणिकमेव।

### ब्रह्मसूत्रस्य श्रुत्यर्थमीमांसकत्वे शंकानिरासः

अथापि यद्यत्र शङ्क्येत तत् कथं भगवत्पादैः शङ्कराचार्यैः स्वकीय-ब्रह्मसूत्रभाष्ये द्वितीयाध्याय-द्वितीयपादे बौद्धादिमत-खण्डनावसरे वेदतात्पर्य-पूर्वपक्षभूतानि बौद्ध-जैनादि-मतमूलकानि श्रुतिस्मृति-वाक्यादीनि न प्रदर्शितानि ? यतः तत् न कृतं, तेन ब्रह्मसूत्रमध्ये सर्वत्र न श्रुतिमीमांसा कृतेति कथं न अनुमीयते ?

नैतत् सङ्गतम्। बौद्धादिमतं श्रुतिमूलकमपि न श्रुत्यनुगतम्। गौतमादिभिः बौद्धैः श्रुतिर्न प्रमाणत्वेन समाश्रिता, प्रत्युत तदप्रामाण्यमेव उद्घोषितं तैः। यद्यपि प्राचीनैः बौद्धैः वेदप्रामाण्यं स्वीक्रियते स्म, तथापि तत् गौतमादिभिः बौद्धैः नाङ्गीकृतम्। पक्षान्तरेण बहुभिः बौद्धैः वेदप्रामाण्यं खण्डितं निन्दितमपि। एतदर्थं तत्त्वसंग्रहादयो ग्रन्था अनुसन्धेया। अतः प्रायेण तर्कबलेनैव एतेषां मतानां खण्डनं कृतं भाष्यकारैः। (शं० भा० २।२।२८ सूत्र द्रष्टव्यम्।) तत्त्वबुभुत्सुभिः बौद्धादि-मतमूलानि पूर्वपक्षभूतानि श्रुतिवाक्यानि आविष्करणीयानि इत्येव खलु भाष्यकाराणां तत्र आशयः। अतोऽत्रापि श्रुतिमीमांसा प्रकारान्तरेणैव भाविता, तेन नात्र व्यभिचाराशङ्का करणीया। एतदर्थं वेदान्तसारात्स्य ग्रन्थः द्रष्टव्यः।

बौद्धमतं सांख्यवैशेषिकवेदान्तमतमिश्रणफलम्

वस्तुतस्तु यदि बौद्धमत-विश्लेषणं कृतं स्यात्, तदा सर्वास्तित्व-वादिबौद्धमतं तथा विज्ञानवादि-शून्यवादि-मतद्वयम्—एतत् मतत्रयमेव सांख्य-वैशेषिक-वेदान्तमत-संमिश्रण-रूपमेवेति प्रतिभाति। नात्र एतदतिरिक्तं तत्त्वं किमपि तत्र विद्यते। बुद्धेन भगवता नूतनं किमपि नाविष्कृतम्। यत् तु नूतनं तत् तेषां संमिश्रणमात्रं तस्य उपपत्तिरूपमात्रं च तेन तेषां मतानां विकृतिमात्र-साधनं कृतम् इत्येव सिध्यति। तथा हि वैशेषिकाणां मते यः कार्माणां निरन्वयविनाशः, सांख्यानां मते यश्च धर्मधर्मिपरिणामादिकम्, तदेतत् सिद्धान्तद्वयम् एकीकृत्य बौद्धानाम् आन्तरबाह्यपदार्थानां क्षणिकत्वं, सन्तानादिकञ्च कल्पितम्। बौद्धानां सांख्य-मतानुसारित्वं सप्तमाष्टम-शतकीय-बौद्ध शान्तरक्षितकृत-तत्त्वसंग्रहाख्य-ग्रन्थतोऽपि प्रमाणयितुं शक्यते। तत्र वसुमित्र-प्रभृति-सुप्रथित-बौद्धाचार्य-चतुष्टयानां मतं सांख्य-परिणामवादानुविद्धम् इति उक्त्वा तत्त्वसंग्रहकार-शान्तरक्षितेन तट्टीकाकार-कमलशीलेन च खण्डितम् आस्ते इति दृश्यते। बुद्धभगवत उपदेष्टा अराडकालमः कश्चित् सांख्याचार्यः आसीत्—इत्यपि अश्वघोषकृत-बुद्धचरितादि-ग्रन्थे दृश्यते। अतो बौद्धमत-खण्डनं सांख्य-वैशेषिकादीनां मत-खण्डन-सदृशमेव। तेन यथा सांख्यादि-मतखण्डने ब्रह्मसूत्रस्य श्रुतिमीमांसारूपत्वं सम्भवेत् तथा बौद्धजैनादि-मतखण्डने अपि तस्य श्रुतिमीमांसारूपत्वं न व्याहन्येत। तथैव बौद्धानां क्षणिक-विज्ञानवादो वेदान्तिनां ब्रह्मणो विज्ञानस्वरूपत्वं विहाय वृत्तिज्ञानस्य क्षणिकत्वम् अवलम्ब्य उद्भावितः। दृश्यानां मिथ्यात्वम् अनिर्वचनीयत्वं वा यद् वेदान्तिनां मतं, तदेव आश्रित्य बौद्धैः शून्यवादः प्रवर्तितः। तेन केचिद् बौद्धाः सत्शून्यवादिनः, केचिच्च असत्शून्यवादिनः जाताः। वैभाषिकाणाम् असत्कार्यवादः, सौत्रान्तिक-योगाचाराणां सत्कार्यवादश्च वैदिक-दार्शनिक-मतानुकरणमेव, यतस्तन्मते असत्-कार्यवादः सत्कार्यवादः सत्कारणवादश्च इति वादत्रयेण सर्वे दार्शनिकमतवादाः व्यवस्थिताः। शून्यस्य सत्त्ववादि-बौद्धानां मते सत्कारणवादः स्वीकृतः स्यात्। असत्-शून्यवादः एव वेदान्तिभिः निरस्यते। वैदिक-देवतादीनां प्राचुर्यं बौद्धमते दृश्यते एव। उपासनं च तेषां वैदिकतान्त्रिकाणां

प्रथानुसरणेन । योगदर्शनात् तेषां साधनपद्धतिः उद्भाविता । एवं च बौद्धमतं वैदिकमतस्य विकृतरूपमेवेति निर्धार्यते । पाश्चात्त्यपण्डित-वर्गाणां यद् वैदिकानां बौद्धमतावलम्बिता-प्रतिपादनं, तद् तु तेषाम् अनभिज्ञताया निदर्शनमेव । तेन बौद्धादि-मत-खण्डनेन ब्रह्मसूत्रस्य न श्रुतिमीमांसादिरूपत्वं बाध्यते ।

### ब्रह्मसूत्रे मतविशेषाभावशङ्कानिरासः

अथात्र केचन मन्यन्ते ब्रह्मसूत्रं न किमपि मतवाद-विशेषं समाश्रित्य रचितं भगवता व्यासदेवेन । शैव-शाक्त-वैष्णवादयः सर्वे उपासका निःश्रेयसाभिलाषिणो ज्ञानिनो योगिनो वापि यथा अष्टादश-पुराणादिषु स्वस्वमतानुकूल्यं लभन्ते, शैवाः शिवपुराणादिषु, वैष्णवा विष्णु-पुराणादिषु, तथा सर्वे दार्शनिका मतवादिनो द्वैत-द्वैताद्वैत-विशिष्टाद्वैतवादिनो ब्रह्मसूत्रेषु स्वस्वमतानुकूल्यं लभेरन् इति कृत्वा ब्रह्मसूत्रं रचितं भगवता व्यासदेवेन । सर्वे सम्प्रदाया ब्रह्मसूत्रेभ्यः स्वाभीष्टं प्राप्नुयुः इत्येव ब्रह्मसूत्रकृताम् आशय आसीत् इत्येव युक्ततरम् । अतो ब्रह्मसूत्रेषु व्यासप्रोक्तश्रौतमतविशेषस्य सद्भावासद्भाव-निर्णय-प्रचेष्टा अत्र निष्फला एवेति प्रतिभातीति ।

### श्रुत्यर्थमीमांसैव ब्रह्मसूत्रप्रयोजनम्

एवं च यावद् आलोचनं करिष्यते, तावदेतत् स्पष्टं भवेत्, यद् ग्रन्थेनानेन ग्रन्थकर्त्रा भगवता व्यासदेवेन श्रुत्यर्थ-मीमांसाच्छलेन सर्वमूलालौकिक-तत्त्वविषये वेदान्तसिद्धान्त एव प्रकटीकृतः। युक्तितर्काभ्यां स एव सिद्धान्तः समुद्धलितः, न तु तद्विषयक-स्वमत-स्थापनार्थं रचितोऽयं ग्रन्थ इति, यतो विकार-विरहिते जगत्कारणभूते अलौकिकाद्वैत-तत्त्वविषये वेदान्ता एव प्रमाणम्—"औपनिषदं पुरुषं पृच्छामि," "तद् ब्रह्म उपनिषत्परम्" इत्यादिश्रुतिभ्यः, 'शास्त्रयोनित्वात्' इति न्यायाच्च। एतेन जगत्कारणविषये मतभेद-निराकरणमपि सम्भावितं भवति। यतः तर्कयुक्त्यादिभिः वेदान्तातिरिक्त-प्रमाणान्तरैर्वा अलौकिकविषये मतभेद-निराकरणं न सम्भवति कथञ्चन, "अचिन्त्यम् अव्यपदेश्यम्" इत्यादिश्रुतिभ्यः, "तर्काप्रतिष्ठानात्" इत्यादिन्यायाच्च। एतदेव ग्रन्थस्यास्य रचनोद्देश्यम्, एतदेव अस्य रचनाकौशलं च। एतत् कौशलम् अवगत्य यः कोऽपि ब्रह्मसूत्रार्थ-निर्णयाय यतिष्यते, तेनैव श्रमितव्यं, तेनैव प्रमदितव्यं, तेनैव व्यासाभिप्रेतार्थाद् दूरम् अवस्थातव्यम्।

### उत्तरमीमांसेति प्रथनामधेय ग्रन्थरचनाकौशलनिरूपणफलम्

एवं च एतावद् यद् एतद्ग्रन्थरचना-कौशल-निरूपणम् तद्, एतद्ग्रन्थनाम "ब्रह्ममीमांसा," "उत्तर-मीमांसा" इत्यादौ मीमांसा-शब्देनैव आविष्कृतम्। कौशलं चैतद् अस्मिन् शास्त्रे श्रुतिसङ्गतिरिति नाम्ना अभिधीयते। अध्याय-पादाधिकरण-सूत्रार्थेषु सर्वत्र अस्याः गतिः अव्याहता, सर्वसैषा पालनीया। अतो वक्ष्यमाण-दश-भाष्यकारादिषु मध्ये यः कोऽपि एतां श्रुतिसंगतिं लङ्घयेत्, स एव व्यास-सम्मत-सूत्रार्थाद् हीयेत, तेनैव असङ्गतम् आचरणं कृतं स्यादिति मन्तव्यम्। आस्तां तावत्, अतः परं द्रष्टव्यं किम् अपरं कौशलम् अत्र अवलम्बितम् एतद्-ब्रह्मसूत्ररचनायां सूत्रकृता।

### युक्त्यनुसरणमत्र द्वितीयं कौशलम्

ब्रह्मसूत्र-रचनायां यदपरं कौशलमेकं सूत्रकारेण भगवता अवलम्बितं, तत् सम्पूर्णं युक्त्यनुसारेण अध्याय-पाद-विभागादिरूपं, तथा अधिकरण-रचनं सूत्र-सन्निवेशादिकं च। यतो यत्किञ्चिद् दार्शनिक-मतवाद-वर्णने यदि कोऽपि प्रवृत्तो भवेत्, तदा तद्दार्शनिकमतानुसारेण आदौ तत्त्वनिर्णयः, ततः तदनुगुण-साधननिर्देशः, ततश्च तत्साधन-फलमपि यथा तस्य वर्णनीयं भवेत्, तथैव अत्र सूत्रकृतापि अस्यां ब्रह्मसूत्र-रचनायां कृतम्। तेन सूत्रकृता आदौ अध्यायद्वयेन तत्त्ववर्णनं कृतम्। तत्रापि प्रथमाध्याये ग्रन्थप्रतिपाद्य-मतवादाश्रयभूतश्रुतीनां समन्वयं प्रदर्शयता तत्त्ववर्णनं कृतम्, द्वितीयाध्याये तादृश-समन्वयार्थे यदन्य-मतवादैः सह विरोधः सम्भाव्यते, तैः सह स्मृतियुक्तिभ्यां विरोध-परिहारपूर्वकं स्वाभिमत-तत्त्ववर्णनं कृतम्। एवं च अध्यायद्वयेन श्रुतिस्मृतियुक्तिभिः स्वपक्ष-स्थापन-परपक्ष-खण्डनद्वारा तत्त्ववर्णनमेव पूर्णतां गतम्।

एव च किञ्चिच्छास्त्रावलम्बनेन मतवाद-वर्णनं यदा कर्त्तव्यं भवति, तदा इयमेव गतिः स्वाभाविकी । तदा समन्वयः अविरोधः उभय एव वक्तव्यो भवति । एवं तत्त्ववर्णने कृते तस्य ज्ञानफललाभाय किञ्चित् साधनमेव अपेक्ष्यते । एतादृशी साधनफल-विषयिणी जिज्ञासापि तदा स्वाभाविकी । अत एव साधनं फलं च यथाक्रमम् अस्य तृतीय-चतुर्थाध्यायद्वये वर्णितम् । एतेन एतद्-ग्रन्थस्य अध्यायचतुष्टय समन्वयाविरोध-साधन-फलात्मकं भवितुम् उचितं भवति । तदेव अत्र वर्त्तते च । यत्र तु किञ्चिच्छास्त्रावलम्बनेन मतवाद-स्थापन न क्रियते, तत्र समन्वयाध्यायस्य प्रयोजनं नास्ति । तत्र स्वपक्षस्थापन-परपक्षखण्डनरूपः अविरोधरूपो वा एक एव अध्याय आवश्यकः, अथवा खण्डनमण्डनाभ्यामेव अध्यायद्वय-रचनं सप्रयोजन भवति । अतो युक्त्यनुसरणमपि सूत्रकृताम् एतद्ग्रन्थ-रचनाया अपरं कौशलमेकं दृश्यते । तत्रापि कथम् अध्याय-चतुष्टयस्य समन्वयाविरोधादिनाम्ना अभिधानं, सूत्रेषु तस्मिन् अनुक्तेऽपि, तद् अग्रे वक्ष्यते ।

### पादविभागे युक्त्यनुसरणानुसन्धानम्

ननु अध्याय-चतुष्टयस्य विभागाय युक्त्यनुसरणे कृतेऽपि तत्र प्रत्येकम् अध्याय कथ पादचतुष्टयेन विभक्त कृत ? तत्र कीदृशी युक्त्यनुसारिता ? कथं द्वित्र्यादि-संख्यान्तरेण न विभाग कृतः; कथम् अध्याय-विभागार्थं परिच्छेदाद्यभिधानं नावलम्बितम् । पाद-नाम-ग्रहणेऽपि द्वित्र्यादिसंख्या न असम्भाविता असङ्गता वा अभविष्यत् ? द्विपदा मनुष्या, ब्रह्मण पादत्रयम् अमृतम्, षट्पदा भ्रमरा इत्यत्र पाद-संख्याया अनिर्द्धारितत्वात् । अतस्तत्र चतुर्धा पादविभागे का युक्ति ?

### चतु संख्यावलम्बनहेतु

अत्रेयं युक्ति खलु सम्भाव्यते, यतः चतुःसंख्यया धर्म-ब्रह्मतत्त्व-व्याख्यानं शास्त्रेषु कृतं दृश्यते । यथा "वृषश्चतुष्पाद् भगवान् धर्म सत्ये प्रतिष्ठित." इत्यत्र वृषरूपधर्म पादचतुष्टयेन कल्पित, स्थूल-सूक्ष्म-कारण-तुरीय-भेदेन आत्मा वा ब्रह्म चतुर्धा इति माण्डूक्योपनिषदि वर्णित दृश्यते । वेदाश्चत्वार, वर्णाश्चत्वार, आश्रमाश्चत्वार, तथा विष्णोश्चत्वारो व्यूहा । एव च चतुःसंख्याया धर्म-ब्रह्मविषयत्वाद्, ग्रन्थस्यास्य ब्रह्मविषयत्वाच्च चतुरध्यायात्मकस्य अस्य ग्रन्थस्य प्रत्येकम् अध्याय चतुर्भि पादै विभक्त स्याद् एवमेव ग्रन्थकृताम् अभिप्रायो भवितुम् उचित इत्येव अनुमीयते । तेन अत्रापि युक्त्यनुसारिता दृश्यते एव सूत्रकृताम् । अतो युक्त्यनुसरणम् एतद्ग्रन्थ-रचनाया अपरमेकं कौशलमिति कल्पयितु शक्यते ।

### षडङ्गाधिकरणावलम्बनहेतु.

ननु षडधिकरणभाग-त्रिविध-प्रतिपाद्य-कथनमपि एतद्ग्रन्थस्य युक्त्यनुसरणमेव दृश्यते । नैयायिकानां पञ्चावयवन्यायेन संशयादि-व्यवस्थापूर्वक-वाद-जल्प-वितण्डा-तर्कादीनां न दृश्यन्ते, तथा न युक्त्यनुसरणे कश्चिद् षडङ्गाधिकरणद्वारा तस्य वर्त

ततोऽधिकतया युक्त्यनुसरणमूल मन्यते । अनयव-त्रयात्मक-न्यायस्य लघनात् अधिकरणान्तर्गत-पूर्वोत्तरपक्षद्वये तादृशन्यायस्य अन्तर्भावात्, कथायां च तन्नाम्ना विषय-बाहुल्य प्रसङ्गाच्च। तेन अत्रापि अधिकरणरचनायां युक्त्यनुसरणं मुख्यतया प्रतिभाति। एव च सूत्र-रचनायामपि युक्त्यनुसारिता दृश्यते एव। एतत् तु नात्र विचार्यते, बाहुल्यभयात् स्पष्टत्वाच्च। तथा च एतद्ग्रन्थ-रचनायां युक्त्यनुसरणम् अपरमेक कौशलमिति सिद्धम्। तथापि एतत कौशल न मुख्यम्। मुख्य तु श्रुति नाम्ना याय-न्यायाधिकरणस्मृत्यर्थान्वयम्,—एतन्न विस्मर्तव्यम्। एतत गर्न तु क्रमेण वक्ष्यते। न विस्मर्तव्यम्—एतत् ग्रन्थरचनाकौशलज्ञानं ग्रन्थतात्पर्य्यनिर्णायकमिति च।

**ग्रन्थनामनिर्णय**

एव च यदि युक्त्यनुसरणम् एतद्ग्रन्थरचनाया एक कौशलम्, तर्हि आदौ अस्माक निरूपणीय—कि नाम एतद्ग्रन्थस्य भवितुम् उचितमिति, यत सूत्रकृता एतद्ग्रन्थनाम निर्देशकं सूत्रादिकम् एतद्ग्रन्थमध्ये कुत्रापि न कृतम। वस्तुतस्तु बहुभि नामभि प्र योऽयं लोके प्रथित, एतच्च उक्तमेव। तेन अस्माभि युक्तिसहाय स्तुभि एतद्ग्रन्थनाम आदौ निर्णेयम्। यत एतेनापि एतद्ब्रह्मसूत्रग्रन्थस्य तात्पर्य्यनिर्णये सहायो भविष्यति।

दृश्यते च—अस्य सूत्रात्मकग्रन्थस्य प्रथम सूत्रम अथातो ब्रह्मजिज्ञासा"। एव चेत् एतत्सूत्रात्मको ग्रन्थो ब्रह्मज्ञानाय रचित—इत्यत्र न कोऽपि सन्देहावसर। तेन एतस्य "ब्रह्मसूत्रम्" इति नाम सङ्गतमेव प्रतिभाति। तथैव ग्रन्थोऽयं ब्रह्म प्रतिपादनपरोप निषत्परनाम-वेदान्तानां मीमांसारूप—इति एतस्य अपरसूत्राणाम आलोचनेन परिज्ञायते। ततो ब्रह्मण्येव वेदान्तानां तात्पर्यं, वेदान्तश्च वेदस्य उत्तरभागरूप, तेन "उत्तरमीमांसा" नामापि अस्य सङ्गतमेव। ततश्च वेदान्तसिद्धान्त एवास्य अवलम्बनम्, उपजीव्यश्च, तद्वेदान्ताव लम्बनेन अत्र दार्शनिकरीत्या तत्त्वनिर्णयादिक कृतम्, अतोऽस्य "वेदान्तदर्शनम्" इति नामापि युज्यते। अथवा वेदान्तसिद्धान्त एवात्र दृश्यते, तेनापि "वेदान्तदर्शनम्" इति नामापि अस्य सङ्गतमेव। एवं च अस्य यानि नामानि प्रसिद्धानि लोके, तानि सर्वाणि प्रायेण प्रथम सूत्रार्थालोचनेन ज्ञायन्ते। दृश्यते च एवं, यत् सूत्रकृता व्यासेन एतस्य ग्रन्थस्य केनापि नाम्ना न निर्देश कृत, अतो बहुभि नामभि अयं लोके प्रसिद्धि गत। एव च एतद्ग्रन्थस्य नामनिर्धारण व्यासस्य युक्तिप्रियत्वस्य निदर्शनम् एव। यतो ग्रन्थस्य विषयानुसारेण तस्य यथायोग्यनामनिर्देशो भवतु, तदेव नाम व्यासस्य अभिमतं भविष्यति—इत्येव तस्य अत्र आशय आसीत्—इति सम्भाव्यते। अन्यथा ग्रन्थादौ ग्रन्थान्ते वा, एकेन सूत्रेण ग्रन्थनामनिर्देशे कृते का वा महती क्षति अभविष्यत्। तथापि एतस्य "भिक्षुसूत्र"-नामकत्वे यो हेतु, तत्र किञ्चिज् ज्ञातव्यम् अस्ति। पाराशरि' इति व्यासस्य एक नाम, तस्य पराशरपुत्रत्वात्। भिक्षुशब्दश्च पाराशरि-शब्दस्य पर्याय—इति अमरकोषग्रन्थे दृश्यते। "भिक्षु परिव्राट्

कर्मन्दी पाराशर्यपि मस्करी" इति । तेन ब्रह्मसूत्रस्य व्यास-रचितत्व-ज्ञापनाय एतस्य "भिक्षु-सूत्रम्" इति नाम उचितम् इति कल्पयितुं शक्यते । एवं च ब्रह्मसूत्रस्य "व्याससूत्रम्" इति नामापि प्रसिद्धं लोके, व्यासेन रचितत्वात् । अथ चेद् व्यासेन यदि एतस्य ग्रन्थस्य एकमेव नाम सूत्रितं स्यात्, तदा एतद्ग्रन्थस्य नामनिर्द्धारण-फलम् एतादृश बहुभाव-व्यञ्जक न अभविष्यत् । एतदर्थं युक्तिप्रियो भगवान् व्यासदेव, शिष्यवर्गान् युक्तिप्रियत्वम् उपदेष्टु तस्य स्वल्पाक्षरात्मक-सूत्रग्रन्थस्य स्वयं नामनिर्देशं न कृतवान्—इत्येव मन्यामहे वयम् । तथा च 'मौनेन यद्यभीष्टं स्याद् भाषणे किं प्रयोजनम् ।स्वल्पेन यदि सिद्धिः स्याद् बाहुल्य तत्र मोहनम् ॥' इत्येव वक्तुं शक्यते । अतो निगूढाशयस्य व्यासस्य नैतद् दोषाय न्यूनत्वाय वा भवति ।

### ग्रन्थस्य असम्पूर्णताशङ्कानिरास

ततश्च इदम् आशङ्क्यते किम् उपलभ्यमानो ग्रन्थोऽयं सम्पूर्णो न वा ? किं कालेन अयं खण्डितो जातो न वा ? यथा वेद-पुराण-महाभारतादि-शास्त्राणि इदानीं खण्डितानि एव उपलभ्यन्ते, तथैव किं ब्रह्मसूत्रमिद खण्डितम् अखण्डित वा उपलभ्यते ?

नेयम् आशङ्का समुचिता । अस्य आद्यन्त-सूत्रद्वय-दर्शनेन इयम् आशङ्का न लब्धाव-सरा भवेत् । तत्र "अथातो ब्रह्मजिज्ञासा" इत्येतद्ग्रन्थस्य आद्यं सूत्रम् । तत्रापि "अथ" पदेन ग्रन्थारम्भ सूच्यते । तथा "अनावृत्ति शब्दात् अनावृत्तिः शब्दात्" इति एतद्ग्रन्थस्य अन्तिमं सूत्रम् । अत्र सूत्रस्य द्विरुक्तिरेव ग्रन्थ-समाप्तिसूचिका, यतः अन्यत्र सूत्रपदमात्रस्य द्विर्वचनम् अध्यायसमाप्तिज्ञापक सर्वभाष्यकार-सम्मतम् इति दृश्यते । तेन साकल्येन सूत्रस्य द्विरुक्ति ग्रन्थसमाप्तिज्ञापिकेति कल्पयितु शक्यते । अस्मिन् विषये नैकस्यापि भाष्यकारस्य मतभेदोऽपि दृश्यते, श्रूयते वा । अत आद्यन्त-सूत्र-सद्भावाद् ग्रन्थोऽयं न खण्डित इति सम्भाव्यते । ग्रन्थमध्येऽपि सर्वत्र सूत्राधिकरणाना मिथ आकाङ्क्षानुरूपसंगतिदर्शनात् नास्य खण्डितत्वशंकापि । अतो ग्रन्थोऽयं सम्पूर्ण एव उपलभ्यते ।

### ग्रन्थकारनिरूपणम्

अथ इदानीं जिज्ञास्य भवति कोऽस्य ग्रन्थकर्त्ता इति ? सूत्रकृता एतदर्थं सूत्रादिकं न एकमपि विरचितम् । एतदर्थं का युक्तिरत्र अनुसरणीया ? केषाञ्चित् मते अस्य ग्रन्थकर्त्ता "कृष्णद्वैपायनो व्यास", अन्येषा मते तु "बादरायण" इति । केचिद् आहु तौ अभिन्नौ । मतान्तरे तु तौ विभिन्नौ पुरुषौ । दृश्यते च "बादरायण." इति नामोल्लेखेन एकाधिक सिद्धान्तसूत्रं रचितम् । "कृष्णद्वैपायन" इति नाम न कुत्रापि सूत्रमध्ये दृश्यते । अतो बहुभि मन्यते - "बादरायण" एव अस्य ग्रन्थकर्त्ता, न तु "कृष्णद्वैपायन" इति । केषाञ्चित् मतम् नाय बादरा-यणोऽपि सूत्रकार । यतो ग्रन्थमध्ये स्वनामोल्लेख. दृश्यते, स तु, आत्मम्भरिता सूचयति । अतो बादरायणो न सूत्रकार इति। कृष्णद्वैपायनस्य ग्रन्थकर्तृत्वेऽपि प्रमाणं नास्ति। पुराण-

वचसामपि नात्र प्रामाण्यम्, आधुनिकत्वात् तेषाम्। अतोऽस्य कर्त्ता कश्चित् अज्ञातनामा पुरुष एव भवेत्, यद्विमतं नास्त्यप्रमाणाय तस्य पाणिन्यादीनां समये आविर्भाव अभवत्, अथवा दिङ्नाग-वसुबन्धु-प्रभृतीनां पश्चात् तस्य आविर्भाव सञ्जात, सूत्रेषु तेषां मतखण्डन-दर्शनात् इति। एवं च एतस्य ग्रन्थकर्तृत्वे विविधा विप्रतिपत्तयो वर्तन्ते। अतो जिज्ञास्य—कोऽसौ सूत्रकार इति।

कृष्णद्वैपायन एव बादरायणः

एतस्य उत्तरम्—कृष्णद्वैपायनापरनामा बादरायणो व्यासदेव एव अस्य कर्त्ता। ग्रन्थकर्तुः स्वनामोल्लेखस्तु ग्रन्थमध्ये नात्मम्भरिताया सूचक। कौटिल्य-वात्स्यायनसूत्रादिषु स्वनामोल्लेखेन विधिनिषेधादिक व्यवस्थापितं दृश्यते। मनु-याज्ञवल्क्यादि-कृत-संहिता-ग्रन्थेषु विषयविशेष-वर्णने स्वनाम-ग्रहणं दृश्यते। "आचार्याणाम् इयं शैली,—यत् स्वाभिहितमपि पराभिहिततया प्रकाशयति।" अतो बादरायणस्य सूत्रकारत्वेन, न कापि बाधा दृश्यते। बादरायणस्य ब्रह्मसूत्र-प्रणेतृत्वं शाङ्करभाष्यतोऽपि अवगम्यते, यथा—"ननु एवं सति सातिशयत्वाद् अन्तवत्त्वम् ऐश्वर्यस्य स्यात्, ततश्च एषाम् आवृत्तिः प्रसज्येत, इत्यत उत्तरं भगवान् बादरायण आचार्यः पठति—"अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्" (४।४।२२) इति। अन्येषु दार्शनिकग्रन्थेष्वपि बादरायणस्य ब्रह्मसूत्रकारत्वम् अवगम्यते।

पुराण-कोषादिना कृष्णद्वैपायनस्य बादरायणत्वम्

ततः कृष्णद्वैपायन एव बादरायण—इत्यत्र बहूनि प्रमाणानि सन्ति। तत्रादौ कोष-प्रमाणम् प्रदर्श्यते—

'बदरे बदरिकाश्रमे अयनं वासो यस्य स बादरायण। बादरायणिः सत्यवतीसुत सत्यरत पाराशरि" इति शब्दरत्नावली। 'माठरो द्वैपायन पाराशर्य कानीनो बादरायणो व्यास"—इति हेमचन्द्र। 'कृष्णद्वैपायन सत्यभारत पाराशर सत्यरत"—इति त्रिकाण्ड-शेष। 'माठरो व्यास"—इति मेदिनी।

अत्रायं निष्कर्ष—कृष्ण इति तस्य नाम, द्वीपे जन्महेतो 'द्वैपायन' इति नामापि सोऽभिधीयते। तेन कृष्णद्वैपायन इति नाम तस्य अभूत्। स एव पराशरतनय। सत्यवत्यां जातत्वात् सत्यवतीसुत सात्यवत इत्यादिनापि नाम्ना स प्रकीर्त्यते। बदरिकाक्षेत्रे आश्रमं कृत्वा स तपश्चचार, अत स बादरायण। यथा महाभारते आदिपर्वणि—

"कृष्णद्वैपायनप्रोक्ता सुपुण्या विविधा कथा। १।१।१०

एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात्। न्यस्तो द्वीपे स यद् बालस्तस्माद् द्वैपायन स्मृत॥ १।६३।८६

विव्यास वेदान् यस्मात् स तस्माद् व्यास इति स्मृत"॥ १।६३।८८

एतेन कृष्णद्वैपायन एव वेदव्यास, स एव पाराशर्य, स एव सत्यवतीसुत—इति

अवगम्यते। ततः स एव बादरायणो, यथा महाभारते आदिपर्वणि प्रथमे अध्याये
"क्षेत्रे विचित्रवीर्यस्य कृष्णद्वैपायनः पुरा। ९४ त्रीनग्नीनिव कौरव्यान् जनयामास वीर्यवान्"॥ ९५
पुनः श्रीमद्भागवते नवम-स्कन्धे द्वाविंशे अध्याये
"क्षेत्रेऽप्रजस्य वै भ्रातुर्मात्रोक्तो बादरायणः। धृतराष्ट्रं च पाण्डुं च विदुरञ्चाप्यजीजनत्॥ २५
यस्या पराशरात् साक्षादवतीर्णो हरेः कला ॥२१॥ वेदगुप्तो मुनिः कृष्णो यतोऽहमिदमध्यगाम्।
हित्वा स्वशिष्यान् पैलादीन् भगवान् बादरायणः ॥२२॥ मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगौ॥" इति।

एतेन पाराशर्य एव कृष्णद्वैपायनः, स एव बादरायणो व्यासः इति च विज्ञापितः। ततश्च कृष्णद्वैपायन एव ब्रह्मसूत्रकारो व्यासः इति स्कन्दपुराणाद् अवगम्यते। तद् यथा

"तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः। अवतीर्णो महायोगी सत्यवत्यां पराशरात्॥
उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम्। चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा॥
अल्पाक्षरमसन्दिग्धं सारवद् विश्वतो मुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥"
(माध्वभाष्यधृत-स्कन्दपुराणवचनम्।)

कृष्णद्वैपायनस्य ब्रह्मसूत्रकर्तृत्वे वायुपुराणवचनमपि (१०४।१०८) प्रमाणं, यथा
"अस्मत्सम्मत एवार्थो भवता सम्प्रदर्शितः।
पुराणेष्वितिहासेषु सूत्रेष्वपि च नैकधा। अक्षरं ब्रह्म परमं सर्वकारण-कारणम्॥" इति।

मत्स्यपुराणेऽपि (५३ अ.)
"अङ्गानि चतुरो वेदान् पुराणं न्यायविस्तरम्। मीमांसां धर्मशास्त्रं च परिगृह्य मया कृतम्॥" इति।

एतेन कृष्णद्वैपायनो व्यास एव ब्रह्मसूत्रकारः इत्येव प्रमाणितं भवति। ब्रह्मसूत्रे बादरायण-नाम्ना सिद्धान्त-निर्देशात् तस्यैव ग्रन्थकर्तृत्वं प्रतीयते। तेन बादरायण एव कृष्णद्वैपायनो व्यासः इत्येव सिध्यति। "बादरायण"—शब्दो ब्रह्मसूत्रमध्ये १।३।२६, १।३।३३, ३।२।४१, ३।४।१, ३।४।८, ३।४।१९, ४।३।१५, ४।४।७, ४।४।१२, सख्यकेषु सूत्रेषु सिद्धान्तज्ञापनाय प्रयुक्तो दृश्यते। एवं बहूनि प्रमाणानि सन्ति, यतः कृष्णद्वैपायन एव बादरायणः, स एव ब्रह्मसूत्रकारः—इत्येव सिध्यति। शङ्केयं पाश्चात्त्यपण्डितवर्गैः उद्भाविता, तदनुवर्त्तिभिः अस्मद्देशीयैः बहुभिश्च परिगृहीता, एतेन तु सा निरस्ता।

## पुराणानाम् अर्वाचीनत्वशङ्कानिरासः

अथ चेत् पुराणादिषु आधुनिकैतिहासिक-कथादि-दर्शनात्, तेषाम् अर्वाचीनत्वं कल्प्येत, तथापि तेषां प्राचीन-कथा-सङ्ग्राहक-रूपत्वं न बाधितं भवति। बहुषु पुराणादिषु यत्र ऐकमत्यं, तत्र न अप्रामाणिकत्व-शङ्का समुचिता। केषाञ्चित् पुराणादीनाम् अंशेन आधुनिकत्वेऽपि तत्रस्था प्राचीनकथा प्रमाणत्वेन ग्रहीतुं शक्यते। अंशतः आधुनिकत्वमात्रं न समग्रस्य अप्रामाण्यप्रयोजकम्। कथाया अविच्छिन्नमूलत्वमेव तस्याः प्रमाणार्हत्वम्। कतिपयपुराणादीनाम् आधुनिकत्वाभ्युपगमेऽपि

तद्वर्णितविषयाणां न आधुनिकत्वं, न वा अप्रामाणिकत्वम्। ततश्च कलेरादौ रचित-ब्रह्मसूत्र-मध्ये 'स्मरन्ति च' २।३।४७, ३।१।१४ इति सूत्रयोर्मध्ये, तथा "स्मर्यते च" ४।२।१४ इति सूत्रे, तथा "स्मर्यतेऽपि लोके" ३।१।१० सूत्रे, तथा "स्मर्यमाणमनुमानं स्यादिति" १।२।२५ सूत्रे, तथा "स्मृतेश्च" ४।३।११ सूत्रे सूत्रकृता महाभारत-पुराणादि-वचनमेव लक्ष्यीकृतं दृश्यते। अतः पुराणादीनाम् अर्वाचीनत्वकल्पनं न समीचीनम्। एतेन च अस्य ब्रह्मसूत्रस्य प्राचीनत्वमपि सिध्यति। तेन द्वापरान्ते कलेरादौ वा अस्य रचितत्वमपि सिध्यति, तत्रैव कृष्णद्वैपायनस्य प्रसिद्धिः। ब्रह्मसूत्रस्य प्राचीनत्वम् अग्रे प्रमाणान्तरेण वक्ष्यते। अतः कृष्णद्वैपायनो बादरायणश्च अभिन्न एव। तयोः भेदकल्पनं न संगतम्।

पाणिनिसूत्रेणापि तस्य प्राचीनत्वसिद्धिः

ब्रह्मसूत्रस्य प्राचीनत्वं पुनः पाणिनीयव्याकरणसूत्रेणापि समर्थ्यते। तत्र "पाराशर्य-शिलालिभ्यां भिक्षुनटसूत्रयोः" ४।३।११० इति सूत्रात् "भिक्षुसूत्र"-नाम्नः पाराशरिरचितस्य एकस्य सूत्रग्रन्थस्य सत्त्वम् उपलभ्यते। 'भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी'—इति अमर-कोष-वचनात् भिक्षु-शब्दस्य पर्याय "पाराशरी" इति च लभ्यते। 'पाराशर्येण उक्तं भिक्षुसूत्रम् अधीयते' इत्यर्थे णिनिप्रत्यय-विधानात्, पराशरतनय कृष्णद्वैपायन-व्यास-विरचितं तद् भिक्षुसूत्र-मित्यपि अवगम्यते। महाभाष्येऽपि "पाराशरिणो भिक्षवः" इति पाणिनीय-४।२।६९-सूत्र व्याख्यानावसरे वर्णितम्। तेन पाराशरीयं यत् भिक्षुसूत्रं तदेव ब्रह्मसूत्रम्, ब्रह्मसूत्रात् अन्यस्य भिक्षुसूत्रस्य अनुपलम्भात्। एतेन पाणिनेः पूर्वं द्वापरान्ते कलेरादौ वा रचितमिदं ब्रह्मसूत्रम् इत्येवं अवगम्यते।

पाणिनेः कालेन तस्य प्राचीनत्वम्

अत्र अपरमेकमपि प्रमाणं वर्त्तते, येन पाणिनेः पूर्वं ब्रह्मसूत्रमिति गम्यते। यतो वर्ष-पण्डित भ्राता उपवर्ष आसीदिति कथासरित्सागरात् अन्यतश्च उपलभ्यते, उपवर्षकृत-ब्रह्मसूत्र-वृत्तिः एका भास्करभाष्यात् शाबरभाष्यादपि अवगम्यते। कथासरित्सागरमते च उपवर्षस्य आविर्भावो नन्दराजस्य राजत्वकाले अभूदिति। तथा सति पाणिनेः कालो गौतमबुद्धस्य किञ्चित् पश्चादेव भवति। तेन तत्पूर्वमेव ब्रह्मसूत्रस्य कालः—इति वक्तुं शक्यते। मतान्तरे तु पाणिनेः कालो जनमेजयस्य किञ्चित् पूर्वमेव, यतः पाणिनीयसूत्रे जनमेजयपूर्ववर्त्तिनां नामादिकं दृश्यते, न तु तत्परवर्त्तिनाम्। तथा सति ब्रह्मसूत्रस्य कालः कलेरादौ एवेति अवगम्यते। वस्तुतस्तु पाणिनेः कालो न अविसंवादितया निर्णीतः एतावत्कालपर्यन्तम्। तेन पाणिनेः कालम् अव-लम्ब्य, अथवा उपवर्षस्य कालम् अवलम्ब्य ब्रह्मसूत्र-कालो यथा उपलभ्यते, तेन गौतमबुद्धात् पूर्वम् अयं ग्रन्थ आसीत्—इति कल्पयितुं शक्यते। तेनायं ग्रन्थो बुद्धाद् भगवतः परवर्त्तिना केनचन अथवा बौद्धनागार्जुनादीनां परवर्त्तिना केनचिद् व्यासनामधारिणा वैदिकाचार्येण

रचितः इति यद् उक्तं कैश्चित् पाश्चात्त्यैः तदनुवर्तिभिश्च, तन्न न्याय्यम् इति सिध्यति। भवतु पाणिनीय-कालम् अवलम्ब्य एतादृशं फलम्, किन्तु यदि तदुक्तिम् आश्रित्य विचार्यते, तदा "पाराशरीयं भिक्षुसूत्रम्" इति निर्देशाद् द्वापरान्ते कलेरादौ वा ब्रह्मसूत्रस्य रचना अभूत् इत्यत्र न कापि बाधा वर्तते। परन्तु तत्रापि बहुभिः पाश्चात्त्यैः विद्भिः जनमेजयस्य महाभारतस्य च कालोऽपि न तादृशः प्राचीन इति मन्यते। किन्तु तथापि गौतम-बुद्धात् पूर्वमेव ब्रह्मसूत्रं रचितम् इत्यत्र न विरोधः कल्पनीयः। जनमेजयमहाभारतादीनां कालनिर्णयस्तु प्रसङ्गान्तरीय, अतोऽत्र ततो विरम्यते। अस्मन्मते तयोः कालः कलेरादौ एव।

### श्रीमद्भगवद्गीताप्रमाणेन प्राचीनत्वम्

ततश्च अत्र अपरमेकं प्रमाणमस्ति, येन ब्रह्मसूत्रस्य महाभारतसमकालीनत्वं सिध्यति। यतो भीष्मपर्वान्तर्गत-भगवद्गीतामध्ये ब्रह्मसूत्रस्य नाम दृश्यते, यथा

"ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः।" (१३।४)

तथैव ब्रह्मसूत्रमध्ये "स्मृतेश्च" १।२।६ इति सूत्रे, तथा "स्मरन्ति च" ४।१।१० इति सूत्रे, गीतावाक्यमेव सूत्रकृता लक्षितम् इत्यपि सूत्रभाष्यादिभ्यः उपलभ्यते। अतो ब्रह्मसूत्रं महाभारत-समकालीनम् इति अनुमातुं शक्यते अस्मन्मते। महाभारतरचनाकालः कलेरादौ एव आसीत्। तेन ब्रह्मसूत्रम् अद्य प्रभृति प्रायेण पञ्चसहस्रवर्षेभ्यः प्राग् रचितम् इत्यस्माकं निर्णयः। परन्तु अत्रापि पाश्चात्त्यानां विप्रतिपत्तिः दृश्यते। तत्र अत्र वयं विचारयाम तस्य प्रसङ्गान्तरीयत्वात्। एतदर्थं महाभारतस्य महामहोपाध्याय-श्रीहरिदाससिद्धान्तवागीशकृत-टीकादिकं द्रष्टव्यम्। एवं च अस्मन्मते महाभारत-ब्रह्मसूत्रादीनाम् अर्वाचीनत्वं प्रतिपिपादयिषता प्रयत्नः सर्वथा व्यर्थः इति प्रतिभाति। येषां मते अद्य प्रभृति १९४१-वर्षेभ्यः प्राक् पृथिव्याः नानालोकपातः सञ्जातः, तेभ्यः इतोऽधिकं किम् आशास्महे। तेन अत्र बौद्धजैनादीनां मतखण्डनं दृष्ट्वा नास्य श्रुतिमीमांसारूपत्वं व्याहतं, न वा तस्य अर्वाचीनत्वं कल्पनीयम्। तथा च अस्य ग्रन्थकर्ता पाराशर्यः कृष्णद्वैपायनापरनाम-बादरायणो, ग्रन्थश्च कलेरादौ रचित इति।

### सूत्ररचनायाः तृतीयं कौशलम्

इदानीं द्रष्टव्यं किमपरं कौशलं सूत्ररचनायाम् अवलम्बितं सूत्रकृता भगवता व्यासेन ? एतच्च ग्रन्थ-प्रतिपाद्यानुसारेण अध्याय-पादाधिकरण-सूत्राणाम् अर्थनियमनम्। एतदेव अत्र तृतीयं कौशलम्। यथा श्रुत्यर्थमीमांसारूप-श्रुतिसङ्गतिसंरक्षणं सर्वेषाम् अध्याय-पादाधिकरण-सूत्राणाम् एतद्ग्रन्थ-रचनायाः आद्यं मुख्यं कौशलं, यच्च प्रागेव उक्तम्, तथैव अध्याय-चतुष्टयात्मकस्य एतद्ग्रन्थस्य समष्टिरूपेण यत्किञ्चित् प्रतिपाद्यमेकं भवति, यतो व्यष्टिभूतस्य समष्टिरूपत्वमपि स्वाभाविकम्, येन तादृश-प्रतिपाद्य-विषयानुसारेण अध्याय-पादाधिकरण-सूत्राणाम् अर्थनियमनमपि समुचितम्। समष्टिभूतस्य यो धर्मः तस्य व्यष्टिभूतधर्म-नियामकत्वं नैसर्गिकम्।

एतदेव तत्र तृतीये कौशलम् अनुवर्त्तं सूत्रकृता भगवता। एतदेव तत्र शास्त्र-प्रकृति-नाम्ना परिचितं सर्वेषां सूत्रार्थानुशीलिनाम्। तेन मायुक्त-श्रुतिप्रकृति-व्याख्या इयं शास्त्रप्रकृति भवति, यया पुन न्यायप्रस्थानाधिकरणसूत्राणाम् अर्थनियमनं कर्त्तव्यम्।

शास्त्रप्रकृतिनिरूपणम्

तथा सति इदानीम् अस्माकं शास्त्रप्रकृति-रूपम् एतद्ग्रन्थप्रतिपाद्य निगमम्। यत्र तु ग्रन्थ सूत्रात्मक, पुन यत्र ग्रन्थरचना शैलीप्रसूतानां कृते सूत्रकृता न किमपि इङ्गितं कृतं तत्र कथं तद्ग्रन्थप्रतिपाद्य निर्णेयम्—इति अस्माकम् अतीव दुरुहत्वमेव प्रतिभाति। तथापि नात्र नैराश्यं भजनीयम्। यत पूर्वाचार्ये पदवि तात्पर्यनिर्णायकं लिङ्ग यन्निरूपितं, तेनैतद्ग्रन्थप्रतिपाद्य ज्ञातुं शक्यते, तद् यथा—

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये"॥ इति।

एतद्धि सर्वेषाम् एव साधारण, सर्वत्र ग्रन्थार्थानां तात्पर्यनिर्णये प्रयोजकम्। एतच्च प्रायेण सर्वं शास्त्रिसम्मतम्। कियत्कालादपि एतत् कौशलं सुर्यागमध्ये प्रचलितम् अस्ति अवलम्बितं च, तत् इदानीं निगन्तुं शक्यते। कपिल-कणाद-गौतम-जैमिनि-व्यासादिभि सर्वे एतत् तेषां ग्रन्थमध्ये न कुत्रापि दृश्यते, तथापि तैरेव तस्य अनुसरणं कृतम्—यतोऽपि तेषां सूत्रार्थ-पर्यालोचने कृते परिज्ञायते। तेन तस्योऽपि एतस्य प्रवर्त्तनं प्राचीनतरम्—इत्येव अनुमीयते। पुराणवचनेष्वपि एतस्य समुल्लेखो दृश्यते।

तदेतत् तात्पर्य-निर्णायकं लिङ्गं षड्विधम्। यथा (१) उपक्रमोपसंहार, (२) अभ्यास, (३) अपूर्वता, (४) अर्थवाद, (५) फलम्, (६) उपपत्तिश्च। एतत्साहाय्येन समग्रब्रह्मसूत्रग्रन्थस्य षडेक सर्वसूत्रानुगत तात्पर्य भवेत्, तन्निर्णेतुं शक्यते सर्वै प्रेक्षावद्भि। परन्तु एतेषां षण्णां प्रयोगोऽत्र सर्वसूत्रालोचनाधीन। तन्नात्र कर्त्तुं सम्भाव्यते, अतस्तेषां षण्णां मध्ये यद् आदिमं प्रधानतया परिगृह्यते, तदेव धरणं विधेयम्। तेन च उपक्रमोपसंहारानुरोधेन किमस्य तात्पर्यं तदेव इदानीं विचार्यते। एतेन अस्माकम् उद्देश्यसिद्धि कथञ्चिद् भविष्यतीति च आशास्महे।

एतदर्थम् एतद्ग्रन्थस्य आद्यन्तसूत्रद्वयम् एव अवलम्बनीयम्। तयोरेव उपक्रमत्वोपसंहारत्वयो सम्भावितत्वाद् युक्तत्वाच्च। तत्र आद्य सूत्रम् "अथातो ब्रह्मजिज्ञासा" इति। अन्तिमं तु "अनावृत्ति शब्दाद् अनावृत्ति शब्दात्" इति। एतत्सूत्रद्वयस्य मिलितोऽर्थ— "अथ"—अधिकारिगुणसम्पादनानन्तरम् "अत"—कर्मफलानित्यत्वज्ञानहेतो, "ब्रह्मजिज्ञासा"—ब्रह्म ज्ञातुं या इच्छा भवति, तज्जन्यो यो वेदान्तविचार स कर्त्तव्य। तस्य फलं संसारे अस्मिन् 'अनावृत्ति' पुनरागमनराहित्य, कुत एतद् अवगम्यते? तदुत्तरम् आह—"शब्दात्", तत्र प्रमाणं वेदा एव इत्यर्थ। अयं तु अक्षरार्थ एतत्-सूत्रद्वयस्य, परन्तु एतस्मादेव अर्थविरोधाद्

एतच्छास्त्रप्रतिपाद्या यावन्तो विषया अधिगन्तुं शक्यन्ते। एतदेव इदानीं संक्षेपतः प्रदर्श्यते।

### ब्रह्मसूत्रस्य प्रथमप्रतिपाद्यनिरूपणम्

तत्र प्रथमं तावत् ब्रह्मणो ज्ञानादेव अनावृत्तिरूपा मुक्तिर्भवति। यतः प्रथमसूत्रे इष्यमाण-ब्रह्मज्ञानस्य प्रतिज्ञा कृता। तस्यैव फलम् "अनावृत्तिः" इति अन्तिमसूत्राद् अवगम्यते। जिज्ञासापदेन यदर्थम् इच्छा तद् अत्र ज्ञानमेव। "ब्रह्मजिज्ञासा"-पदेन तज्ज्ञानं च ब्रह्मविषयकं, न तु तदन्यविषयकम्। तेन ब्रह्मभिन्न-वस्तुज्ञानेन मुक्तिर्न जायते। तथा च तत्र ज्ञानातिरिक्तं किमपि साधनम् अनावृत्त्यर्थं न उपदिष्टं भवति इति सूत्राक्षरतः एव लब्धम्। अतो मुक्तिहेतु ज्ञानमेव, न तु उपासनं कर्म वा, किं वा तयोः उभयोः अन्यतरस्य वा ज्ञानेन सह मिश्रणं, द्वारत्वेन स्वरूपेण वा, मुक्तिकारणम्। ब्रह्मज्ञानफलमेव अनावृत्तिरूपो मोक्षः। तेन उपासनादीनाम् उपयोगिता न सूत्रार्थः। एवं च ब्रह्मज्ञानाय या इच्छा, तदिच्छाजन्यो यो विचारः अपेक्षितः, सोऽपि कर्त्तव्यः इति अवगम्यते, विचारस्य ज्ञानाङ्गत्वाज् ज्ञानसाधनत्वाद् वा। तथापि तादृशेच्छाविचारयोर्मध्ये विचारं प्रति चित्तचाञ्चल्यादिरूप-प्रतिबन्धके सति तन्नाशाय तथा इच्छाया अपि दार्ढ्याय कर्मोपासना-प्रायश्चित्तादीनाम् उपयोगो वर्त्तते एव। तेन ब्रह्मज्ञानं प्रति कर्मोपासनादीनां परम्परया साधनत्वं वर्त्तते, न तु साक्षात् तदस्ति। अतो ज्ञानकर्मोपासनानां न स्वरूपसमुच्चयः, किन्तु क्रमसमुच्चय एवेति मतमिति लभ्यते। एतत् सर्वमेव आद्यन्तसूत्राक्षरतो लब्धम्। तेन एतच्छास्त्रस्य एतत् प्रथमं प्रतिपाद्यं भवति।

### द्वितीयप्रतिपाद्यनिरूपणम्

द्वितीयञ्च अतः ज्ञानस्य यत् साक्षात् फलं, तदज्ञाननिवृत्ति-रूपम्। यद्विषयकं ज्ञानं भवति, तद्विषयकाज्ञाननिवृत्तिं विना तज्ज्ञानं न सम्भवति। अज्ञाननिवृत्ति-ज्ञानोत्पादयोः मध्ये व्यवधानाभावेऽपि आदौ अज्ञाननिवृत्तिः ततो ज्ञानं समुदेति अज्ञाननिवृत्त्यर्थम् अनुष्ठानस्य पूर्वभावित्वात्। यथा दर्पणस्य मलापनोदने कृते सति प्रतिबिम्बदर्शनरूपं ज्ञानं जायते, तद्वद् अत्रापि बोद्धव्यम्। वस्तुतस्तु ज्ञानस्य साक्षात् फलमपि अज्ञान-निवृत्तिरेव। एवं च यद्विषयकं ज्ञानं भवति, तद्विषयकाज्ञाननिवृत्तिरेव ज्ञानस्य साक्षात् फलम्। तथा च ज्ञानस्य फलं यदि अनावृत्तिरूपो मोक्षः, तदा अज्ञाननिवृत्तिरेव मोक्षः इति पर्यवस्यति, ब्रह्मणः स्व-प्रकाशत्वात्, तेन ब्रह्मज्ञानानन्तरं न किमपि कर्त्तव्यं दृश्यते। यथा घटपटादीनां ज्ञानानन्तरं तद्विषयकं कर्त्तव्याकर्त्तव्यादिकं चिन्तनीयं, यथा कर्मोपासना-काण्डे देवतर्षिप्रभृतीनां ज्ञानानन्तरं तद्विषयकम् अनुष्ठानम् उपासनं च विधेयम्, न तथा ब्रह्मज्ञानानन्तरं किमपि सम्पादनीयं स्यात्। ब्रह्मज्ञानानन्तरम् अज्ञान-निवृत्ति-रूपमोक्षस्य साक्षात्-फलत्वात्। मोक्षार्थमेव कर्मो-पासने च, तस्मिन्नेव मोक्षे लब्धे तयोः किं प्रयोजनम्? अतो ब्रह्मजिज्ञासाविषयीभूते ज्ञाने सति न किमपि कर्त्तव्यं सम्भवेत्। तथा च उपक्रमोपसंहाररूपसूत्रद्वयेन अयमेव अर्थः स्पष्टो

भवति यत् ब्रह्मज्ञानानन्तरं यद् उपासनादीनां विधानं मतान्तरेण स्वीक्रियते, तन्न सूत्राक्षरतो लभ्यते। अतो ज्ञानादेव मुक्तिः एतद्ग्रन्थस्य आद्यन्त-सूत्राक्षरलब्धं द्वितीयं प्रतिपाद्यम्।

### तृतीयप्रतिपाद्यनिरूपणम्

तृतीयं प्रतिपाद्यं—प्रागुक्तसूत्रद्वयेन ब्रह्मज्ञानादेव जीवस्य एव अनावृत्तिरिति उक्तं भवति, नान्यस्य। तथा सति जीवब्रह्मणो स्वरूपतः अभेद एव उक्तः स्यात्। जीवाद् ब्रह्म भिन्नम्—एतादृश-ब्रह्मणो ज्ञानात् जीवस्य अनावृत्तिरूपो मोक्षः सम्भवति, ब्रह्मणः संसारित्वाभावात्, तस्य स्वरूपतः अनावृत्तिरूपत्वाच्च। जीवब्रह्मणो अभेदज्ञानं विना ब्रह्मज्ञानेन जीवस्य अनावृत्तिः असम्भाविनी। यदि "अहं मुक्तः" इति ज्ञानादेव मम मुक्तिः सिध्यति, नान्यथा, तदा "ब्रह्म मुक्तम्" इति ज्ञानात् मम मुक्तिः कथं भवेत्—यदि उभयोः अभेदज्ञानं न स्यात्? अतो ब्रह्मज्ञानात् जीवस्य मुक्तिः भवति इत्येव चेत् सूत्रार्थः, तदा जीवब्रह्मणो अभेद एव अत्र उक्तः स्यात्। अयमेव अर्थः उपक्रमोपसंहारसूत्रद्वयात् प्रतिपादितः। एतदेव प्रागुक्ताद्यन्तसूत्राक्षरलब्धम् एतच्छास्त्रस्य तृतीयं प्रतिपाद्यम्।

### चतुर्थप्रतिपाद्यनिरूपणम्

चतुर्थं प्रतिपाद्यं—ततः अनावृत्तिशब्दार्थः पुनरागमन-राहित्यम्। तच्च संसारे अस्मिन् इत्येव अवगम्यते। तत्र ब्रह्मज्ञानफलं चेत् संसारे पुनरागमन-राहित्यं, तदा तज्ज्ञानफलस्य साक्षाद् अज्ञान-निवृत्ति-रूपत्वात् संसाराभाव-रूपाज्ञाननिवृत्तिरपि अत्र पुनरागमन-राहित्यम्। ततः अज्ञानमेव अयं संसारः इति च सिध्यति। संसारश्च संसारज्ञानाधीन एव, ज्ञातत्वेन अज्ञातत्वेन वा। ज्ञात-सत्ताकस्य यथा ज्ञानाधीनत्वं, तथा अज्ञातसत्ताकस्यापि ज्ञानाधीनत्वम्। "घटोऽत्र वर्तते न वा—इत्यहं न जानामि" इत्याकारकम् अज्ञानं तद्विषयश्च इति उभयं ज्ञानाधीनम्। यतो ज्ञानम् ऋते न किमपि कथमपि स्वीकर्तुं शक्यते। अतः संसारः तज्ज्ञानं तदज्ञानं च सर्वे विषया ज्ञानसत्ताधीना एव। ततश्च अधीनसत्ताकस्यैव निवृत्तिः सम्भवति, न तु स्वाधीन-सत्ताकस्य कस्यचित्। यदेव यदधीनसत्ताकं तदेव तद्भिन्नम्। अज्ञानमेव ज्ञानाश्रितम्, न तु अन्यत्। अतः अज्ञानमेव संसारः। तस्य निवृत्तिरेव अनावृत्तिः। सैव संसारस्य अभावरूपा। तेन ब्रह्मज्ञान-फलं संसार-तद्दर्शनयो अभावरूपम्। ब्रह्मज्ञाने जाते नायं संसारः स्थास्यति, न वा तस्य ज्ञानमपि वर्तिष्यते। केवलं ब्रह्ममात्रमेव अवशिष्येत। एतेन ब्रह्मभिन्नत्वेन ब्रह्मभिन्नाभिन्नत्वेन वा प्रकृति-परमाणुकारण-वादिनां मतं, तथा ब्रह्मपरिणाम-वादिनामपि मतं निराकृतम्, तेषाम् अज्ञानमूलकत्वाभावात्। एतदेव प्रागुक्ताद्यन्त-सूत्राक्षर-लब्धम् एतद्ग्रन्थस्य चतुर्थं प्रतिपाद्यम्।

### पञ्चमप्रतिपाद्यनिरूपणम्

पञ्चमं प्रतिपाद्यं संसारो यदि सन् भवेत्, स यदि सत्यः स्यात्, तदा तस्य दर्शनाभावात् तस्य विलोपो न सम्भवति। दर्शनाभावेऽपि दृश्य-सद्भावात्, यथा अन्धकारावृत-

घटस्य दर्शनाभावे घटस्य सद्भाव तद्वत्। दृश्यसद्भावे सति तस्य पुनर्दर्शनापत्तिः दुर्वारा। तथा सति पुनरागमन-राहित्य सम्पूर्णतया न सम्भवेत्। वासना-समुच्छेदे जाते संसार-सत्त्वेऽपि पुनरागमन-राहित्यमिति कल्पनायां पुनः संसार-सुखवासना कथं न भवेत्? भोगातिशयाद् रोगिणः रोगमुक्तौ अपि किं तद्भोगाय पुनर्वासना तस्य न जायते? संसारस्य सत्यत्वे सुखभोग-वासना पुनरागमन-राहित्यञ्च असम्भवमेव। तेन पुनरागमन-राहित्यानुरोधेन दर्शनाभावे यदि दृश्याभावः प्रसज्येत, दृश्याभावो यदि दर्शनाभावस्य सहभावी भवेत्, तदा दृश्यमिथ्यात्वमेव स्वीकार्यं भवति। दृश्यमिथ्यात्व विना दर्शनाभावाद् दृश्यविलोपो न सम्भवति, न वा वासना-समुच्छेदो सघटते। शुक्तौ रजतभ्रमे शुक्तिज्ञानेन रजत-दर्शनाभावे जाते शुक्तौ रजत-सद्भावोऽपि विलुप्यते। एतदेव रजत-मिथ्यात्वम्। तेन मिथ्यात्वं च कल्पितत्वमेव। असतः सत्यत्वेन दर्शन-विषयत्व, मिथ्यात्वं, कल्पनं वापि। यत्र यन्नास्ति तत्र तत्सत्ताकल्पनं विषयता सम्बन्धेन मिथ्यात्वम्। एवं च ब्रह्मज्ञानाद् अनावृत्तिः इत्युक्ते दृश्यमिथ्यात्व प्रतिपादितम् उपक्रमोपसहारसूत्राभ्याम्। एतेन च जगत्-सत्यतावादिना मत निरस्तम्। एतदेव ब्रह्मज्ञानात् मुक्तिरिति आद्यन्तसूत्राक्षर-लब्धम्। एतदेव एतद्ग्रन्थस्य पञ्चमं प्रतिपाद्यं भवति।

## षष्ठप्रतिपाद्यनिरूपणम्

षष्ठ प्रतिपाद्यं ततो यदेतद् अज्ञान, तद् ब्रह्मात्मैक्यविषयकम्। न तु केवल ब्रह्मविषयकम्, न वा आत्मविषयकम्, परन्तु तयोः ऐक्यविषयकम्, ब्रह्मात्मनोः अभिन्नत्वे सति संसार-तद्दर्शनयोः विलोपासम्भवात्। द्रष्टृ-दर्शन-दृश्याना मध्ये एकस्यापि सद्भावे त्रयाणामेव सद्भाव अवश्यम्भावी। द्रष्टृरूप-जीव-भावाभावे द्रष्टु ज्ञान-स्वरूप-ब्रह्मत्वावगमे च द्रष्ट्रधीन-दृश्य-दर्शनयोः अभाव अवश्यम्भावी। तेन ब्रह्मज्ञानाद् अनावृत्तिलक्षण-दृश्याभाव इत्युक्ते ब्रह्मात्मैक्य-विषयकम् अज्ञानमेव संसार, तन्नाशश्च अनावृत्तिलक्षणो मोक्षः इत्युक्तं भवति। एतेन मोक्षे अधिष्ठान-ब्रह्मज्ञानाद् अन्यत् न प्रयोजनम् इत्यपि सिद्धं भवति। तथा च एतज्-ज्ञान-धारा-संरक्षणार्थम् एतज्ज्ञानस्यैव आवृत्तिः प्रयोजनम्। प्रतिबन्धके प्रबले सति उपासना-दीना च अनुष्ठेयत्वम्, अन्यथा तेषामपि अनावश्यकत्वम्। एतदेव एतच्छास्त्रस्य आद्यन्त-सूत्राक्षर-लब्धं षष्ठं प्रतिपाद्य भवति।

## सप्तमप्रतिपाद्यनिरूपणम्

सप्तम प्रतिपाद्य संसारस्य अज्ञानमूलकत्वे सिद्धे अज्ञानं यथा अनादि सान्त, संसारोऽपि तथा इति सिध्यति, अज्ञानस्य ज्ञाननाश्यत्व च यथा, तथैव संसारस्यापि, संसारस्य सत्यत्वे तस्य ज्ञाननाश्यत्वम् असम्भवमेव। तेषा मते संसारः अनादि अनन्त एव च भविष्यति, न तु अनादि सान्त। तेन द्वैताद्यपर-मतवादिना सिद्धान्तो न एतदुपक्रमोपसहार-रूप-सूत्रद्वयस्य अक्षरत लभ्यते इति। एतदेव एतच्छास्त्रस्य सप्तम प्रतिपाद्य भवति।

### अष्टमप्रतिपाद्यनिरूपणम्

अष्टमं प्रतिपाद्यम्—एतद् अज्ञानं न ज्ञानाभाव-रूपम्, तथा हि यदि एतद् अज्ञानम् अभावरूपं स्यात्, तदा ब्रह्मात्मनो अभेदज्ञानेन तादृशस्य अभावस्य नाशोऽपि भवेत्। न तु, तदस्ति। न केनचित् ज्ञानेनापि अभावस्य नाशः सम्भवति, अत्यन्ताभावस्य नित्यत्वात्, प्रागभावरूपत्वेऽपि तत्सिद्धेः धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां व्याहतत्वात्, प्रागभावस्य नव्य-नैयायिकैरपि प्रमाणनिरूपणेन निरस्तत्वाच्च। एतच्च एतच्छास्त्रस्य अष्टमं प्रतिपाद्यं भवति।

### नवमप्रतिपाद्यनिरूपणम्

नवमं प्रतिपाद्यम्—अज्ञानस्य भावरूपत्वात् तत् स्वाश्रयमेव आवृणोति। तथा च अज्ञानं ज्ञानाश्रितमेव, न तु जडाश्रितम्। तेन शुद्धब्रह्मणो न अज्ञानाश्रयत्वम्, किन्तु अज्ञानावृत-जीवरूप-ब्रह्मण एव अस्य आश्रयत्वम्। तेन अज्ञानम् आत्माश्रयम् आत्मविषयकं च। यावत् जीवभावकं तावत् अस्य सत्त्वादिकं, ततश्च तत् सत्त्वमपि प्रातिभासिकमेव। एतेन दृष्टिरूपा सृष्टिरिति मतं सिध्यति। एतदेव एतच्छास्त्रस्य नवमं प्रतिपाद्यं भवति।

### दशमप्रतिपाद्यनिरूपणम्

दशमं प्रतिपाद्यं तदेतद् अज्ञानम्, अज्ञान-जन्या या बुद्धिः, तस्याः च या ब्रह्माकारा वृत्तिः तया एव अज्ञानं नश्यति। शुद्धब्रह्मणा सह अस्य विरोधिता नास्ति, तस्य तत्र अभावात्। तेन तदज्ञानं ज्ञानवृत्ति-नाश्यं, न ज्ञानस्वरूप-नाश्यं भवति। ब्रह्म च तेन वृत्ति-व्याप्यं, न तु फलव्याप्यम्—इत्यपि एतस्मादेव सिध्यति। एतदेव एतच्छास्त्रस्य दशमं प्रतिपाद्यं भवति। तथा च अयं निष्कर्षः—

"ब्रह्मज्ञानाद्भवेन्मुक्तिर्न कर्मोपासनादितः। तच्चित्त-मल-नाशाय कर्म-समुच्चयस्ततः॥
अज्ञानोत्पन्न-संसारो ब्रह्मात्मैक्याद् विनश्यति। अतोऽज्ञानं भवेन्मिथ्या, दृश्यते न तु विद्यते॥
भावरूपं तदज्ञानं स्वाश्रयावारकं पुनः। सदसद्भ्यामनिर्वाच्यमेतच्छास्त्र-विनिर्णयः॥
ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः। अयमर्थश्च सूत्राणां सर्वत्र पर्यवस्यति॥

एवं च यावन्तः सिद्धान्ताः अद्वैतमतानुकूलाः ते सर्वे एव एतदुपक्रमोपसंहारात्मक-सूत्र-द्वयादेव लभ्यन्ते। नूनम् एतदेव भगवद्-व्यासस्य अपूर्वम् अनन्यसाधारणं कौशलमेकं, यद् आद्यन्त-सूत्राक्षरत एव वेदान्त-प्रतिपाद्यरूपाः सर्वे एव विषयाः ज्ञातुं शक्यन्ते प्रेक्षावद्भिरिति। एतदेव शास्त्रप्रकृतिनाम्ना अत्र अभिधीयते। विस्तारभयात् सूत्राक्षरत एव अन्यद् वेदान्त-प्रतिपाद्य-वैशिष्ट्यम् न अत्र प्रदर्शितम्।

### षड्विध-तात्पर्यनिर्णायक-लिङ्गप्रदर्शनम्

ननु षड्विध-तात्पर्य-निर्णायक-लिङ्गानां मध्ये केवलम् एकेनैव उपक्रमोप-संहाराख्येन लिङ्गेन यन्निरूपितं, तत्र तात्पर्यं भवितुं युक्तम्, अभ्यासाद्यवशिष्टलिङ्ग-पञ्चकानां तत्र अनैक्य-सम्भवात्। यदेव एतल्लिङ्गषट्कसाधारणं तदेव तात्पर्यम्। तेन अत्र उपक्रमोपसंहार-

सूत्रद्वय-साहाय्येन यत् तात्पर्यत्वेन वर्णितं, तन्न तावद् आदरणीयं, यावन्न अवशिष्ट-लिङ्गपञ्चकैः परीक्षितं स्यात्। सत्यम्, तथा कर्त्तव्ये सति अत्रैव सर्वे ग्रन्था आलोचनीया स्युः, तन्न अत्र सम्भाव्यते सङ्गच्छते च। ततश्च सर्वेषां सूत्राणाम् अर्थज्ञानाद् ऋते अभ्यासादिद्वारा समग्र-सूत्रार्थालोचन न सम्भवति। सर्वसूत्रार्थश्च शास्त्र-प्रतिपाद्य-ज्ञानाधीनः, शास्त्रप्रतिपाद्यज्ञानं च अभ्यासादि-शास्त्रप्रतिपाद्यलिङ्गनिर्णयतन्त्र, तच्च पुनः सूत्रार्थज्ञान-सापेक्षम्। तेन सर्वलिङ्गाना प्रयोगो नात्र सङ्गच्छते, चक्रकादिदोषापत्तेश्च। परन्तु तथापि सर्वाणि लिङ्गान्यत्र प्रयोक्तव्यानि, तदृते एकेन लिङ्गेन निर्णीत अर्थो न सशय-बीज-वर्ज्जित. स्यात्। तदा काऽत्र गति. ?

## चतु सूत्रीभागेन तेषां प्रदर्शनम्

एतदर्थं कौशलम् एकम् उद्भावयितुं शक्यते। दृश्यते च ग्रन्थेऽस्मिन् चतु संख्याव-लम्बनेन प्रतिपाद्य-विषय-वर्णनरूपा एका रीतिः अवलम्बिता व्यासेन भगवता, यथा ग्रन्थ-स्यास्य चत्वारः अध्यायाः, सर्वेषु अध्यायेषु चत्वार पादा इति। एतस्य कोऽभिसन्धि. इति प्रागेव उक्तम्, अतो नात्र पुन. प्रपञ्च्यते। तेन, अथवा व्याससम्प्रदाय-शिक्षानुरोधेन, प्रायेण सर्वै. भाष्यकारैः एतद्-ग्रन्थस्य सर्वे प्रतिपाद्य-विषया चतु सूत्री-भागेनैव वर्णिताः। चतुःसूत्री-भागश्च तेन एतद्ग्रन्थस्य सारभूत., बीजभूतो वा वक्तुं शक्यते। तेन यदि प्रथमादिषु चतुर्षु सूत्रेषु अभ्यासादिभि. अवशिष्टलिङ्गपञ्चकै तात्पर्यनिर्णय. कृत. स्यात्, तदेव तात्पर्यं च यदि उपक्रमोप-संहार-सिद्ध-तात्पर्यस्यापि अनुगुणं स्यात्, तदा तादृशे तात्पर्ये न कापि विप्रति-पत्ति. सम्भाव्यते, तथा च अस्माकम् उद्देश्यसिद्धिश्च कथञ्चित् सम्पूर्णता यास्यतीति वयम् आशास्महे। एव चेत् तदा इदानीं जन्मादि-सूत्रत्रयम् आलोचनीयम्।

## द्वितीयसूत्रमध्ये तेषां निरूपणम्

तत्र "जन्माद्यस्य यत" इति द्वितीयं सूत्रम्। अस्य अर्थ., यत. यद्वस्तुनः, अस्य जगतः, जन्मादि जन्मस्थितिलयं भवति तद् ब्रह्म। तेन यतो यस्मात् कारणात् जगतो जन्म, तद् ब्रह्म, यतो यस्मिन् कारणे जगत स्थिति, तद् ब्रह्म, यतो यस्मिन् च कारणे जगत लयः तद् ब्रह्म इति त्रिविधं ब्रह्मलक्षणं सूत्राक्षरत एव प्राप्तम्। तथा च एत-ल्लक्षण-त्रयेण यद् ब्रह्म अवगम्यते, तद् ब्रह्म जगत उपादान-निमित्त-रूपम् उभय कारणं भवति। यत एतत्सूत्र-लक्षितश्रुतौ "सत्यं ज्ञानमनन्त ब्रह्म तस्माद् वा एतस्माद् आत्मन आकाश सम्भूत, आकाशाद् वायु, वायोरग्नि, अग्नेराप अद्भ्य पृथिवी" ( तै १।१ ) इत्यत्र, तथा "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभि-संविशन्ति तद् विजिज्ञासस्व तद् ब्रह्म" ( तै० उ० ३।१ ) इत्यत्र अभिन्न-निमित्तोपादान-कारणत्वमेव ब्रह्मण परिव्यक्त भवति। उपादाननिमित्तकारणयो भिन्नत्वे ब्रह्मण सर्वोत्पत्तिप्रतिज्ञा भज्येत। एव च तत् जिज्ञास्य ब्रह्म, यत् प्रथमसूत्रेण प्रकृत, तत् किं रूपम् ? इत्येवम्

आकाङ्क्षाया उत्तरमिदं भवति "जन्माद्यस्य यतः" इति । अनेन ब्रह्मणः लक्षणम् उक्तं भवति ।

तत्र प्रथमं तावत् "यतो जन्म" इति ब्रह्मणः प्रथम-लक्षणे "जनिकर्तुः प्रकृतिः" इति अनुशासनात् अभ्यर्हिततया उपादानत्वमेव निमित्तत्वापेक्षया स्वीकार्यमिति । तेन मृत्पिण्डस्य घटं प्रति इव, तन्तोः पटं प्रति इव, जगत् प्रति ब्रह्मणः उपादानत्वम् उक्तं स्यात् । तेन ब्रह्मण एव अंशविशेषः समुदायो वा जगदाकारेण परिणमते प्रतीयते वा—इति परिणामवादेन विवर्तवादेन वा व्याख्येयम् । तत्र समग्रब्रह्मणः परिणतिपक्षात् जगदुत्पत्तौ, तथा ब्रह्मणोऽंशविशेषस्य परिणतिपक्षाद् वा तदुत्पत्तौ ब्रह्मणो विकारित्वम् अनिवार्यमेव भवेत । विकारित्वे च ब्रह्मणः अनित्यत्वं प्रसज्येत । तथा सति उत्पत्तेः प्राग् यद् ब्रह्म आसीत्, इदानीं तन्न वर्तते, प्रलयेऽपि तद् ब्रह्म न वर्तिष्यते, यतो विकृतं सम्पूर्णतया प्रकृतितापत्तिः न दृश्यते इति । यत्र तथा दृश्यते तत्र सा विकृतिः प्रातीतिकी एव । ब्रह्मणः विकृतिमात्रेण जगद् उत्पद्यते इति यत् मतं तत् श्रुतिस्मृति-विरुद्धमपि । ब्रह्मणः अविकारित्वम् अखण्डत्वम् अजत्वं नित्यत्वादिकं च श्रुतौ स्मृतौ च बहुधा उद्घोषितम् । अंशविशेषस्य विकारित्वं तथा अंशान्तरस्य अविकारित्वं स्वीकृतं चेत्, तदा स अंशांशिसम्बन्धः सत्यतया न ग्रहणीयः । यतो यदंशस्य विकारः स्यात्, स अंशः न अविकारिणः अंशत्वम् अश्नुते । तत्र अंशांशिसम्बन्धकल्पनं भ्रम एव । तत्र विकारस्य असत्यत्वमेव कल्पनीयम् । तेन प्रतीतिमात्राज् जगदुत्पत्तिरेव स्वीकार्या भवति । एवं च प्रतीतिमात्राद् ब्रह्मणः अंशेन समग्रेण वा जगदुत्पत्तिस्वीकारे शुक्तौ रजतोत्पत्तिवज् जगद् ब्रह्मणः विवर्त एवेति सिध्यति । अतः द्वितीयसूत्रेण विवर्तवाद एव उपदिष्टः भवति ।

### परिणामारम्भवादिनोर्विचारः आरम्भवादः

अत्र तु परिणामारम्भवादिनौ परस्परं महोत्साहेन प्रत्यवतिष्ठेते । परं तु मतं तयोः न विचारसहम्, प्रत्युत तयोः विवादफलम् अनिर्वचनीयवादानुकूलम् ।

तथा हि आरम्भवादिनां मते—जगद् यदि ब्रह्मण एव जातं स्यात्, तदा तस्य जन्मनः प्राक् तत् जगत् तस्य कारणे ब्रह्मणि आसीत् न वा ? यदि तत्र जगद् आसीत् व्यक्तरूपेण, तदा जन्मार्थस्य व्यर्थतापत्तिः दुर्वारा । अथ चेत् सूक्ष्मरूपेण अव्यक्तरूपेण वा जगत् तत्र आसीत्, तदा 'तस्य जन्म'—इत्युक्ते जन्मपदस्य अर्थसंकोच एव कृतः स्यात् । जगज्जन्मनः प्राग् यदि जगद् ब्रह्मणि वर्तेत, तदा तस्य जन्म इति संगच्छते कथम् ? ब्रह्मणः वा कारणत्वं कथम् ? अव्यक्तजगदेव व्यक्तजगतः कारणं भवति, न तु ब्रह्म । अतः सूक्ष्मरूपेण जगत्सत्तायाः स्वीकारे ब्रह्मणः जगत्कारणत्वं व्याहतं स्यात् । यत् न वर्तते तस्यैव जन्म—इत्येव सङ्गतम् । यत् तु विद्यते, तस्य जन्म-कल्पनं सिद्धसाधन-दोषदुष्टम् । यथा पुत्रजन्मनः प्राक् पुत्रः पितृमातृ-शरीरे देशान्तरे वा कुत्रापि न वर्तते इत्येव सर्वैः दृश्यते । अतः असतः अविद्यमानस्य एव जन्म भवति, न तु सतः विद्यमानस्य, यथा घटोत्पत्तिः घटप्रागभावाद् भवति—इत्येव समीचीनं मतम् ।

अत एव जगज्जन्मनः प्राक्, जगत् न ब्रह्मणि कथमपि आसीत् इत्येव स्वीकार्यम्। तेन आरम्भवादः असत्कार्य्यवादो वा सङ्गच्छते न तु परिणामवादः।

### तत्र परिणामवादिनां मतम्

अत्र परिणाम-वादिनः प्रतिवदन्ति- तर्हि कार्य कारणे न वर्तेत, तदा वालुकात तैलं कथं न उत्पद्यते ? घटार्थी न मृत्पिण्डम् आहरिष्यत्। सफलप्रवृत्ति-जनकत्व-दर्शनात्, कार्य कारणे रूपान्तरेणैव वर्त्तते इत्येव स्वीकार्यम्। इयं रूपान्तरता कार्यस्य कारणे अव्यक्तावस्था इत्युच्यते। सतः अवस्थान्तरता-सम्पादनमेव तस्य जन्म उत्पत्तिर्वा इत्येव समीचीनं मतम्। एवं च जगदपि ब्रह्मणि अव्यक्तावस्थया वर्त्तते, तत एव आविर्भवति। अतः सत्कार्यवादापरनाम परिणामवादः एव युक्तः, आरम्भवादे अभावाद् भावोत्पत्ति-प्रसङ्गाद् आरम्भवादापरनाम असत्कार्य्यवादो न युक्त इति।

### परिणामवादभेद

अत्र केचिद् एतदव्यक्तावस्थापन्नजगतः ब्रह्मभिन्नत्वेन अवस्थान मन्यन्ते, केचिद् भिन्नाभिन्नत्वेनेति। आद्यास्तु प्रकृतिपुरुषवादिन साङ्ख्याः, यत. तन्मते प्रकृतेरेव परिणामः जगत्; अथवा ते परमाणुप्रभृतिवादिनो नैयायिक-वैशेषिकविशेषाश्च। तथापि व्यवहारतः नैयायिका वैशेषिकाश्च असत्कार्य्यवादिनः इत्येव मन्यते, न तु परिणामवादिन. इति। यत. तेषां मते परमाणुप्रभृतीना संस्थानविशेषः एव जगत्। अन्त्याश्च ब्रह्मकारणता-वादिनः, अथवा ब्रह्मशक्तिकारणतावादिन. शैव-शाक्त-वैष्णवादय। एते खलु प्रायेण विशिष्टाद्वैतवादिनो द्वैताद्वैतवादिनः इत्यादिनाम्ना समाख्यायन्ते। ब्रह्मणि जगत. अव्यक्त-रूपेण अभिन्नरूपेण वा अथवा शक्तिरूपेण अवस्थानस्वीकारात्, ततः एव च पुनस्तस्य पूर्ववद् आविर्भावात्। एतेषां मते जीवजगतोः ब्रह्मणा सह सुवर्ण-कुण्डलयोरिव भिन्नाभिन्न-सम्बन्धः स्वीक्रियते। सत्कारणतावादिमते कारणस्वरूपब्रह्मशक्तिपरिणाम. एव जगद्रूपकार्य भवति। तन्मते कार्यकारणयोः सम्पूर्णतया अभेदे स्वीकृते कार्यस्य तथा तत्कारणशक्तेरपि मिथ्यात्वमेव सिध्यति। शक्त्याश्रयं ब्रह्ममात्रं सद्वस्तु। कार्यस्य उत्पादविलयादिकं सर्वं तन्मते मिथ्यैव भवेत्। सत्कार्यवादाख्य-परिणामवादे कार्यस्य कारणे सत्त्व कारणात्मना शक्त्यात्मना वा यतः स्वीकृत स्यात्, ततः कार्य्यकारणयोः भेदाभेद-सम्बन्ध-घटित-परिणामवाद. एव सिध्यति, कार्य्यस्य जगतादे. सत्यत्वं च स्वीकर्त्तव्य स्यात्। तत्र स्वातन्त्र्यवादे तु शक्तिशक्तिमतो अभेदेऽपि शक्तिपरिणाम. एव जगत, तच्च सत्यमिति मन्यते। अत अत्र सत्यत्वं मिथ्यात्वस्य नामान्तरमेव भवति। यत. द्वयोः न अभिन्नता सम्भवति, एकस्यैव द्वित्वभ्रमे अभिन्नता उपदिश्यते। अत. शक्तिमतो. अभेदे एकतरस्य परिणामे उच्यमाने वदतोव्याघातदोष एव उपजायते। तेन स्वातन्त्र्यवादे जगत्सत्यत्वं न वास्तवं भवति। एवं च परिणामवादे एतानि एव मतान्तराणि दृश्यन्ते।

आरम्भवादिनां परिणामवादखण्डनम्

अत्र तु आरम्भवादिनां मन्तव्यमानं दर्श्यते । ते तावत् मन्यन्ते—यदि कार्यं कारणे वर्तेत, तर्हि कथं न तत् कार्यं तत्र दृश्यं भवेत् ? अणुवीक्षण-यन्त्र-साहाय्येन वटबीजेषु पूर्णावयव-वटवृक्षोऽपि द्रष्टुं शक्यते, तस्य तत्र अव्यक्तावस्था-सत्त्वेऽपि । तन्तुषु तु घटो न अव्यक्तावस्थायाम् सन् वर्तते, अतस्तत्र घटो न दृश्यते कथञ्चन । अतः कार्यं कारणे न वर्तते । विद्यमाने सति तद् अवश्यमेव दृश्यं भवेत् । ततश्च यस्य कार्यस्य कारणे अव्यक्तभावेनापि वर्तनं, यथा वटबीजे वटवृक्ष-वर्तनं, तस्य ततो जन्म—इति वक्तुं न शक्यते । वर्तमानस्य जन्म न सम्भवति । अवर्तमानस्यैव जन्म । अव्यक्तस्य व्यक्ततापत्तिः नापि सम्भवति । अवस्थान्तरमात्रस्य व्यक्तत्वेन हि सा । अव्यक्तस्य व्यक्तत्वे स्वरूपतः निर्दोष एव भवेत् । अतो यस्य यतो जन्म, तत् तत्र न विद्यते । अभावाद् भावोत्पत्तिरिति यद् बौद्धकल्पनं, तन्न सम्यक् । अभावत्वाभावाद् भावोत्पत्तौ ताद्रूप्यापत्तेः प्रसङ्गः । अतः आरम्भवाद एव समीचीनः । तेन तन्तुभ्यः घटोत्पत्तिस्थले यथा कारणभूततन्तुषु कार्यम् असत्, कारणाद् असत एव कार्यं सद्रूपेण उत्पद्यते—तथा सद्ब्रह्मणि तत् जगत् न कथमपि विद्यते, सद्ब्रह्मणि तज् जगत् असदेव भवति । तस्मात् सतः न जगतः जन्म, किन्तु असत एव जगतो जन्मादिकम्—इत्येव वक्तुम् उचितम् । सतः अवस्थान्तरता-सम्पादनमपि न जन्म-पदस्य अर्थो भवितुम् अर्हति । न कोऽपि कस्यचिद् वस्तुनः अवस्थाविशेषस्य एव जन्मत्वं स्वीकरोति, अवस्थावतः सत एव जन्म—इत्येव सर्वैः स्वीक्रियते । तेन असत एव जन्म, न तु सतः । अतः आरम्भवादः असत्कार्य्यवाद एव वा समीचीनः, न तु परिणामवादः सत्कार्य्यवादो वा इति ।

उभयोर्विवादे विवर्तवादः

एवं च पक्षद्वय-समालोचने कृते उभयमेव अस्तत्वम् सत्यम् असत्यं च इति प्रतिभाति । तथैव उभयोरपि ऐक्यम् अनैक्यं च दृश्यते । कारणे कार्यस्य सत्त्वम् असत्त्वम् इति उभयमेव प्रतिभाति । तेन विरुद्धयोः सत्त्वासत्त्वे तृतीय-पक्षरूपम् अनिर्वचनीयत्वमेव कार्य्यस्य सिध्यति । तदेव सदसद्भिन्नत्वम् । न वा कार्य्यस्य उभयात्मकरूपत्वं सदसत्त्वम् । सदसतोः परस्पर-विरोधात् न सामानाधिकरण्यम् । परस्पर-विरुद्धयोः सामानाधिकरण्यस्य निर्वचनासम्भवाद् अनिर्वचनीयत्वम् एव युक्तम् । यत् च सदसदुभयात्मकमिति कल्प्यते, तत् वस्तुतः सत् न वा असत् भवितुम् अर्हति । अवयविवत् तस्य अतिरिक्तत्वात् । एवं सदसद्वादोऽपि निरस्तः । अतः सदसद्भिन्नवाद एव प्रतिष्ठितः । अयमेव विवर्तवादः अनिर्वचनीयवादः सत्कारणवादो वा । एतदेव आरम्भ-परिणाम-वादयोः विवाद-फलम् । ततश्च भिन्नाभिन्नसम्बन्धोऽपि अनिर्वचनीयः, समान-धर्म-सम्बन्धावच्छेदेन भेदाभेदयोः विरुद्धस्वभावत्वात् । असमान-धर्म-सम्बन्धावच्छेदेन अवस्थितौ सत्यां भेद-सम्बन्ध एव सिध्यति । अतो भिन्नाभिन्नत्व-

वादिनोऽपि भेदवादिन एव । वेदान्तिना मते भिन्नाभिन्नत्व-सम्बन्ध-मध्ये भेद एव मिथ्या, यत. स दृश्यते न तु विद्यते। अभेदस्तु पारमार्थिक। अतो भेदवादरूपः भेदाभेदवादोऽपि मिथ्या। अभेदवादश्च अजातिवाद एव, स एव यथार्थः युक्तिसहश्च। तेन ते विवर्त्तवादिन. इत्यादिनाम्ना आख्यायन्ते। यथा शुक्तौ रजतोत्पत्तिः प्रातीतिकी, न तु पारमार्थिकी, एवमेव कार्य्य-जातं प्रातीतिकं न तु पारमार्थिकम्। अत्र शुक्ति-स्थानीयाधिष्ठानं सत्यं, रजत-स्थानीयारोप्यम् असत्यम् अनृतं वा। एतदेव विवर्त्तवादिनां मतम्। आरम्भ-परिणाम-वादिनोः विरोधफलमेव अयं विवर्त्तवादः इति मन्यते। एतेन विवर्त्तवादानुसारेण ब्रह्मण जगतः जन्म, न तु अन्यतः कुतश्चित् -इति मतमेव पर्यवस्यति। तथा च 'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः' इत्येव अर्थ. 'यतोऽस्य जन्म' इति "जन्माद्यस्य यत." इति सूत्रोक्तब्रह्मलक्षणतः अवगम्यते।

### ब्रह्मण द्वितीयलक्षणफलम्

एवं च द्वितीय यद् ब्रह्मलक्षण "यतोऽस्य स्थितिः" इति, यत्र "येन च जातानि जीवन्ति" इति श्रुतिभागो लक्ष्यते इति, ततोऽपि ब्रह्मणः सत्यत्वं, जगतो मिथ्यात्वं, जीवस्य ब्रह्माभिन्नत्वं च सिध्यति। यतो "यतोऽस्य स्थिति." इत्यत्र घटादीनां मृत्तिकाया स्थितिवत्, कङ्कणादीना सुवर्णे स्थितिवत्, पटस्य तन्तुषु स्थितिवत्, तरङ्गाणा तारङ्गे समुद्रे स्थितिवत्, शुक्तिरजतादीना शुक्तौ स्थितिवत्, ब्रह्मणि एव जगतः इयं स्थिति इति अवगम्यते, जगत अन्यत्र स्थितिश्च निषिध्यते। भूतलादिषु घटस्थितिवत्-स्थितिकल्पने "जगद् ब्रह्मणि स्थितम्" इत्युक्तेः न किमपि सार्थक्यम्, अन्यत्र स्थितेः अनिवारणात्। ब्रह्मण्येव जगतः स्थिति इत्युक्ते, जगतः अन्यत्र स्थिति. निषिध्यते। अतः जगत. न स्वाधीन-सत्ताकत्वम्। स्वाधीन-सत्ताकस्य यत्किञ्चिदाधार-निर्देशे, न कोऽपि लाभः। एतेन न किमपि अधिकम् उपदिष्टं भगवत्या श्रुत्या। अतोऽस्य पराधीन-सत्ताकत्वम् अत्र श्रुतेः उपदेश। तत्रैव उपदेशस्य अपूर्वत्वं सार्थकय च। यतो जगतः स्वाधीनसत्ताकत्वमेव अस्माकं यः निश्चय, स एव भ्रमः। तन्नाश एव अत्र सार्थक्यम्। न वा घटादीनां मृत्तिकाया स्थितिः, शुक्तिरजतादीनां शुक्तौ स्थितितः स्वरूपत भिद्यते। उभयत्र पराधीनसत्ताकत्वं विद्यते। व्यवहारार्हत्वं च उभयोरेव वर्त्तते। प्रभेदस्तु स्थिति-कालगताल्पाधिक्यम् एव। रज्जुसर्प-जन्य-भीतिवशात मृत्युरपि संघटते। शुक्तौ रजतभ्रम-वशात् मिथ विरोधोऽपि जायते। एतेषु सर्वेषु स्थलेषु कार्यस्य कारणे एव विलय, तत्रैव स्थिति उत्पत्तिश्च। अतो जगत् ब्रह्मणि कल्पितमेव। जगतो ब्रह्मणि स्थिति. इति उक्त्या जगद्ब्रह्मणो अतिरिक्तं किमपि नास्ति, यत्र जगत. स्थिति कल्पयितु शक्यते। ब्रह्मैव केवलं वर्त्तते। तत्रैव जगत स्थिति इत्येव अत्र उक्तं भवति। अधीन-सत्ताकत्वस्य कल्पितत्वं मिथ्यात्वं वा सर्वैः मन्तुम्

उचितम्। एतेन जगतो मिथ्यात्वमेव उपदिष्ट भवति, तथा च विवर्त्तवादोऽपि अत्र चोदित अस्ति। इत्यत्र नास्ति कोऽपि सन्देह ।

ब्रह्मण तृतीयं लक्षणम्

तथा च तृतीय यद् ब्रह्मलक्षणं "यस्मिन् जगतो लय तद् ब्रह्म" इति, तत्रापि पूर्वोक्तमेव दृढीकृतम्। यतो यस्मिन् जगतो लयो जायते, तस्मिन् तज्जगद् व्यक्तरूपेण अव्यक्तरूपेण वा वर्तते न वा। यदि केनचिद् रूपेणापि वर्तते, तदा लय तत्र न आत्यन्तिको निरवशेषो वा। सावशेष लये च न लयशब्दस्य सम्पूर्णोऽर्थ परिगृहीत स्यात्। तथा सति लयशब्दस्य अर्थसङ्कोच एव कृत स्यात्। अलौकिकविषये एतत् तु नैव सङ्गतम्। एव चेद्, ब्रह्मणि जगत सम्यक् लये सति जगत आत्यन्तिक अभाव एव तत्र भविष्यति। एतादृशो लय, तेन, जागरे स्वाप्नविलयसदृश, शुक्तौ शुक्तिरजत-लयवद् एव भवितुम् उचित। तथा सति जगद् ब्रह्मणि कल्पितमेव इत्येव सिध्यति। अत एतेन प्रागुक्त सिद्धान्त एव दृढीकृत, "ब्रह्म सत्यं, जगन्मिथ्या, जीवो ब्रह्मैव नापर" इत्येव प्रमाणितम्।

एवं च प्रथमसूत्रेण यद् ब्रह्मसत्यत्वं जगन्मिथ्यात्वादिकं च प्रतिपादित, तदेव एतत् सूत्रेणापि ब्रह्मणो लक्षणत्रयेण समर्थितम्। इयं पुनरुक्ति तेन प्रागुक्त-षड्विध-तात्पर्यनिर्णायक-लिङ्गानां मध्ये "अभ्यास"-नामकम् एकं लिङ्गमिति वक्तु शक्यते। अत प्रागुक्तोपक्रमोपसंहाराख्य-लिङ्गेन सह अस्य अभ्यासस्य एकवाक्यता जाता—इति दृश्यते। तेन अद्वैतमतानुसारेण ब्रह्मप्रतिपादनमेव एतच्छास्त्र प्रतिपाद्यं भवति।

ततश्च एतत्सूत्रेण "उपपत्ति"-र्नाम अपर लिङ्गमपि उपलभ्यते। यत एतेन वेदान्तवाक्यम् अवलम्ब्य ब्रह्मण लक्षणम् उक्तम्। लक्षणमेव अनुमितौ हेतुर्भवति। यथा सास्नादिमत्त्व पशुत्व लक्षणं, गलकम्बलवत्त्व च गोर्लक्षणम्। पशुत्व गोश्च अनुमाने कर्तव्ये, ते द्वे हेतू भवत। तेन एतत्सूत्रीमध्ये यद् ब्रह्मलक्षणम् उक्तं तत्रैव 'उपपत्ति'-र्नाम तात्पर्यनिर्णायक-लिङ्गम् उपलभ्यते। एतेनापि उपक्रमोपसंहाराख्यलिङ्गप्रतिपाद्य यद् ब्रह्मसत्यत्व-जगन्मिथ्यात्वादिकं, तदेव एतज्जन्मादिसूत्रेण विज्ञापितम्—इति प्रदर्शयितु शक्यम्। एवं च सूत्रद्वयेन षड्विध-तात्पर्य-निर्णायक-लिङ्गानां मध्ये त्रीणि लिङ्गानि उपलब्धव्यानि। तै त्रिभिरेव एतच्छास्त्रस्य प्रतिपाद्य यद् अद्वैतब्रह्मसत्यत्व-जगन्मिथ्यात्वादिकं तत सर्वं सम्यक् लभ्यते एव।

तृतीयसूत्रमध्ये तेषां प्रदर्शनम्

ततश्च तृतीयं सूत्रं "शास्त्रयोनित्वात्" इति। एतस्य सर्वसम्मत अर्थ—"शास्त्रमेव योनिः प्रमाणं यस्य तद् ब्रह्म।" तेन तदेव ब्रह्म अनेन शास्त्रेण प्रतिपादितं, यच्छास्त्रमात्र-गम्यम् न प्रत्यक्षानुमानाद्यपर-प्रमाण-गोचरम्। 'औपनिषदं पुरुषं पृच्छामि' "तद् ब्रह्म उपनिषत्परम्" इत्यादिश्रुतिभ्य एतदेव प्रमीयते। तदेतद् ब्रह्म निर्विशेषाद्वैतम्,

असङ्गम्, अखण्डं चेति। यतो निर्विशेषाद्वैते प्रत्यक्षाद्यपर-प्रमाणाना नोपयोग', प्रमाणाना सम्बन्धाधीनत्वात्। निर्विशेषाद्वैतम् असङ्गमेव, असङ्गब्रह्मणा सह सम्बन्धस्य अयोगात्। यद्यपि एवं शास्त्रस्यापि न तत्र प्रामाण्यं स्यात्, तथापि निषधमुखेन कथञ्चित् तत् सम्भवत्येव इति प्राग् उपवर्णितम्। एवं च ब्रह्मण' असङ्गत्वविवक्षयापि तदन्यत् सर्वं मिथ्येति प्रतिपादितम्। मिथ्या सह सत्यस्य य' सम्बन्ध. सोऽपि मिथ्यैव। तेन ब्रह्मान्यस्य सर्वस्य निषेधः। निषेधप्रतियोगिना सह सद्ब्रह्मणः सम्बन्धोऽपि मिथ्यैव भवति। असद् यद् दृश्यं भवति, तदेव मिथ्या। अदृश्यम् यद् असत् बन्ध्यापुत्रादिकं, तन्न मिथ्या। यच्च सत् तदपि न दृश्यम्। यद् दृश्यं तदेव मिथ्या। एतेन ब्रह्मणः शास्त्रमात्र-गम्यत्वात्, तस्य निर्विशेषाद्वैतत्वं, तद्भिन्नस्य मिथ्यात्वं च सिध्यतः। एतदेव च पूर्वसूत्रद्वयेनापि उपपादितम्। अतः अत्रापि "अभ्यास"-लक्षण-तात्पर्यनिर्णायकं लिङ्गं सुलभम्।

ततश्च अत्रैव "अपूर्वता"-नामकं लिङ्गं प्रदर्शयितुं शक्यते, यतो यन्न पूर्वं जातं, यन्न पूर्वं केनापि उपायेन ज्ञातं, तदेव "अपूर्वम्" इत्यत्र न कापि विप्रतिपत्ति.। एवं यज् जिज्ञास्यं ब्रह्म, यतो दृश्यजातस्य जन्मादयः, यच्च पुन' निर्विशेषम् अद्वैतम् अचिन्त्यम् अज्ञेयं, तस्य शास्त्रमात्रैकगम्यत्व-कथनम् अपूर्वमेव। एतदेव शास्त्र-मात्रैकगम्यत्वम् एतत्सूत्रेण विज्ञापितम्। तेन यद् ब्रह्म उपक्रमोपसंहारादिना प्रतिपादित, तदेव अत्र अपूर्व-विषयत्वेन प्रतिपादित सत् प्रदर्शितलिङ्गत्रयेण यद् एतच्छास्त्रतात्पर्यत्वेन उक्तम्, तेन सह अस्य ऐक्यमेव प्राप्तम्। निर्विशेषाद्वैत-ब्रह्मणि सिद्धे ब्रह्मसत्यत्व-जगन्मिथ्यात्व-जीवब्रह्माभिन्नत्वादिकं सर्वं पूर्ववत् सिद्धमेव। एवं च एतत्सूत्रेण "अपूर्वता"-नामकलिङ्गमपि लभ्यते।

अर्थवादश्चापि एतत्सूत्रेणैव उपलभ्यते, यतोऽर्थवादः स्तुतिनिन्दा-स्वरूपः। अत्र शास्त्रमात्रगम्यत्वं ब्रह्मण प्रतिपाद्यं, शास्त्रं च नित्यम् अपौरुषेयम् इति मत्वा ब्रह्मविद्याया स्तुतिरेव कृता स्यात्। तेन ब्रह्मणः शास्त्रभिन्न-गम्यत्वमपि निन्दितं भवति। एवं च अर्थवादोऽपि अत्र लभ्यते एव। तथा सति एतेनापि अद्वैतब्रह्मण. एव सत्यत्वम्, अन्यस्य सर्वस्य मिथ्यात्वम् इत्येव सुदृढीकृतम्। अत एव पूर्वोक्तसूत्रद्वयेन सह एकतात्पर्यकत्वं च लभ्यते। तेन ब्रह्मसत्यत्व-जगन्मिथ्यात्व-जीवब्रह्माभिन्नत्वादिकं सर्वम् एतदर्थवादरूप-तात्पर्यनिर्णायक-लिङ्गेनापि लब्धम्। एवं च एतत्सूत्रत्रयेण पञ्च-तात्पर्य-निर्णायक-लिङ्गानि समधिगतानि।

### चतुर्थसूत्रेण तेषां प्रदर्शनम्

तथैव चतुर्थेन सूत्रेण फल नामकं लिङ्गमपि सुलभमेव। तच्च सूत्रम् "तत् तु समन्वयात्" इति। अत्र पूर्वोक्तसूत्राद् यदि आकाङ्क्षा जायते, कर्मोपासने चापि एतच्छास्त्रप्रतिपाद्ये भवत. यतस्ते द्वे अपि ब्रह्मवत् नान्य-प्रमाण-गम्ये, अलौकिक-विषयत्वात्; तेन उच्यते, "तु" तत्र, "तद्" ब्रह्म एव शास्त्रप्रतिपाद्यं, तस्मिन्नेव शास्त्राणा "समन्वय"-सत्त्वात्। एतेन ब्रह्मैव

एतच्छास्त्रप्रतिपाद्यम्—इत्येव उपदिश्यते। तथा च एतच्छास्त्रावगते फलं ब्रह्मज्ञानम्। तदर्थं च नान्य-साधनापेक्षा। अस्मिन् सन्निहितत्वाद् ब्रह्मण आत्मत्वाच्च। अथ चेत् तद् ब्रह्म सगुणं सविशेषं वा स्यात्? तदा न तत् केवलं शास्त्रमात्र-गम्यं भवेद्, यतः सगुणस्य सविशेषस्य च अनुमानादि प्रमाणगम्यत्वमपि सम्भाव्यते। निर्गुण-निर्विशेष-ब्रह्मण एव शास्त्रमात्र-गम्यत्वं, तत्र अन्यप्रमाणगम्यं कथमपि भवति। ततश्च निर्गुणब्रह्मण एतच्छास्त्रनान्तरीयकत्वे, एतच्छास्त्र-प्रतिपाद्यत्वे च जगन्मिथ्यात्वादिकमपि प्रसज्यते। यतो जगदादीनां मिथ्यात्वम् विना ब्रह्मणः निर्गुणत्वं न सम्भाव्यते। अत एतत् फल-नामक-लिङ्गेनापि ब्रह्मसत्यत्वं जगन्मिथ्यात्वं जीवब्रह्माभिन्नत्वादिकं सर्वं पूर्वोक्तमेव लभ्यते। तस्यैव अन्यलिङ्ग-प्रतिपादितत्वात्, तदेव षड्विध-तात्पर्य-निर्णायक-लिङ्गसिद्धं भवति। एवं च अभ्यासोऽपि अत्र प्रदर्शयितुं शक्यते। तथा सति "ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" इति यद् आदौ उपक्रमोपसंहार-प्रदर्शनावसरे उक्तम्—तस्यैव अत्र प्रतिपादितत्वात् एतदेव एतद्ब्रह्मसूत्राख्य ग्रन्थस्य प्रतिपाद्यं भवति इति दिक्।

### शास्त्रसङ्गतिनिरूपणोपसंहारः

एवं च एतदेव चेद् एतच्छास्त्रप्रतिपाद्यं भवेत्, तदा ग्रन्थस्यास्य चतुर्षु अध्यायेषु, तत्रापि प्रत्येकं पादे, एवं च अस्य षोडशसु पादेषु, तथैव तदन्तर्गतेषु सर्वेषु अधिकरणेषु, पुनः तदधिकरणान्तर्गतेषु सर्वेषु सूत्रेषु एतच्छास्त्र प्रतिपाद्य-विषयाणाम् अविरुद्धो योऽर्थः स एव करणीयः नान्यः। इयमेव शास्त्रसङ्गति-नाम्ना अभिधीयते अस्मिन् शास्त्रे। सूत्रादि-व्याख्याने यदि केनापि एतस्य लङ्घनं कृतं स्यात्, तदा तेन व्यासानुमतं व्याख्यानं न कृतम् इत्येव अवगन्तव्यम्। यथा श्रुतिमीमांसारूपां श्रुतिसङ्गतिं विहाय सूत्रार्थे कृते सोऽर्थो व्याससम्मतो न भवति, तथा इमां शास्त्रसङ्गतिं विहाय सूत्रार्थे कृते स अर्थः न व्याससम्मतो भवेत्। तत्र इयं शास्त्रसङ्गतिः अद्वैतसिद्धान्तानुकूल्यं इति दृष्टम्। अतः अद्वैतमतानुकूल्यम् अत्र सर्वसूत्राणां व्याख्याने कर्तव्यमिति।

### मतान्तरेषु तात्पर्यनिर्णायकलिङ्गप्रयोगफलम्

परन्तु बहुषु अद्वैतमत-विरुद्ध-व्याख्यानेषु सत्सु एतन्मतं कथं समीचीनम् इति आशङ्क्यते। भास्कर-रामानुज-मध्व-निम्बार्क-श्रीकण्ठ-श्रीपति-वल्लभ-विज्ञानभिक्षु-बलदेवकृत-भाष्येषु अद्वैतसिद्धान्तो महोत्साहेन श्रुतियुक्तिभिरेव खण्डितो दृश्यते। ते सर्वे परस्परविरुद्ध-मतवादिनः सन्तोऽपि अद्वैतमतखण्डन-विषये अभिन्न-मतावलम्बिनः, अद्वैतमतस्य खण्डनार्हत्वे न तेषां मतानैक्यं दृश्यते। सर्वे हि ते आचार्यपदवीं समारूढाः सम्प्रदाय-प्रवर्तकाश्च, अवतारकल्पाः महात्मानः। सर्वे हि ते स्वस्वमतानाम् श्रुत्यादि-मूलकत्वं प्रदर्शयन्ति च। तेषां मतेऽपि प्रागुक्त-षड्विध तात्पर्य-निर्णायक लिङ्गं तत्तत्सम्प्रदाये अतितिनिपुणतया प्रदर्श्यते एव। तेन सूत्राणाम् अर्थं

द्वैत-द्वैताद्वैत-विशिष्टाद्वैत-मतान्यतम-मतेनैव कर्त्तव्य. इत्येव पर्यवस्यति, यतः अद्वैतवाद-विरोधिनः सर्वे प्रायेण एतत्त्रिविध-मतान्यतम मुख्यतया समाश्रयन्ति। एवं च एतच्छास्त्र-प्रतिपाद्यं न निर्णीतं भवति, तेन शास्त्रसङ्गतिरपि न निर्णीता भवति, सर्वेषा मतवादिना मतानैक्यात्। तथा च व्यास-सम्मत-सूत्रार्थ-निर्णय. पुनः अव्यवस्थितः एव स्यात् ?

## अद्वैतिनां श्रुतिमात्रोपजीवित्वम्

तथापि श्रुतिसङ्गति-निर्णयावसरे अस्माभिः दृष्टम्- अद्वैतमत-विरोधिनः सर्वे न श्रुति-मात्रोपजीविनः इति, यतः तेषा मते स्मृतिरूप-पुराणादि-शास्त्राणा तथा योगि-प्रत्यक्षादीना लौकिक-प्रमाणानामपि अलौकिक-विषयेऽपि श्रुतिवत् प्रामाण्यं मन्यते। केषाञ्चित् मतेन शैव-वैष्णवाना तामिलभाषया रचिता द्राविडवेदा. अपि वेदवत् प्रमाणं भवन्ति। तथैव गुरुमुखी-बङ्गाद्यपर-भाषारचित-पौरुषेय-ग्रन्थादयोऽपि बहूना मतेन वेदवत् प्रामाण्यं लभन्ते। अद्वैतिनस्तु अलौकिकविषये श्रुतिप्रमाणमेव समाश्रयन्ति। सूत्रकृद् भगवद्-व्यासोऽपि अत्र श्रुति-मीमासा-मुखेनैव तत्त्वोपदेशाय प्रवृत्तः, तेन सोऽपि श्रुति-प्रामाण्य-प्राधान्यवादी। "श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी" इति वचनात् स्मृतीहासपुराणादीना न श्रुतिवत् प्रामाण्यं भवति। अतः अद्वैतमतमेव श्रुतिसम्मतं भवितुम् उचितम्। तथा सति श्रुतिमात्रोपजीवि-शंकराचार्यस्य भगवतः मतमेव यथा व्याससम्मतं, न तथा अन्येषामिति कल्पयितुं शक्यते। परवर्त्तिकाले तु निम्बार्क-श्रीपत्यादयो बहव. आचार्याः अद्वैतमतवादिनः अनुसृत्य स्वस्वमताना श्रुतिमात्रोपजीवित्वं प्रदर्शयितुं सन्नद्धा दृश्यन्ते। तेषा याथात्म्यं सुधीभिर्विभाव्यम्।

## सूत्राक्षरत अद्वैतमतस्य व्याससम्मतत्वम्

अत्रापि पुनः अद्वैतमतस्यैव व्याससम्मतत्वे सम्भावनाधिक्यं दृश्यते, यतः उपक्रमोप-सहारादि-लिङ्गानुसरणम् अद्वैतवादे एतद्ग्रन्थस्य आद्यन्त-सूत्राक्षरार्थतो यथा यथा सुष्ठु भवेत्, तथा च चतु.सूत्री-भागेनापि तत्तत्सूत्राणा स्पष्टार्थो यथा समर्थितो भवेत्, न तथा द्वैतादि-मतवादे सम्भवति इत्येव अस्माभि. अवकल्प्यते।

तत्रायं हेतु तेषा मते ईश्वरोपासनस्य फल तदनुग्रहरूपं तस्य कृपारूप वा। तादृशानुग्रहस्यैव तेषा मतेन अनावृत्ति-कारणत्वं मन्यते। तेन सूत्राक्षर-लब्धं यद् ब्रह्मज्ञान-फल, तन्न साक्षाद् अनावृत्ति-रूपम्, ईश्वरकृपोपासनयोश्च अवान्तरकारणत्वात्, ताभ्यामेव तयो. व्यवहितत्वाच्च। सूत्राक्षरतो ब्रह्मज्ञान-फलं साक्षाद् अनावृत्तिरित्येव लभ्यते। अतः सूत्राक्षरतो य. स्पष्ट. अर्थ उपलभ्यते, तेन द्वैतादि-मत-वादिना मत न समर्थित स्यात् इत्येव प्रतिभाति। आद्यं सूत्रं यद् "अथातो ब्रह्मजिज्ञासा", अन्त्य सूत्र यद् "अनावृत्ति. शब्दात्", द्वितीय सूत्र यज् "जन्माद्यस्य यत.", तृतीयं सूत्रं यत् "तत् तु समन्वयात्" इति, तेषाम् अक्षरत' एव ब्रह्मज्ञानात् मुक्ति. इत्येव अवगम्यते, नान्य-ज्ञानात्, न वा अन्यसाधनात्।

तत्र यदि ईश्वरकृपोपासनादीनां च द्वारत्वम् अवान्तर-साधकत्वं वा भगवद्-व्यासाभिप्रेतम् आसीत्, तदा तथैव किं न तेन सूचितम्? तथैव शिव-विष्णु-शक्ति-प्रभृतीनां ज्ञानादिना उपासनादिना वा मुक्ति भवेद्—इत्येव यदि भगवद्-व्यासस्य वक्तव्यम् आसीत्, तदा तथैव कथं न सूचितं तेन? कथं "ब्रह्मजिज्ञासा" इत्येव पदं गृहीतम्? विष्णूपासनं, विष्णुजिज्ञासा, शिवोपासनं, शिवजिज्ञासा—इत्यादिपदं कथं न गृहीतम्? इत्यत एतेषां मतवादिनां मतं न व्यासानुमोदितम्—इत्येव अनुमीयते। ततश्च ईश्वरकृपा-जन्या मुक्तिरिति अङ्गीकारे मुक्ते जन्यत्वं सिध्यति। जन्य-भाववस्तुनो नाशत्वम् अनित्यत्वं च प्रसिद्धमेव। तेन च एतच्छास्त्र प्रतिपाद्य-विषय अद्वैतवादानुकूल, न तु द्वैताद्यपर-मत-वादानुगुण—इत्येव पर्यवस्यति।

### व्यासमतस्य अद्वैतपरत्वम्

प्रकारान्तरेणापि एतज् ज्ञातु शक्यते। तथा हि—प्रायेण वेदान्तमत-विरोधिन सर्वे सूत्रकारा प्राचीन-भाष्यकाराश्च वेदान्त-मत-खण्डनाय अद्वैतमतमेव खण्डितवन्त— इत्येव व्यास-तात्पर्य-निर्णय ग्रन्थे प्रदर्शित श्रीमता अप्पयदीक्षितेन। एतेनापि एतद् वक्तु शक्यते—यत् प्राचीनै ऋषिभिश्च वेदान्तमत खण्डेन अद्वैतमतमेव बुबुधिरे।

### शाण्डिल्यसूत्रेण व्यासस्य अद्वैतपरत्वम्

अन्यच, ब्रह्मसूत्र-प्रणेता बादरायणो व्यासो हि अद्वैतवादी आसीत्—इत्यत्र शाण्डिल्य-कृत-भक्तिसूत्रमपि प्रमाणम्। तत्र "आत्मैकपरां बादरायण" ( ३० श सूत्रम् ) इति सूत्रेण बादरायण-मतस्य अद्वैतत्वेन उक्तत्वात्। अतो वैयासिको ब्रह्मसूत्रग्रन्थ अद्वैतवादपर— इत्येव निश्चीयते। एवं च बौद्ध-जैनादीनां ग्रन्थतोऽपि "वेदान्तमत"मित्यनेन अद्वैतमतमेव उक्तं भवति—इत्यपि प्रदर्शयितुं शक्यते। तथा सति अध्याय-पादाधिकरण-सूत्रादीनां व्याख्याने अद्वैतमतमेव समाश्रयणीयं, नान्यत् किमपि। एतदेव अगत्या कल्पनीयम्।

### द्वैताद्विव्याख्यानस्य उपयोगित्वम्

यत् तु मतान्तरेण व्याख्यानं कृत भास्कराद्याचार्यवर्यवृन्दे, तत् तु तत्तन्मतानुसारिणाम् उपासकानां कृते उपयोगि। तत्तन्मतं श्रुति-तात्पर्य-विरुद्धमपि न दोषाय भवति, यतो भक्तानां भ्रम-प्रमादादिकं स्वयं भगवानेव वारयति, "अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुच" इति भगवद्-वचनात्। चित्तशुद्ध्यर्थम् उपासनायां प्रयोजनम्, तदुत्ते ज्ञानं न अपरोक्षतया प्रकाशते। "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वत", एतद्-भगवद्-वचनमपि तत्र प्रमाणम्। अतो मतान्तरेण सूत्रव्याख्यानम् अद्वैतिनां दृष्टौ न दोषाय, प्रत्युत सम्यगुपकारायैव, यदि भगवच्छरणं तत्र समाप्तं स्यात्। निर्णयोऽयम् अस्माक यदि केषाञ्चन अरोचक स्यात्, तदा तेषां कृते एतन्निवेदनम् अस्माक यद् व्यासमत-निर्णयाय एतादृशी चेष्टा यदि केनापि अपर-सम्प्रदायेन कृता स्यात्, यदा सा सत्य-निर्णयाय अनुगुणा भविष्यतीति

मन्यामहे। यादृशः पन्था अस्माभिरत्र समाश्रितः संस्कारवशेन किल, स यदि अन्येषां स्वस्वमत-प्रकटनाय नूनं अनुसृतो भवेत्, तदा सत्यानुसन्धित्सूनाम् अनेन महान् उपकारो भविष्यति, अस्माकमपि श्रमः सफलः भविष्यति।

### अध्यायपादसङ्गतिद्वयमपि कौशलान्तरम्

एवं च ग्रन्थोद्देश्य-निर्णयद्वारा या श्रुतिसङ्गतिः समुपलब्धा, तथैव ग्रन्थप्रतिपाद्याव-धारणेन या च शास्त्रसङ्गतिः समासादिता, ताभ्यामेव सूत्रादि-व्याख्याने नियन्त्रिते सति व्यास-मतानुसारि-सूत्रार्थ-निर्णय-सम्भावनायाम् एतत् सङ्गति-द्वयम्, एतद्ग्रन्थ-रचना-कौशल-मेकं सूत्रकृद्-भगवद्-बादरायणस्य इति ज्ञायते।

परन्तु एतत्-कौशल-द्वयेनापि एतद्-ग्रन्थान्तर्गतसूत्र-व्याख्यानं न सम्पूर्णतया नियन्त्रयितुं शक्यते, अध्याय-पादाना प्रतिपाद्य-भेदात्। श्रुति-शास्त्र-सङ्गतिद्वयम् अनुसृत्यापि अध्याय-पाद-प्रतिपाद्य-विषय-भेदेन तत्तत्-सङ्गति-बलात् सूत्रार्थः खलु अन्यथा नेतुं शक्यते। यथा साधना-ध्याये फलाध्याये वा यदुक्तं, तेन यत्र जीव-जगद्-ब्रह्म-विषयक-तत्त्वनिर्णयः कथञ्चिदपि सम्भाव्यते, तत्र स निर्णयो न मुख्यः, स तु तत्त्व-निर्णायक-प्रथम-द्वितीयाध्यायाधीनः एव भवितुं युक्तः, अतो गौणः एव स निर्णयः, तेन न प्रथम-द्वितीयाध्याययोः सिद्धान्तौ न अन्यथा करणीयौ। तथैव प्रथम-द्वितीयाध्याययोः साधन-फलविषयकं न किमपि अनुसन्धेयम्। अतः सूत्रार्थाना सम्यग् अवधारणार्थम् अध्याय-प्रतिपाद्य-रूपा अध्याय-सङ्गतिः, तथा पाद-प्रतिपाद्यरूपा पादसङ्गतिः निर्णेया।

### सूत्रप्रकृतिप्रभृतिद्वारा तन्निरूपणप्रस्ताव

परन्तु एतदर्थं न किमपि इङ्गितं कृतं सूत्रकारेण। अध्याय-पादादयः कुत्र आरब्धाः, कुत्र वा समाप्ताः—इति गुरूपदेश प्रवाद वा विना न ज्ञातुं शक्यते; अध्याय-पादादीना नाम-निर्देशादिकं प्रतिपाद्य-वर्णनं वा दूरे आस्ताम्। अत एव एतदर्थं सूत्राणा प्रकृत्यनुशीलन, तथा पूर्ववत्-तात्पर्य-निर्णायक-लिङ्ग-साहाय्यमपि आश्रयणीयम्। किन्तु तदपि न स्वल्प-श्रमसाध्यम्, अतस्तेषा षण्णा लिङ्गाना मध्ये प्रथमं यद् उपक्रमोपसंहाराख्यं मुख्यं लिङ्गं, तथा सूत्राणा यत् पदविन्यासादिकं तदेवात्र आलोचनीयम्। एतेन एव अत्र अध्यायारम्भः तथा अध्याय-समाप्तिश्च निर्णेतुं शक्यते इति वयम् आशास्महे।

### अध्यायारम्भनिर्णय

अनेन पथा अनुसन्दधद्भिः अस्माभिः प्रथमं दृश्यते अत्र ग्रन्थमध्ये चत्वारि सूत्राणि द्विरुक्त-पदानीति, यथा

"एतेन सर्वे व्याख्याता व्याख्याता।"—१।४।२८

"वैशेष्यात्तु तद्वादस्तद्वाद॥" २।४।२२

"एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ।" ३।४।५२
"अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥" ४।४।२२

अत्र प्रथमे सूत्रे सूत्रान्तर्गतस्य "व्याख्याता" इति पदस्य पुनरुक्तिः दृश्यते। द्वितीयसूत्रे "तद्वाद" इति सूत्रान्तर्गत-पदस्य द्विरुक्तिः कृता । तृतीयसूत्रे "तदवस्थावधृते" इति सूत्रान्तर्गतपदस्य द्विरुक्तिः साधिता, चतुर्थसूत्रे तु "अनावृत्तिः शब्दात्" इति समग्र-सूत्रस्य पुनर्वचनं दृश्यते । एतादृशं द्विर्वचनं ५५५-सूत्रमध्येषु एतदन्यत्रस्थलेषु कुत्रापि न कृतम् । प्राचीनतमत्वेन उपलभ्यमानं शाङ्करभाष्यम् आरभ्य सर्वेषु भाष्येषु एतत्-सूत्रचतुष्टयेनैव चतुर्णाम् अध्यायानां समाप्तिः दृश्यते। तेन सूत्रपद-द्विरुक्ति-प्रकरणम् अध्यायसमाप्तिसूचकं सर्वेषां भाष्यकाराणां मतेन, तथा च सूत्रकृन्मतेऽपि—इति कल्पयितुं शक्यते । एवं च समग्रसूत्रस्य द्विर्वचनं ग्रन्थ-समाप्ति-सूचकम्, सर्वेषां मतेन । यतः अतःपरं न सूत्रमेकं केनापि अधिकं गृहीतं दृश्यते । अतो ग्रन्थकृन्मतेऽपि अत्रैव ग्रन्थसमाप्तिः कल्पनीया । तेन "एतेन सर्वे व्याख्याता व्याख्याताः" इति सूत्रेण प्रथमाध्यायस्य समाप्तिः । अतः तत्परवर्त्तिसूत्रेण, यथा—'स्मृत्यनवकाश' इत्यादिसूत्रेण द्वितीयाध्यायारम्भ, तथैव 'वैगुण्यात्तु तद्वादस्तद्वाद', अत्र 'तद्वाद' इतिपदस्य द्विरुक्तत्वाद् एतेन द्वितीयाध्यायस्य समाप्तिः, तत्परवर्त्तिना "तदन्तर-प्रतिपत्तौ" इत्यादिसूत्रेण तृतीयाध्यायारम्भ, ततश्च "एवं मुक्तिफलानियमस्तदवस्थावधृते" इति सूत्रेण तृतीयाध्याय-समाप्तिः, अत्र "तदवस्थावधृते" इति पदस्य द्विरुक्तत्वात्, तत्परवर्त्तिना 'आवृत्तिरसकृत्' इत्यादिसूत्रेण चतुर्थाध्यायारम्भ, ततश्च "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" इति सूत्रेण ग्रन्थसमाप्तिः, अत्र समग्रसूत्रस्य द्विरुक्तत्वात् । एतत् तु ग्रन्थरचनाशैलीसमालोचन-फलम् । तेन एतद्-ग्रन्थः चतुरध्यायात्मकः—इति ग्रन्थमध्यतः अवगम्यते ।

### प्रथमाध्यायप्रतिपाद्यनिर्णयः

इदानीं द्रष्टव्यं प्रत्यध्यायं के वै प्रतिपाद्य-विषयाः ? प्रागेव उक्तं—युक्त्यनुसरणे कृते एतेषाम् अध्यायानां नाम "समन्वयाविरोध-साधन-फलानि" इति भवितुं युक्तम् इति । अधुना द्रष्टव्यम्, एतद्-ग्रन्थावलम्बनेन कथम् एतद् अवगम्यते ? सूत्राक्षरतः एतद् अवगम्यते न वा ?

तत्रादौ सूत्रसाहाय्येन प्रथमाध्यायस्य प्रतिपाद्यं निरूपणीयम् । एतदर्थं नान्यः कोऽपि उपायो वर्त्तते अस्माकं, प्रागुक्त-तात्पर्य-निर्णायक लिङ्गं विना। तथा सति तेषां षण्णां मध्ये मुख्यं यद् उपक्रमोपसंहाराख्यं लिङ्गं तदेवात्र समाश्रयणीयम्। यतः अन्येषाम् आलोचने ग्रन्थ-गौरवम् अनिवार्यं भवेत्, ततश्च तानि लिङ्गानि समग्र-सूत्रालोचनाधीनानि । समग्र-सूत्रालोचनं तु नात्र सम्भाव्यते, प्रबन्धस्यास्य उपोद्घात-रूपत्वात् । अतस्तेनैव मुख्यलिङ्गेन एतत् प्रथमाध्यायस्य प्रतिपाद्य-निर्णयः क्रियते ।

तत्र तावद् एतत्-प्रथमाध्यायस्य प्रथमं सूत्रम् "अथातो ब्रह्मजिज्ञासा।" प्रथमत्वाद् अप्रमेय

उपक्रमः । ततः प्रथमाध्यायस्य अन्तिमं सूत्रं तु "एतेन सर्वे व्याख्याता व्याख्याताः" इति । अन्तिमत्वाद् अयमेव उपसंहारः । एवञ्च प्रथमाध्यायस्य अवशिष्टसूत्राणाम् एतत्-सूत्रद्वयान्तः-पातित्वात् तेषाम् अर्था एतत्-सूत्र-द्वयानुकूला भवन्त्येव । तत्र "अथातो ब्रह्मजिज्ञासा" इति सूत्रेण यथोक्ताधिकारिणां वेदान्त-वाक्यावलम्बनेन ब्रह्मविचारः कर्त्तव्यः इति उक्त्वा परवर्त्ति-सूत्रसमूहैः तमेव विचारं समाप्य उपसंहार-रूपेण उच्यते "एतेन सर्वे व्याख्याता व्याख्याताः" इति । व्याख्यानञ्च संशयादि-निरसन-रूपमिति प्रसिद्धम् । तेन अधिकारिणां ब्रह्मविषयक-वेदान्तवाक्येषु वाक्यार्थ-गोचरा ये ब्रह्मविषयकाः संशयादयः सम्भवन्ति, तेषां निरसनमेव प्रथमाध्यायस्य सर्वैः सूत्रैः कृतमिति सिध्यति । अर्थाद् येषां वाक्यानां ब्रह्मपरत्वं सन्दिह्यते, तेषां ब्रह्मपरत्व-स्थापनमेव तन्निरसनं भवति । तेन एतादृश-संशय-निरसनं ब्रह्मविषयक-वेदान्त-वाक्यानां किञ्चिदनुगतार्थ-प्रदर्शनपरम् । एतदेव अनुगतार्थ-प्रदर्शनं समन्वयापरनामकम् । सम्यक् तात्पर्य-वत्त्वेन वेदान्तानां ब्रह्मण्यन्वयात् सम्बन्धाद् अस्य अध्यायस्य समन्वय-नाम सर्वथा सङ्गच्छते एव । अयमेव अर्थः प्रथमाध्यायस्य तदाद्यन्त-सूत्रद्वयेन लभ्यते । तेन आद्यन्त-सूत्ररूपोपक्रमोपसंहाराख्य-लिङ्गेन एतत्प्रथमाध्यायस्य "समन्वयाध्यायः" इति नाम प्रदत्तं स्यात् ।

### समन्वयनामग्रहणे हेतु

ननु कथं "समन्वय." इति नाम सर्वै. भाष्यकारैः गृहीतम् ? किम् एतदर्थकः अन्यः शब्दो नासीत् ? अतः सर्व-साधारण्येन एतन्नाम-ग्रहणं प्रति किञ्चित् कारणमेव विद्यते खलु । तदेतद् यस्मिन् कस्मिन् शब्दे अपि गृहीते कथम् एतच्छब्दो गृहीतः स्याद् इति प्रत्यवस्थातुं शक्यते, अतः समानार्थक-शब्दान्तर-ग्रहण-प्रसङ्ग. अत्र निरर्थकः । अन्यत् कारणं यद् अस्ति तत् तु समन्वयसूत्रे समन्वय-पद-ग्रहणम् । ग्रन्थस्यास्य प्रयोजनं श्रुति-मीमांसारूपम्, एतत्तु प्रागेव उक्तम् । समन्वय-कार्यञ्च तादृश-श्रुति-मीमांसान्तर्गतमेव । तेन ग्रन्थ-रचनोद्देश्य-मध्ये यदेव मुख्यतया प्रयोजनम्, आदावेव तस्य आलोचनं सङ्गतमेव । ग्रन्थमध्ये ग्रन्थान्ते वा ग्रन्थस्य मुख्य-प्रयोजन-वर्णनं न स्वाभाविकं सङ्गतञ्च । अत आदावेव समन्वयाध्यायस्य आरम्भो युक्त एवेति प्रतिभाति । तदेवात्र अनुष्ठितम् । ततश्च अत्र अपरमेकं कारणं वर्त्तते ; प्रथमसूत्रेण ब्रह्मजिज्ञासायाः कर्त्तव्यत्व प्रतिज्ञाय, द्वितीयसूत्रेण तद्ब्रह्मलक्षणं विज्ञाप्य, तृतीयेण सूत्रेण तस्य शास्त्र-प्रमाणकत्वम् उपदिश्य कथं ब्रह्मण शास्त्र-मात्र-गम्यत्वं, कर्मोपासनादीनां तथात्वेऽपि कथं न तत्र शास्त्रस्य तात्पर्यम् इत्येवं प्रश्ने समुदिते चतुर्थेन सूत्रेण तस्य समाधानं कृतं ब्रह्मण्येव समन्वय-दर्शनाद् इत्यनेन । कर्मोपासनादिषु तादृश-समन्वयो न दृश्यते । अतो ग्रन्थस्य अस्य तादृश-श्रुति-मीमांसारूप-समन्वयः एव मुख्यं प्रयोजनं भवति । ततः तस्यैव प्रदर्शनं ग्रन्थस्य प्रारम्भे एव करणीयम् । अयमेव अतीव स्वाभाविकः पन्थाः । समग्र-ग्रन्थस्य सारभूतेन चतु.सूत्री-भागेन एतादृश-समन्वयस्य उक्तत्वात्, तदेव चतु.सूत्री-भागानुसरणेन

ग्रन्थस्य प्रथमाध्याय एव "समन्वयाध्याय" इति अभिधातुं युक्तम्। तदेव सर्वैं भाष्यकारैः कृतम्। एतदेव एतद्-ग्रन्थान्तर्गत-प्रथमाध्यायस्य समन्वयाध्यायेति-नामकरण-रहस्यम्—इति प्रतीयते। एवञ्च अस्मिन् प्रथमाध्याये यावन्ति सूत्राणि ते सर्वैं समन्वयार्थपरं भवितव्यम्। अन्यथा सूत्राणाम् अतिप्रसङ्ग-दोषापत्तिः स्यात्। तेन यदि केनापि एतन्नियम-लङ्घनं कृतं स्याद् एतदध्यायान्तर्गतस्य एकस्यापि सूत्रस्य अपराध्यायार्थ-परत्वेन, अविरोध-साधन-फलार्थपरत्वेन व्याख्यानं कृतं स्यात्, तदा तद्व्याख्यानं न एतदध्यायार्थानुगतं भवेत्। तथैव तत्र सूत्रकृदसम्मतमपि। यथा द्वितीयसूत्रेण ब्रह्मलक्षणे वक्तव्ये सति, यदि तदर्थं सगुणब्रह्मपरत्वेन कृतं स्यात्, तदा सोऽर्थो न साक्षात् सूत्राक्षरार्थो भवेद्, सगुणत्व-विशेषणस्य सूत्रे अनिर्दिष्टत्वात्। तथैव यदि तदर्थतो जगत् सत्यत्वं येनापि इष्येत, सत्यरूपं सत्कार्य-कारण-नियमात्, तदा सोऽपि अर्थः सूत्राक्षरार्थाद् हीयेत। सोऽर्थो न समन्वया यथानुगतो व्यासानुमतो वापि भवेत्। एतदेव कौशलम् अत्र अध्याय-सङ्गतिनाम्ना अभिधीयते। तथा च इयम् अध्याय-सङ्गतिः चतुर्षु अध्यायेषु चतुर्धा भवति यथा द्वितीयाध्याये अविरोधसङ्गतिः, तृतीयाध्याये साधनसङ्गतिः, चतुर्थाध्याये फलसङ्गतिरिति।

### ब्रह्मणो निर्गुणत्व शङ्कानिरासः

अत्रेदं प्रष्टव्यं—प्राक् चतुःसूत्रीव्याख्यान-काले द्वितीय-सूत्रेण ब्रह्मलक्षणे वक्तव्येऽपि सूत्रार्थस्तु निर्गुण-ब्रह्मपरत्वेन जगन्मिथ्यात्व-बोधकत्वेनापि कृतः। अत्र सूत्राक्षरानुरोधात् सूत्र-लक्षित-ब्रह्मण सगुणत्वादि-विशेषणं निषिध्यते, तत् कथं तथैव निर्गुणत्वादि-विशेषणमपि न प्रतिषिद्धं भवेत्? किमेतत् स्वपक्षपातित्वम्?

एतस्य एतदेव उत्तरं—तत्र निर्गुणत्वादि-विशेषणमपि न साक्षात् सूत्राक्षरतो लभ्यम्, किन्तु प्रासङ्गिकम् आर्थिकं वा। अत्रापि सगुणत्वादिकं तथैव। तथापि अनयोः पक्षयोर्मध्ये विशेषोऽस्ति। ब्रह्मणो निर्गुणत्वादिकं तात्पर्यार्थानुकूलं, तेन आवश्यकं च; सगुणत्वादिकं तु न तथा, प्रासङ्गिकार्थद्वयमध्ये युक्ति-सहकृतस्य प्राबल्याद्, आवश्यकत्वाच्च इत्ययं विशेषः। अत एतेन ब्रह्मणो निर्गुणत्वं सिद्धमेव।

### सङ्गतीनां व्याप्य-व्यापकता-निरूपणम्

अस्तु तावद्, प्रकृतम् अनुसराम साम्प्रतम्। ततश्च अनया समन्वय-नामाध्याय सङ्गत्या एतदध्यायान्तर्गतानि यानि अधिकरणानि सूत्राणि च, तानि सर्वाणि ब्रह्मबोधक-श्रुत्यर्थ-मीमांसा-पराणीति कृत्वा व्याख्येयानि। तेन च—शास्त्र-सङ्गतिः यथा श्रुति-सङ्गति-व्याप्या, तथैव इयम् अध्याय-सङ्गतिः शास्त्र-सङ्गति व्याप्या—इत्येव ज्ञातव्यम्। सर्वे भाष्यकारा एतद्विषये ऐकमत्यं भजन्ति। तेन श्रुत्युक्ताद्वैत-ब्रह्मसमन्वय एव प्रथमाध्याय प्रतिपाद्य-विषयः, सा एव प्रथमाध्यायसङ्गतिरिति।

### द्वितीयाध्यायप्रतिपाद्यनिर्णय

अधुना सूत्राण्येव अवलम्ब्य द्वितीयाध्याय-प्रतिपाद्य-विषयो निर्णेयः, स एव अत्र द्वितीयाध्याय-सङ्गतिः भविष्यति। दृश्यते च अध्यायोऽयं सर्वैः भाष्यकारैः अविरोधाध्याय-नाम्ना आख्यायते। परन्तु एतदर्थं नैकमपि सूत्रं रचितं सूत्रकृद्भगवता। तत् कथं ज्ञातव्यम् अस्य अविरोधाध्याय-नामकत्वम्। युक्त्या यथा एतत् सिध्यति, तत् तु प्रागेव उक्तम्। इदानीं सूत्राक्षरानुसरणेन एतत् आविष्करणीयम्। एतदर्थम् अत्रापि अस्माकं तात्पर्य-निर्णायक-लिङ्गमेव शरणम्। तत्र आद्यं यद् उपक्रमोपसंहाराख्यं लिङ्गं, तदेव अवलम्बनीयं, नान्यत्, ग्रन्थ-विस्तरभयात्। तथा सति एतद्-द्वितीयाध्यायस्य उपक्रम-स्थानीयं यत् प्रथमं सूत्रं तत्

"स्मृत्यनवकाशदोषप्रसङ्गादिति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्" २।१।१ ;

यत्तु अन्तिमं सूत्रं तत्

"वैशेष्यात् तु तद्वादस्तद्वादः" २।४।२२ इति।

तत्र प्रथमसूत्रेण पूर्वाध्यायार्थ-विषये श्रुतिस्मृत्योः विरोधे सम्भाविते स्मृतेः निरवकाशत्व-वारणाय श्रुत्यर्थस्यैव अन्यथात्वं करणीयम्, स्मृतेः श्रुतिमूलकत्वात् स्मृतिकर्तुश्च ऋषेः सर्वज्ञत्वाद् इति। एवं पूर्वपक्षे व्यवस्थापिते सति निवारयति सूत्रकारः तत्र कर्तव्यम्, "अन्यस्मृतेरपि अनवकाशत्व-प्रसङ्गाद्" इति, श्रुत्यर्थ एव तत्रापि भजनीयः। इत्युक्त्वा तत्र श्रुतिस्मृत्योः विरोध-परिहारः कृतः। तथा च अनेन अविरोधोऽपि प्रदर्शितः। स्मृतिद्वय-विरोध-प्रदर्शनेन श्रुत्यर्थ-विषयकाविरोधे प्रदर्शिते स्मृत्या तदनुकूलतर्केण च अविरोधः प्रदर्शितः स्यात्। तेन अविरोध-प्रदर्शनमेव अत्र प्रथमसूत्रेण उपक्रान्तं भवति। तथैव एतद-ध्यायस्य अन्तिमसूत्रेण स एव अविरोधः पुनरुपदिष्टः स्यात्। "एतेन सर्वे व्याख्याता व्याख्याताः" इत्यनेन प्रथमाध्याय-सिद्धान्ते स्मृति-तर्काभ्यां यावन्तः संशयादयः पूर्वपक्षादयश्च उद्भावयितुं शक्यन्ते, तेषां सर्वेषां निरसन-रूपं व्याख्यानं कृतमिति उक्तं स्यात्। एतेन समग्रे अध्याये अविरोध एव प्रदर्शित इत्येव अवगम्यते। यथा प्रथमाध्याये तृतीयसूत्रस्य "शास्त्र"-पदात् पञ्चमसूत्रस्य "अशब्द"-पदात् समन्वय-प्रदर्शनार्थं श्रुतिप्रधानः तर्कः एव अवलम्बितः, तथा अत्रापि द्वितीयाध्याये प्रथमसूत्रस्य "स्मृति"-पदात् पुनः "दोषप्रसङ्गाद्" इति पदाच्च, तथा अन्तिमसूत्रस्य "व्याख्याताः"-पदात् स्मृति-गोचर-तर्क-प्राधान्यमेव अवलम्बितम् इति अनुमीयते। स्मृतेः अत्र श्रुत्यर्थानुभव-जन्य-सस्काराधीनत्वेन, दोषप्रसङ्गस्य तद्विषयक-दोषादोष-विचार-सापेक्षत्वेन, व्याख्यानस्य दोषवारणाङ्गत्वेन च तर्कस्यैव प्राधान्यात्। तत्र प्रथमाध्याये श्रुतीनाम् एक-वाक्यता-साधनाय तर्केण पूर्वपक्षादीनाम् अश्रौतत्वप्रदर्शनमेव कौशलम् आसीत्, श्रुतेः अपौरुषेयत्वात्, तर्कस्य तदधीनत्वाच्च। तेन तत्र श्रुतीनां समन्वय एव मुख्य कार्यम् अभवत्। अत्र द्वितीयाध्याये पूर्वपक्षोद्भावित-पूर्वोक्त-श्रुति-समन्वय-विरोधि-स्मृत्यनुसारि-

शङ्कानां परिहाराय तर्केण श्रुतिभिन्न-प्रमाणानां दोषप्रदर्शनमेव कौशलम् अवलम्बितं, स्मृतेः पौरुषेयत्वात्, पौरुषेयविषये तर्कस्य प्राधान्याच्च। तेन अत्र श्रुतिसमन्विते अर्थे विरोधाभाव-रूपाविरोध-प्रदर्शनमेव यन्मुख्यं कार्यं, तत् तर्केणैव सिद्धं भवति। अत अयम् अविरोध, तर्क-प्राधान्यात् श्रुतिसिद्ध-विषये परकृत-खण्डनस्य मण्डनरूप, परपक्ष-खण्डनरूपश्च। एतत् सर्वं सूत्रीय "स्मृति"-"दोषप्रसङ्ग" "व्याख्यात"-इत्यादिशब्देभ्यो लभ्यते, एतच्छब्दत्रयेण तर्कस्यैव प्राधान्यस्मरणात्। अत द्वितीयाध्यायस्य अविरोधनाम सुसङ्गतमेव।

### द्वितीयाध्यायस्य अविरोधपरत्वे शङ्कानिरास

ननु प्रथमाध्याये श्रुति-समन्वय-द्वारा स्वपक्ष-स्थापने कृते द्वितीयाध्याये परकृताक्षेप-परिहारार्थं परपक्ष-खण्डने च साधिते कथं द्वितीयाध्याये अविरोध प्रदर्शित? अविरोध-शब्देन उभय-पक्षयो मूलत ऐकमत्यं बुध्यते, अनभिमेतस्य आपातप्रतीयमानस्य अर्थस्य वर्जनीयत्व-प्रदर्शनमेव अविरोध-कार्यम् उच्यते। तत किं तर्कसहायेन परमत-खण्डनमपि अविरोध-शब्देन अभिधीयते? परपक्षखण्डनं नाम किम् एतदध्यायस्य न युक्तं स्यात्?

अत्र अयम् अभिसन्धि—येषु मतेषु किञ्चिदपि श्रुति-मूलकत्वं नास्ति, तेषां खण्डने परमत-खण्डनाख्या सङ्गता, किन्तु येषु मतेषु अंशत श्रुतिमूलकत्वं दृश्यते, स्मर्यते वापि, तेषाम् अश्रौतांश-खण्डन तर्केणापि, न सम्पूर्णं परमत-खण्डनरूप भवति, श्रुति-मूलकत्वाद् अंशत ऐकमत्यस्य सत्त्वाच्च। स्वकपोल-कल्पितत्वात् स्वानुभवमूलकत्वाद् वा अंशत अश्रौतत्वेन अनैकमत्यस्य सत्त्वादपि तन्मत-खण्डनेन तत्र अविरोध-प्रदर्शनमेव कृतं स्यात्। वस्तुतस्तु एतदध्यायान्तर्गत-सांख्य-तर्क-योग-वैशेषिक-बौद्ध-जैन-शैव-पाञ्चरात्र-भागवत-मत-खण्डनम् अंशतो मूलतो वा अश्रौतमत-खण्डनमेव। बौद्ध-जैन-भिन्न-सांख्यादि-मतानां श्रुति-मूलकत्वं प्रसिद्धमेव। बौद्ध-जैनानां श्रुतिमूलकत्व प्रागेव प्रदर्शितम्। यद्यत्र श्रुतिनिन्दापराणां नवीनबौद्ध-जैनानां सम्पूर्णतया श्रुतिबाह्यानां मतं खण्डितं स्यात्, तदा एतस्य परमतखण्डनाभिधानं समुचितम् अभविष्यत्। अत अस्य द्वितीयाध्यायस्य अविरोध इति नाम सङ्गतमेव प्रतिभाति।

### अविरोधनामनिर्देशहेतु

अथात्र यदि आशङ्क्यत—कथम् अविरोध-शब्द एतदर्थे सूत्रव्याख्यातृभि गृहीत स्यात्? किम् एतदर्थक अन्य शब्द न आसीत्? तत्रोच्यते—अस्मिन् द्वितीये अध्याये अविरोध-शब्द एव सूत्रद्वयमध्ये दृश्यते, यथा—

"न च पर्यायादप्यविरोधो विकारादिभ्य" २।२।३५;

"अविरोधश्चन्दनवत्" २।३।२३ इति।

एतेन अध्यायेऽस्मिन् अविरोध साध्यते इति उपक्रमोपसंहारार्थनिर्णायकानि

कल्पयितुं शक्यते । एवं च सूत्रपादानुसारेण अविरोध-नाम एतदध्यायस्य प्रदत्तं स्याद् इत्येवम् अनुमातुं शक्यते ।

### प्रथमाध्यायस्य अविरोधत्वशङ्कानिरासः

अथ यदि उच्येत प्रथमाध्यायेऽपि अविरोध-शब्दः चतुर्षु सूत्रेषु दृश्यते, तत् कथं प्रथमाध्याय. तन्नाम्ना नाभिधीयते ? तानि च सूत्राणि यथा

"उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्" १।१।२७

"साक्षादप्यविरोधं जैमिनिः" १।१।२८

"समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च" १।३।३०

"कल्पनोपदेशाच्च मध्वादिवदविरोध" १।४।१०

एतेषु सर्वेषु सूत्रेषु अविरोधशब्दो दृश्यते, अतः प्रथमाध्यायोऽपि अविरोधाध्याय-नाम्ना अभिधातुं युज्यते एव ?

सत्यम्, तथापि कश्चिद् विशेषः तत्र दृश्यते द्वितीयाध्याये कुत्रापि समन्वय-शब्दो नोपलभ्यते । एवं च प्रथमाध्याये समन्वयः अविरोधश्चेति द्वौ शब्दौ विद्येते, किन्तु द्वितीयाध्याये केवलम् अविरोधशब्द एव उपलभ्यते । संख्याधिक्येन जात्याधिक्यं न वार्यते । अतो द्वितीयाध्यायस्य अविरोधनाम सङ्गतमेव, न तु तत् प्रथमाध्यायस्य ।

### समन्वयाविरोधशब्दार्थयो विशेष.

वस्तुतस्तु समन्वयाविरोध-शब्दद्वय-मध्ये प्रभेदः स्वल्पः एव । कियदंशेन एतच्छब्द-द्वयं समानार्थकम् । तथापि समन्वयमध्ये विरोधः केवलं व्यज्यते, तत्र विरोध-विषये सशयमात्रं वर्त्तते, यथार्थतस्तु संशयस्तत्र न विद्यते अविरोधमध्ये तु विरोधः सत्यवत् प्रतीयते, तत्र विरोधज्ञान निश्चयरूपम् । ततश्च समन्वयः तावद् वाक्यार्थ-सापेक्षः, अविरोधस्तु युक्तिमेव प्राधान्येन अपेक्षते । तेन तत्र स्वपक्ष-स्थापन परपक्ष-खण्डनञ्चेति उभयमेव वर्त्तते । समन्वये स्वपक्ष-स्थापनार्थं श्रुतिरेव प्रधानतया समाश्रीयते, न तु युक्तिः । अत. प्रथमाध्यायस्य समन्वयनाम, द्वितीयाध्यायस्य अविरोधनाम चेति एतदुभयं सङ्गतमेव प्रतिभाति । प्रागेव युक्ति-साहाय्येन एतद्ग्रन्थ-रचना-कौशल-निर्णयावसरे उक्तं यत् किञ्चित् शास्त्रम् अवलम्ब्य मतवाद-वर्णनाय आदौ यः तत्त्वनिर्णय. कर्त्तव्यः स्यात्, तत्र प्रथम तावत् तच्छास्त्र-मध्ये समन्वयप्रदर्शनं कर्त्तव्यम् ; तत. अविरोधप्रदर्शन कार्यम् । एतदेवात्र अध्यायद्वय-मध्ये अनुष्ठितम् । अतोऽस्य प्रथमाध्यायस्य समन्वयनाम, तथा द्वितीयाध्यायस्य अविरोधनाम समुचितमेव । तत एतदेव सूत्रकाराभिमतमपि इति वक्तुं शक्यते ।

अत्र च नैकस्यापि भाष्यकारस्य मतभेदोऽस्ति, सर्व-सम्मतमेव एतस्य अविरोध-नाम । अतोऽस्य द्वितीयाध्यायस्य या सङ्गतिः, सा तु अविरोध-सङ्गतिरेव । तेन एतद्द्वितीया-

ध्यायस्य एकमपि सूत्रम् एताम् अध्याय-सङ्गतिं लङ्घयित्वा न व्याख्येयम्। सर्वेषां सूत्राणां व्याख्याने सर्वत्र अविरोध-प्रदर्शनमेव कर्तव्यं भवेत्। तथैव एतदध्यायस्य न एकमपि सूत्रं समन्वय-साधन-फल-परत्वेन व्याख्येयम्, तेषाम् अन्याध्याय-विषयत्वात्।

एवं च यदि 'स्मृत्यनवकाश'-इत्यादिसूत्रेण, 'एतेन योगः प्रत्युक्तः' इति सूत्रेण वा, कोऽपि सांख्य-योगयोः अविरुद्धांशं लक्ष्यीकृत्य तयोः श्रौतत्वं प्रतिपादयेत्, तदपि न सङ्गतं भवेत्, तेषां पौरुषेयत्वात्। यथा अनृत-वादिना सर्ववाक्येषु मिथ्यात्वे असत्यपि तेषां न एकमपि वाक्यं सद्भिः सत्यत्वेन गृह्यते, यथा वा व्यभिचारात्मक-नरनारीणां सौन्दर्यं विद्या-बुद्धि-बलप्रकर्षादिकं च न बहुमन्यते साधुभिः, यथा वा सोपकरणस्य भोज्यस्य सर्वत्र विष सम्बन्धाभावेऽपि—एकस्मिन्नेव उपकरणे विषशङ्कया सर्वमेव भोज्यं त्याज्यं भवेत्, तद्वत् श्रुत्युक्त-योगविधाम् उपलभ्य सांख्य-योगादीनां विरुद्धांशखण्डने कृतेऽपि तयोः अविरुद्धांशस्य न ग्रहणीयत्वं भवेद्, वेदान्तिनां श्रुत्यननुसारित्वशङ्कया। यथा वा "उत्पत्त्यसम्भवात्" (२।२।४२) इति सूत्रे पाञ्चरात्र-सिद्धान्त-खण्डनम् अकृत्वा स्वपक्षस्थापन-प्रयासः रामानुजाचार्य-भगवतः असङ्गतः स्यात्, तेन च सः अग्रहणीय एव, अविरोध-नाम अध्याय-सङ्गतिम् अनुसृत्यापि परपक्ष-खण्डनरूप-पादसङ्गति-लङ्घनात्, तथा एतद्-द्वितीयाध्यायस्य सर्वाणि सूत्राणि अविरोध-परत्वेन व्याख्येयानि। पाद-सङ्गति भेदात् तत्र यो विशेषः, स तु अग्रे वक्ष्यते।

तृतीयाध्याय-प्रतिपाद्यनिरूपणम्

अतःपरं सूत्रावलम्बनेन तृतीयाध्याय प्रतिपाद्य निर्णयद्वारा तदीयाध्याय-सङ्गति आविष्करणीया। युक्ति-साहाय्येन तथा एतस्य प्रतिपाद्यं 'साधनम्' एव भवितुम् उचितम्, तत्त्व निर्देशानन्तरं तदनुकूल-साधनस्य वक्तव्यत्वात्, तत् तु प्रागेव प्रदर्शितम्। इदानीं द्रष्टव्यम् एतदध्यायस्य साधनाख्यानम् एतदन्तर्गत-सूत्रावलम्बनेन कथं लभ्यते इति। एतदर्थम् अस्माकं पूर्ववदुपक्रमोपसंहाराख्यं लिङ्गमेव शरणम्। तद् यथा अस्य प्रथमं सूत्रम्—

"तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्" ३।१।१,

अन्तिमं सूत्रञ्च—

"एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृते" ३।४।५२

तत्र प्रथमसूत्रेण उच्यते—देहान्तर-प्राप्ति-समये जीवः सूक्ष्मदेहेन सह गच्छति, एतत् श्रुत्यन्तर्गत-प्रश्नोत्तर-दर्शनेन अवगम्यते। उत्तरेण सूत्रेण उच्यते मुक्ति-फलाय न कोऽपि नियमो वर्तते। मुक्तावस्थायाः सर्वश्रुतिषु अवधारणात्। नूनम् एतत् सूत्रद्वयेन अत्र साधनमेव आलोच्यते—एतत् स्पष्टतया अवगन्तुं शक्यते। प्रथमसूत्रेण परलोकगमन-वर्णन-दर्शनेन, तथैव अन्तिमसूत्रेण मुक्तिफल-विषयक-वर्णनदर्शनेन च एतदध्यायस्य "फल"-नाम एव उपयुज्यते, न तु "साधने"त्यभिधानम्। तथापि व्याख्यान-कौशलेन एतस्य

साधनाध्यायाभिधानत्वं युक्तमेव इति प्रतिपादयितुं शक्यते। तत्र प्रथमं तावद् आरम्भसूत्रेण परलोक-गमन-कथावतरणेन भोग्य-भोग-साधनयोः जगज्जीवनयोः अनित्यत्वम् उक्तं भवति। जगज्जीवनयोः अनित्यत्व-चिन्तनेन मनसि वैराग्यमेव उपजायते। एतद्द्वयमेव एतद्-ग्रन्थ-प्रतिपाद्य-ब्रह्म-ज्ञानस्य साधनाय मुख्यत्वेन परिगृह्यते। नित्यानित्य-वस्तु-विवेक-वैराग्याभ्यां विना ब्रह्म-ज्ञानाधिकारो न कस्यापि सम्भवति। चित्त-मलापनोदनाय एनयोः यादृशी उपयोगिता तादृशी नापरस्य कस्यापि। चित्राङ्कनार्थं पटस्य मलापनोदनानन्तरं गुणाधानं मण्डादि-लेपन-रूपं यथैव विहितं, तथैवात्र शम-दमादिकं मुमुक्षुत्वं च ब्रह्म-ज्ञानाय कर्त्तव्यम् इति साधकैः स्वयमेव कल्पयितुं शक्यते। तेन एतत्सूत्रेण ब्रह्म-ज्ञान-साधनमेव उपदिष्टम् इत्येव अवधार्यते। तथैव अन्तिमसूत्रेणापि एष एवार्थः समर्थितो भवतीति दृश्यते। तत्र "अनियमे"ति शब्देन मुक्तिफलस्य साधन-निरपेक्षत्वम् उक्तम्। अभावबुद्धिं प्रति प्रतियोगि-ज्ञानं सप्रयोजनम् इति नियमात्, नियम-शब्द-वाच्य-साधनमेव तत्र लक्षितम्। तेन उपक्रमोपसंहार स्थानीय-प्रागुक्त-सूत्रद्वयस्य आर्थिकार्थावलम्बनेन एतदध्यायस्य "साधनं" नाम उपस्थाप्यते। एतदपि एतदध्यायान्तर्गत-सूत्र-निवहैरपि अनुगृह्यते। तथा हि

"अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः" ३।१।६

इति सूत्रे "इष्टादिकारिणाम्" इति पदात्, तथैव

"कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च" ३।१।८

इति सूत्रे "कृतात्यये" इति पदात्, तथैव

"चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः" ३।१।९

इति सूत्रात् "चरणात्" इति पदात्, तथैव

"सुकृत-दुष्कृते एवेति तु बादरिः" ३।१।११

इति सूत्रे "सुकृत-दुष्कृते" इति पदात्, तथैव

"विद्याकर्मणोरिति तु प्रकृतत्वात्" ३।१।१७

इति सूत्रे "विद्याकर्मणोः" इति पदात्, तथैव

"शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्" ३।४।२७

इति सूत्रे "शमदमादि"-शब्दात्, तथा "अनुष्ठेय"-शब्दाद्, एवं च अपरापर-सूत्राणां बहुभ्यः शब्देभ्यः एतदध्यायस्य साधन-नामकत्वम् अतीव समीचीनमेवेति प्रतिभाति। अस्मिन् विषये सर्वेषां भाष्यकाराणाम् ऐकमत्यमपि वर्त्तते। एवं च एतदेव व्यास-सम्मतम् इत्यपि सिध्यति। तथा सति एतदध्यायस्य सर्वाणि सूत्राणि साधनपरत्वेन व्याख्येयानि। अन्यथा-व्याख्याने इयम् अध्यायसङ्गतिः व्याहन्येत। यथा यदि केनापि एतदध्यायान्तर्गतस्य एकस्यापि सूत्रस्य तत्त्वनिर्देश-परत्वेन साधनफलपरत्वेन वा व्याख्या क्रियेत, तदा तेन अध्याय-सङ्गतिः

अङ्गिता एव स्यात्। यथा "एक आत्मनः शरीरे भावात्" ३।३।५३ इति सूत्राद् यदि कोऽपि आत्मन एकत्वं प्रतिपादयेत्, तदा तद् व्याख्यानम् असङ्गतमेव भविष्यति, अध्याय-सङ्गति-विरोधात्। तथा च इयं साधन-सङ्गतिः समन्वयाविरोध-सङ्गतिवत् श्रुतिसङ्गति-व्याप्य-शास्त्रसङ्गति-व्याप्या। अत्र सर्वे भाष्यकारा एकमतावलम्बिनो भवन्ति। एवं च एतदध्यायस्य साधन-परत्वं सूत्रार्थावलम्बनेन ज्ञायते इति वक्तुं शक्यते।

### चतुर्थाध्याय-प्रतिपाद्यनिरूपणम्

इदानीं चतुर्थाध्याय-प्रतिपाद्य-निर्णयमुखेन तस्य सङ्गतिरपि निरूप्यते। एतद्-ग्रन्थ-रचना-कौशल-निर्णयावसरे श्रुत्यनुसरणेन एतस्य फल-नामकत्वं भणितम्—इति उक्तम्। अधुना एतदध्यायान्तर्गत-सूत्रावलम्बनेन एतस्य तादृशाभिधानं कथं समुचितम्—एतदेवात्र आलोचनीयम्। एतदर्थं पूर्वपूर्वाध्यायेषु यथा कृतम्, तथैव उपक्रमोपसंहाराद्यन्वय-लिङ्गमेवात्र आश्रयणीयम्। एतदनुसारेण द्रष्टव्यं प्रथमं सूत्रम्—

"आवृत्तिरसकृदुपदेशात्" ४।१।१

प्राथम्याद् अस्यैव उपक्रमत्वम्। तथा च अन्तिमसूत्रम्—

"अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्" ४।४।२२

अन्तिमत्वात् अस्यैव उपसंहारत्वं स्वीकार्यम्। तत्र प्रथमसूत्रेण उच्यते—ब्रह्मज्ञान-फल-लाभाय श्रवणादीनाम् असकृद् आवृत्तिः करणीया। तथा अन्तिमसूत्रेण उच्यते—ब्रह्मविदां संसारे पुनरावृत्तिः न भवति। एतदेव श्रुत्या उद्घोषितम्। इदानीम् एतत्सूत्रद्वयस्य अर्थो यदि समाधियते, तदा अस्मिन् अध्याये साधनस्य फल-वर्णनमेव कृतम्—इति अवगम्यते। एतच्च एतद्-ग्रन्थस्य आद्यन्तसूत्रद्वयेनैव ज्ञातम्। तथा च एतस्य फलपरत्वं सर्वभाष्यकार-सम्मतम्। तेन च सूत्रकृद्-भगवद्व्यासाशयगतमपि। एवं च अयं फलाध्याय इति प्रसिद्धम्। ततश्च एतदध्यायस्य फल-सङ्गतिरिति नाम अभिधातुं शक्यते। एवं च सर्वासाम् अध्यायसङ्गतीनां शास्त्रसङ्गति-व्याप्यत्वेन तस्या अपि श्रुतिसङ्गतिव्याप्यत्वेन, श्रुतिवाक्यानां मीमांसा-मुखेन श्रौतब्रह्मज्ञान-फल-वर्णनाय अयम् अध्यायो रचितः—इति अनुमीयते। तेन एतदध्यायस्य चतुर्षु पादेषु यानि अधिकरणानि तदन्तर्गतसूत्राणि च, सर्वाणि फलपरत्वेन व्याख्येयानि। यदि केनापि एतदन्यथा कृतं स्यात्, तेन भ्रान्तेनैव भवितव्यम्। तदुक्तः अर्थश्च कदापि न व्यास-सम्मतो भवितुम् अर्हति। तथापि प्रथम-द्वितीयाध्याय-द्वयेन सूत्रान्तर्गत-पदसाहाय्येन यथा तयोः अध्यायसङ्गतिरपि निर्णीता, तथा नैव एतत्तृतीय-चतुर्थाध्यायद्वये निर्णीयते इत्येव विशेषः अत्र मन्तव्यः।

एतेन एतदपि अनुमीयते, यद्, ग्रन्थस्य अस्य अध्याय-पादादि-नामकरण-रहस्यं साम्प्रदायिकोपदेश-सापेक्षम्। तद् एतदपि पुनः सूत्रकृताम् अपि अभिप्रेतम् आसीदेव।

अन्यथा एकेनैव सूत्रविरचनेन एतत् सर्व तेन विज्ञापयितुं शक्यम्। यत तत् न कृतं, ततः सूत्रकृतामपि अयमेव अभिप्राय आसीद्, यद् ब्रह्मजिज्ञासव सर्वे शिष्यवर्गाश्च सम्प्रदाय-क्रमेण एतद्ब्रह्मसूत्रतात्पर्य शिक्षेरन् इति। सर्वज्ञक्रमेण वेदार्थस्य अप्राप्तौ निष्फलत्वापत्तिः सम्भाव्यते इति एवम्प्रकारं सूत्रकृताम् अभिप्रायं विदित्वैव सर्वे भाष्यकाराः स्वकृत-व्याख्यान-प्रामाण्य-दार्ढ्याय स्वस्वसम्प्रदायस्य व्यासमूलकता सर्वज्ञर्षिमूलकता वा प्रदर्शयितुं सन्नद्धा आसन्। अध्याय-तात्पर्य-निरूपण-द्वारा अध्याय-सङ्गति-निरूपणाय एतद् अस्माकं चेष्टामात्रम्, न तु सिद्धान्ततया वक्तुम् उत्सहामहे। निर्णयस्तु सुधीभिः करणीय। अत्र यद् अस्माभिः निरूपितं तत् तु एतदेव, यत् समन्वय-सङ्गति प्रथमाध्यायस्य, अविरोधसङ्गतिः द्वितीयाध्यायस्य, साधनसङ्गतिः तृतीयाध्यायस्य, फलसङ्गतिश्च चतुर्थाध्यायस्येति युक्तिसिद्धं तथा सूत्राक्षरलब्धमिति। एवं च एतदेव सूत्रकृताम् एतद्ग्रन्थरचनाया चतुर्थं कौशलमिति।

### पादसङ्गतिरूप पञ्चमकौशलम्

इदानीमस्य पाद-प्रतिपाद्य निर्णयद्वारा पाद-सङ्गतिः निर्णेया। एतदेव सूत्रकृताम् एतद्-ग्रन्थ-रचनाया पञ्चम कौशलम्। तथा हि चतुरध्यायात्मक-ग्रन्थोऽयं षोडशपादात्मक इति प्रागेव उक्तम्। यत प्रत्यध्यायं चत्वारः पादा वर्तन्ते। अथेयं पाद-सङ्गतिर्निरूपिता चेत्, तदा तदन्तर्गताधिकरणाना विचारणा वा, ततश्च सूत्रार्थावधारणे च व्याख्यातृणा मतभेदावसर स्वल्प एव अवशिष्येत। यथा एतस्य फलमेकं द्वितीयाध्याये परमत-खण्डनाभिधे द्वितीयपादे अन्तिमेन उत्पत्त्यधिकरणेन पाञ्चरात्रमतं खण्डितमेव, न तु स्थापितम्, यथा शाङ्कर-भास्करादि-प्राचीन-भाष्यादिषु दृश्यते। परन्तु रामानुजाचार्येण एतस्य अन्यथात्व कृत दृश्यते। तेन अस्मिन् अधिकरणे पाञ्चरात्रमत स्थापित, न तु खण्डितम् इति एतत् तु पादसङ्गतिलङ्घनमेव। तथैव शाङ्करभास्करादिभाष्येऽपि "महद्दीर्घाधिकरणे" परमतखण्डन न कृतम्, परन्तु स्वपक्ष-दोषनिरसन कृतम्। अत्रापि अगत पादसङ्गतिलङ्घनमेव वक्तव्यम्, अत पाद-सङ्गति-ज्ञाने वर्तमाने सति अधिकरणार्थे न स्वातन्त्र्यं सम्भविष्यति। अधिकरणार्थ-नियामिका साक्षाद् इयं पादसङ्गति। तेन चेय सङ्गतिः परम्परया सूत्रार्थनियामिका अपि भवति।

परन्तु एतन्-पादसङ्गति-निरूपणे महान् अन्तरायो दृश्यते, यतो यथा अध्यायारम्भ-शेषौ सूत्रकारेण सूत्रपद-द्विरुक्तिद्वारा विज्ञापितौ, तथा पादारम्भ-शेषौ न तेन उपदिष्टौ। सूत्राणाम् आकारमात्र-दर्शनेन न केनापि पादारम्भशेषौ ज्ञातुं शक्येते, यथा एतस्मात सूत्रात् पादारम्भ, एतन्निमित्त पादशेष सञ्जात इत्यादि। आद्यन्त सूत्र-ज्ञानाभावे उपक्रमोपसहाराद्य-लिङ्गादिभि अधिकरणादीना तात्पर्यनिर्णयो न सम्भवति। तेन पादतात्पर्यमपि न ज्ञातुं शक्यते, यत सूत्रार्थावलम्बनेनैव पादार्थोऽपि निर्णीतो भवेत्। अतो दुरतिक्रमोऽयम् अन्तराय. सञ्जायते। अत एव मन्यामहे वय नून पादारम्भ-शेष-निर्देशार्थं पाणिनीयसूत्रादिवत्

स्वरितस्वरान्वितयोग सूत्र कृत आसीद् व्यासेन भगवतेति । बौद्धादि-वेद-बाह्यसम्प्रदाय प्राबल्य च तत् प्रायेण उच्छिन्नसम्प्रदायोऽयं जातः, तेन स्वरयोगेन पाठादिकमपि सर्वैः विस्मृतम् । व्यास-शुक-गौडपाद-गोविन्दपादादि चिरजीविनां योगिनां प्रसादात् शङ्करभगवता पुनः प्रचारितोऽयं ब्रह्मसूत्रार्थः सम्यग् प्रकाशिताश्चाम्, अतोऽयम् उपलभ्यते अस्माभिरिति । यदि तेन आचार्येण एतत् सूत्रादिरचनाकौशलम् उपदिष्टं स्यात्, तर्हि परवर्त्तिकाले नैतादृशः मतभेदः अभविष्यत् । न ज्ञायते कथं तेन एतत् कौशलं न प्रचारितम् ।

### प्राचीनभाष्यकाराः

शाङ्करभाष्यात् प्राचीनभाष्यादिकं किन्तु बौद्धप्रभावादेव विनष्टम्, अथवा शाङ्करभाष्येण तेषां सम्पूर्णतया गतार्थत्वात् तेषां संरक्षणे औदासीन्यभावाद् विनष्टं जातं, तेन तद् भाष्यादिकम् इदानीं नोपलभ्यते । वेदान्तादि प्राचीनग्रन्थसन्दर्भालोचने कृते शङ्करभगवतः प्राग् बोधायनोपवर्ष-भर्तृप्रपञ्च-ब्रह्मनन्दि-टङ्क-गुहदेव-भारुचि-कपर्दि-भर्तृहरि-सुन्दरपाण्ड्य-द्रमिडाचार्य ब्रह्मदत्त-नामधेय-वेदान्ताचार्याणां बहूनां ब्रह्मसूत्रादिग्रन्थेषु भाष्यवृत्तिप्रभृतय आसन् इति अवगम्यते । एतेषां भाष्याणि तु नैव इदानीम् उपलभ्यन्ते । एतेषां मतवादादिकं काशीस्थाच्युतग्रन्थमालान्तर्गतवेदान्तदर्शनभूमिकायां काशीनगरीयसंस्कृतविद्यालयाध्यक्ष म०म०-श्रीगोपीनाथकविराजमहोदयेन कथञ्चित् प्रपञ्चितम् । शङ्करमतविरोधिनो भाष्यकाराः, येषां भाष्यादिकम् उपलभ्यते, ते सर्व एव शङ्कराचार्यात् अर्वाचीनाः । तेषामपि स्वमत-स्थापनार्थं क्वचिद् अनुकूलतया क्वचित् प्रतिकूलतया शाङ्कर-सूत्रव्याख्यानमेव प्रायेण अवलम्बनम् अभवत्, अनन्यगतिकत्वात्, अतः अविरोधस्थले शाङ्करव्याख्यानमेव प्रायेण तैः अनुसृतं दृश्यते ।

### पादारम्भविषये भाष्यकाराणामैकमत्यम्

परन्तु तैरपि पादारम्भ-शेष-निर्णय-कौशलविषये किमपि नोक्तम् । तथापि तत्र तेषां मतभेदो न दृश्यते । अतः उपलभ्यमान-भाष्यकर्तृणां सर्वेषां पादारम्भ-शेषविषये ऐकमत्यात् नात्र अस्माकं तन्निर्णायक-प्रयत्नः करणीयः । तत्र उपक्रमोपसंहारादि-तात्पर्यनिर्णायक-लिङ्गेन पादप्रतिपाद्य-विषयनिर्णयद्वारा अस्माभिः इदानीं पादसङ्गतिरेव आविष्करणीया इत्येव युक्तम् ।

### पादप्रतिपाद्यविषये मतभेदः

परन्तु तत्रापि पुनर्महान् एकः अन्तरायो वर्त्तते एव । यतः पादप्रतिपाद्यविषयेषु सर्वे भाष्यकाराः नैकमत्यं भजन्ते । अध्यायप्रतिपाद्यविषयेषु यथा सर्वे भाष्यकाराः अभिन्नमतावलम्बिनः प्रायेण आसन्, अत्र न तथा इति उपलभ्यते । अत्र आलोच्यमानेषु दशसु भाष्येषु मध्ये पादप्रतिपाद्यविषयनिर्देशे सर्वे भिन्नमार्गानुसारिणो दृश्यन्ते । यथा प्रथमपादे शाङ्करमते 'सुस्पष्टब्रह्मबोधक-श्रुतिवाक्यानां समन्वयः" इति उच्यते, परन्तु रामानुजमते "अस्पष्टतर-जीवादि-लिङ्गकानि,वाक्यानि विचारितानि" इति उच्यते । एवम् अन्यत्रापि सर्वेषां मतभेदो दृश्यते ।

## दशभाष्यकाराणामाविर्भावकाल

तेषां दशानां भाष्याणाम् आविर्भावक्रमः अभ्युदयकालश्च, यथा

| | | | | | | |
|---|---|---|---|---|---|---|
| १ । | शाङ्करभाष्यम् | ६२४ | शकाब्दे | रचितमिति | | सम्भाव्यते । |
| २ । | भास्करभाष्यम् | ६३० | ,, | ,, | प्रायेण | ,, |
| ३ । | रामानुजभाष्यम् | ९९० | ,, | ,, | ,, | ,, |
| ४ । | निम्बार्कभाष्यम् | १०५० | ,, | ,, | ,, | ,, |
| ५ । | माध्वभाष्यम् | ११७० | ,, | ,, | ,, | ,, |
| ६ । | श्रीकण्ठभाष्यम्* | ११९२ | ,, | ,, | ,, | ,, |
| ७ । | श्रीकरभाष्यम्* | १३२२ | ,, | ,, | ,, | ,, |
| ८ । | वल्लभभाष्यम्* | १४२२ | ,, | ,, | ,, | ,, |
| ९ । | विज्ञानभिक्षुभाष्यम्* | १५२२ | ,, | ,, | ,, | ,, |
| १० । | बलदेवभाष्यम्* | १६३७ | ,, | ,, | ,, | ,, |

## भास्करनिम्बार्कश्रीकण्ठाविर्भावकाल

एतेषां मध्ये शाङ्करभाष्यस्य रचना-कालो यथा निश्चितप्रायो न तथा अपरेषाम् । अतो भास्करादीनां कृते "प्रायेण सम्भाव्यते" इत्येव मन्तव्यम् अत्र कृतम् । आविर्भावक्रमविषये विप्रतिपत्तिः प्रायेण नास्त्येव । भास्कराचार्यः प्रायेण सर्वैः शकीयदशमशतके आसीदिति मन्यते । परन्तु भास्करेण शङ्करमतं खण्डितं, तथा शङ्करशिष्यपद्मपादेनापि भास्करमतं खण्डितम्, तेन शङ्करभास्करौ समकालिकौ इति कल्प्यते । तथा हि भास्करभाष्यारम्भे दृश्यते

"सूत्राभिप्रायसंवृत्त्या स्वाभिप्रायप्रकाशनात् । व्याख्यातं यैरिदं शास्त्रं व्याख्येयं तन्निवृत्तये ॥" इति ।

तत्र शङ्करशिष्य-पद्मपादेनापि भास्करमतं खण्डितं, यत् पञ्चपादिकायां दृश्यते "तदेवाहंकर्तुः सदैकरूपावगमात् स्थायित्वेऽपि अर्थक्रियासम्भवात् न नीलस्य स्वगतापरोक्षत्व-मात्रेण माहायानिकः पक्षः समर्थ्यते, किन्तु ग्राहकस्य अहंकर्त्तुरात्मनः स्थायिनोऽभावे । स च एकरूप अनुभवाद् युक्तितश्च प्रसाधितः । ननु नानुमेयादिषु अपरोक्षता दृश्यते" इति ।

अत्र विवरणे "यस्तु कश्चित्क्षपणक-पादावनत-शिरोबिम्ब, तत्त्वदर्शन-तन्निष्ठ-परमहंस-प्रद्वेष-तीव्र-वायु-विक्षिप्त-विवेक-विज्ञानलव स्वपरपक्षगुणदोष-विभाग-दूरीकृत-विज्ञानो भेदाभेदाभ्यां बन्धमोक्षादि-सङ्करमिव कुर्वन् दुर्जनरमणीया वाच जल्पति सुगत-विज्ञानवाद-समानोऽयं वेदान्तवाद इति, सम्प्रदाय-श्रवण-परिचय-शून्यतया दर्शन-विवेकम् अनवबुध्यमानो नापवाद्यः, किन्तु शोचनीय इत्युपेक्षणीयो विद्वद्भिरिति ।"

अत्र तत्त्वदीपने "विषय-चैतन्ययोरभेद-मात्रेण अपसिद्धान्तः स्याद् इत्याशङ्क्य

* एतेषां कालः श्रीकरभाष्यभूमिकातो गृहीतः । श्रीपतिभाष्यमेतस्यैवापरनाम ।

"सर्वसिद्धान्तसंकरः स्यात्" इत्युक्तं विवृणोति—"यत् किञ्चित्" इति। किमेतद् गुरोर्बोधम् ? उत धार्त्तिककारस्य ? अथवैकदेशिनः ? * * * तृतीयमुत्थापयति—"यस्तु" इति। क्षपणकस्य पादौ क्षपणकपादौ, तयोः अनन्तः शिरोधिर्यस्य तथोक्तः, अनेन च विशेषणेन भेदाभेदवादित्वेन क्षपणकविनेयत्वम्। ततस्तत्र समयस्य उपक्ष्यत्वम् उक्तम्" इति। (पृ० ४००, १९३२ सं, ब्रह्मसूत्र-शाङ्करभाष्यम्, कलिकाता-संस्कृतग्रन्थमालायां (नं० १) म म श्रीअनन्तकृष्ण-शास्त्रि-सम्पादितम्)।

अत्र पद्मपादः भेदाभेदवादिना शाङ्करमतस्य 'माहायानिकत्वं' समाख्यातम्। तन्मतमेव पद्मपादेन मत्युक्तम् इति स्पष्टम्। वस्तुतस्तु भास्करभाष्ये १।४।२५-सूत्रे शाङ्करमतं स्वीकृत्य उक्तम्—

"तथा च वाक्यं—परिणामस्तु स्यात् दध्यादिवदिति विगीतं विच्छिन्नमूलं माहायानिकबौद्धगाथितं मायावादं व्यावर्णयन्तो लोकान् व्यामोहयन्ति" इति।

एतेन अनुमीयते—पद्मपादेन स्वमते यन्माहायानिकत्वापवादः खण्डितः तदपवादस्य जनको भास्कर एव आसीत्। गुरुपरम्परागतः मवादोऽपि अयमेव।

ततश्च माधवीयशङ्करविजये १५श-सर्गे ८० श्लोकादौ शङ्करभास्करयोः विचारकथा वर्णितेति दृश्यते। तेन भास्करः शङ्करसमसामयिक इति कल्पयितुं शक्यते। तथा च शङ्करस्य जीवितं यदि ६०८ शकाब्दात् ६४०-शकाब्दपर्य्यन्तकालान्तरे स्यात्, एवं च शङ्करेण यदि (२०) विंशतिवर्ष-वयसि त्रिंशद्वर्षवयस्क-भास्करेण सह विचारः कृतः स्यात्, तदा भास्करस्य जन्मकालः मोटेन ५९८-शकाब्दात् ६७८-शकाब्दपर्य्यन्तकालान्तरे आसीद् इत्येव युक्तम्, यदि अशीतिवर्षाणि तस्य जीवितकालः कल्प्यते। ये खलु भास्करस्य जीवितं शकीयदशमशतके स्थापयितुम् इच्छन्ति, तेषामिदं चिन्तनीयं यद् वाचस्पतिमिश्रेण भास्कर-मतमपि खण्डितम्। यथा आनन्दमयाधिकरणे तेन उक्तम्—

"न च प्राणमयादिषु विकारार्थत्वायोगात् स्वार्थिको मयड् इति युक्तम्।"

अत्र कल्पतरौ उक्तम्—"भास्करोक्तम् आशङ्क्य आह—"न च" इति। एतेन भास्करो वाचस्पतिमिश्रादपि प्राचीन इति प्रतीयते।

### वाचस्पतिमिश्रस्य आविर्भावकाल

वाचस्पतिमिश्रस्य आविर्भावकाल ८०० शकाब्दात् ८८० शकाब्द-पर्य्यन्तो भवितुम् अर्हति, यतः तेन तदीयन्यायसूचीनिबन्धे 'वस्वङ्कवसुवत्सरे' (८९८-विक्रमाब्दे) तद्ग्रन्थरचनाकाल इति उक्तम्। तेन ८९८-५७=८४१-शकाब्द एव तद्ग्रन्थरचनाकाल इति प्रतिभाति। अथ यदि ४१-वत्सर-वयसि उक्तग्रन्थः तेन रचितः स्यात्, तदा तस्य जीवित-कालः ८०० शकाब्दात् ८८० शकाब्दपर्य्यन्त इति वक्तुं शक्यते। तेन ९म-शकीयशतकाद

पूर्वमेव भास्करस्य कालः इति पर्य्यवस्यति, न तु दशमशकीयशतके इति। वाचस्पतेः ८९८-वत्सरो न शकाब्दः, किन्तु विक्रमसंवदेव, यतः उदयनेन वाचस्पतेः न्यायवार्त्तिक-तात्पर्य्यटीकोपरि तात्पर्य्य-परिशुद्धिग्रन्थो रचितः, एतेन वाचस्पतेः उदयनात् प्राचीनत्वमपि घोषितम्, यतः तस्य लक्षणावलीरचनाकालः ९०६-शकाब्दो भवति, यतस्तेन उक्तम्

"तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः। वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥"

तेन भास्करस्य कालः न शकीयदशमशतकम् इति निश्चितम्। एवं च भास्करस्य शङ्करसम-सामयिकत्वे न कापि प्रबला बाधा दृश्यते। मतान्तरे तु कल्पनाबाहुल्यमेव दृश्यते। तन्नात्र वयं विचारयामः।

तथापि निम्बार्काचार्याविर्भावविषये तत्सम्प्रदायानुवर्त्तिनां मतं भिन्नमेव। तन्न अस्माभिर्बोद्धुं शक्यते। तैर्मन्यते कलेरादौ व्यासाविर्भावसमये निम्बादित्यभगवतः अभ्युदयोऽभवत्। (काशीसंस्कृत-ग्रन्थमाला-संस्करण-ब्रह्मसूत्रग्रन्थस्य भूमिका द्रष्टव्या।) किन्तु तथा सति निम्बार्क-भाष्यं शङ्करभगवतोऽपि प्राचीनैर्विद्वद्भिः यथा उल्लेखनीयम् आसीत्, तथा शङ्कर-तत्पर-वर्त्ति-भास्कर-रामानुजादिभिरपि अपरैश्च उल्लेख्यतां धत्ते। परन्तु तथा नैव दृश्यते। प्राचीनानां मध्ये निम्बार्कस्वामिनः साक्षाच्छिष्य-श्रीनिवासाचार्यात् ("श्रीमन्निम्बार्कपादपद्मान्तेवासिना श्रीश्रीनिवासाचार्य्येण" इति उक्तत्वात्) पूर्वं न केनापि तस्य सत्ता प्रज्ञापिता। तस्यापि आविर्भावकालसम्बन्धे न किमपि विशिष्टं प्रमाणं विद्यते। श्रीनिवासेन बौद्ध-धर्मकीर्त्तिवाक्यं विप्रभिक्षु-वचनत्वेन "नाभाव उपलब्धेः" इति २।२।२८-सूत्रभाष्ये उद्धृतं दृश्यते। तच्च वचनम्

"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति" इत्यादि।

अयं विप्रभिक्षुः धर्मकीर्त्तिरेवेति खण्डनटीकायां शङ्करमिश्रेण उक्तमिति। (१म परिच्छेदे स्वप्रकाशवादखण्डनं द्रष्टव्यम्।) तद् यथा "इति धर्मकीर्त्तिनापि उक्तम् इत्यर्थः" इत्यादिना। एवं च प्रायेण विंशतिवर्षैः ज्यायानपि धर्मकीर्त्तिः शङ्करसमसामयिक एव, यतः ६०८-शकाब्दतः ६४०-शकाब्दपर्यन्ते काले शङ्करस्य जीवितमासीद् इत्येव अनुमीयते। ततश्च धर्म्मकीर्त्तेः गुरुः पितृव्यश्च कुमारिलभट्टः आसीत्, तेन सह शङ्करस्य साक्षात्कारकथा माधवीयशङ्करविजये दृश्यते। शङ्करेण च धर्मकीर्त्तेर्वाक्यं २।२।२८-सूत्रभाष्ये उद्धृतम्। तेन कुमारिलस्य मतमपि अध्यासभाष्यमध्ये उद्धृतम्। अतो धर्मकीर्त्ति-शङ्करयोः समसामयिकत्वे न कापि बाधा भवेत्। तथा सति शङ्करात् पूर्वम्, एवं च शकीयसप्तमशताब्दतः पूर्वं निम्बार्काचार्य्यस्य आविर्भावो न कथमपि सम्भवति। अतः कलेरादौ तस्य आविर्भाव इति सर्वथा अनास्थेयमेव भवति।

ततश्च शङ्करादि-माध्वान्तेषु भाष्येषु दृष्टेषु निम्बार्कभाष्यस्य अर्वाचीनत्वं सिध्यति। विस्तरभयात् तत्र एकमेव प्रमाणमत्र आलोच्यते। यथा ब्रह्मसूत्र-द्वितीयाध्याय-द्वितीय-पादस्य

उत्पत्त्यधिकरणे शङ्कर-भास्करादिभि पाञ्चरात्रमतखण्डनं कृतमिति दृश्यते। रामानुजाचार्येण पाञ्चरात्रवैष्णव-मतावलम्बिना पाञ्चरात्रमत-स्थापनं कृतम्। एतेन तु द्वितीयाध्याय द्वितीयपादस्य परपक्ष-खण्डनरूप-पादसङ्गति-लङ्घनजन्य-दोष तस्य अभवत्। तद्दोषवारणाय निम्बार्काचार्येण तथा मध्वाचार्येण च तत्र शाक्तमत-खण्डनं कृतम्। तेन रामानुजाभीष्टं वैष्णवमतमूल पाञ्चरात्रमतमपि रक्षितं, पादसङ्गतिरपि न लङ्घिता। निम्बार्काचार्यो यदि भास्कर रामानुजयो पूर्वभावी स्यात, तर्हि शाङ्करभाष्य-खण्डनोद्यतो भास्कराचार्य स्वाभमीष्ट शाङ्करभाष्यम् अनुसृत्य स्वाभिमतानुकूल-पाञ्चरात्रमतं न खण्डयेत, किन्तु निम्बार्कभाष्यम् अनुसृत्य शाक्तमतखण्डनं कृत्वा शाङ्करमत-विरोधितां साधयेत्। तथैव रामानुजाचार्यो निम्बार्कभाष्यम् अनुसृत्य पादसङ्गतिलङ्घनजन्यदोषं न वृणुयात, किन्तु शाक्तमतखण्डनं कृत्वा पाञ्चरात्रमतस्य निर्दोषतां प्रतिपादयेत्। एतेन रामानुजाचार्य-परभविकत्वमेव निम्बार्कमध्वाचार्ययो सिध्यति। को ऽप्यमिद यदि रामानुजाचार्यस्य मनसि उदियात् तर्हि तेन एतस्यैव अनुसरण कृतं स्यादेव। अतो रामानुजाचार्यस्य परवर्तिनो एव निम्बार्क-मध्वाचार्यौ—इत्येव अनुमीयते।

ततश्च मध्वविजयग्रन्थे दृश्यते मध्वाचार्येण एकविंशतिसंख्यकानि ब्रह्मसूत्रभाष्याणि दृष्टानि, तन्मध्ये निम्बार्कभाष्यस्य न उल्लेखो वर्तते। तौ च आचार्यौ अन्यतरं परस्पर वा कुत्रचित् न प्रमाणत्वेन स्वीकृतवन्तौ। एतदेव हि मध्वचरितकारस्य निम्बार्काचार्य-नामाद्यनु ल्लेख-कारणम्—इत्येव कल्प्यते, अत निम्बार्काचार्य्यस्य मध्वाचार्य्यात् परभविकत्वं सम्भाव्यते। तथापि निम्बार्कशिष्यसम्प्रदायान्तर्गत-देवाचार्यस्य आविर्भावकाल, तत्कृत-वेदान्तजाह्नवीग्रन्थस्य किशोरदासकृतभूमिकायां "युगरुद्रेन्दु" शब्देन यथा उक्त, स च १११२ विक्रमाब्दो भवति। तेन देवाचार्यस्य जीवितकाल ९७७ शकाब्दत १०५७ शकाब्दपर्यन्तम् आसीदित्येव सम्भाव्यते—यदि ८० वर्षाणि तस्य जीवितं भवेत्। परन्तु मध्वाचार्यस्य काल ११२१-शकाब्दत १२०१-शकाब्द-पर्यन्तम्—इत्येव तस्य चरित ग्रन्थादित अवगम्यते। तथा सति देवाचार्य मध्वाचार्यात प्राचीनो भवति। निम्बार्काचार्यस्तु ततोऽपि प्राचीनो रामानुजाचार्याच्च अर्वाचीनो भवति, इत्येव सिध्यति, यत रामानुजाचार्य्यस्य काल ९४१-शकाब्दत १०६१ शकाब्दपर्यन्तो ज्ञायते।

परन्तु निम्बार्कशिष्य-परम्परागत-देवाचार्यस्य कालः ९७७-१०५७ शकाब्द-पर्यन्त इति प्रतिपादितम्। तेन देवाचार्य रामानुजात् ३६ वर्षै कनीयान् भवति। परन्तु देवा-चार्य-श्रीनिवासादीनां ग्रन्थत अवगम्यते ते सर्वे निम्बार्काचार्यस्य समकालिका आसन् एवेति। ततो निम्बार्केण रामानुजकृत-पादसङ्गति-लङ्घनजन्य-दोषस्य परिहारात निम्बार्क-श्रीनिवासाचार्ययो काल रामानुज-देवाचार्ययो मध्ये एव पतति। तथा च ९५० शकाब्दत १०५७-शकाब्द-मध्ये निम्बार्कदेवाचार्ययो काल इति सम्भाव्यते।

भास्कर-श्रीकण्ठयोश्च समयविषये अपि बहवो मतभेदा वर्त्तन्ते। बहवो विद्वांसो भास्करस्य शकीयदशमशतके आविर्भावः इति मन्यन्ते। किन्तु पद्मपादाचार्येण वाचस्पतिमिश्रेण च तन्मतखण्डनं कृतम् अतः शङ्कर-समसामयिक एव स इत्यपि कल्पयितुं शक्यते। एतत् तु प्रागेव सूचितम्। श्रीकण्ठस्य शङ्करादपि प्राचीनत्वमिति बहूनाम् अभिमतम्। किन्तु तस्य रामानुज-परवर्त्तित्वमेव सङ्गच्छते। एतदर्थं श्रीकरभाष्य-भूमिका द्रष्टव्या। अत्र आचार्याणाम् आनुमानिकः कालः

| | | | | | |
|---|---|---|---|---|---|
| कुमारिलभट्टः | ५४४-६२४ | शकाब्दाः, | उदयनाचार्यः | ८६६-९४६ | शकाब्दाः |
| धर्म्मकीर्त्तिः | ५७०-६३० | ,, | रामानुजाचार्यः | ९४१-१०६१ | ,, |
| शङ्कराचार्यः | ६०८-६४० | ,, | निम्बार्काचार्यः | ९५०-१०३० | ,, |
| पद्मपादाचार्यः | ६१०-६९० | ,, | श्रीनिवासाचार्यः | ९६०-१०४० | ,, |
| भास्कराचार्यः | ६००-६५० | ,, | देवाचार्यः | ९७७-१०५७ | ,, |
| वाचस्पतिमिश्रः | ८००-८८० | ,, | मध्वाचार्यः | ११२१-१२०१ | ,, |

## शाङ्करमतेन पादप्रतिपाद्यम्

इदानीं प्रकृतम् अनुसरामः। पादप्रतिपाद्यविषये इदानीं भाष्यकाराणां मतभेदाः दर्शनीयाः। तथा हि शाङ्करभाष्यानुसारेण एतद्ब्रह्मसूत्रग्रन्थस्य पादप्रतिपाद्यं, यथा ब्रह्मामृतवर्षिण्यां दृश्यते

११ पादे सुस्पष्टब्रह्मबोधक-श्रुतिवाक्यानां समन्वयः।

१२ ,, उपास्यब्रह्मवाचकास्पष्टश्रुतिवाक्यानां समन्वयः।

१३ ,, ज्ञेयब्रह्मप्रतिपादकास्पष्ट-श्रुतिवाक्यानां समन्वयः।

१४ ,, अव्यक्तादि-सन्दिग्धपदमात्राणामेव समन्वयः।

२१ ,, सांख्य-योग-काणादादिस्मृतिभिः सांख्यादि-प्रयुक्ततर्कैश्च वेदान्त-समन्वयस्य विरोधपरिहारः।

२२ ,, सांख्यादिमतानां दुष्टत्वप्रदर्शनेन वेदान्तसमन्वयस्य विरोधपरिहारः।

२३ ,, पूर्वभागेन पञ्चमहाभूतश्रुतीनाम्, उत्तरभागेन च जीवश्रुतीनां परस्पर-विरोधपरिहारः।

२४ ,, लिङ्गशरीरश्रुतीनां विरोधपरिहारः।

३१ ,, जीवस्य परलोकगमनागमन-विचारपूर्वक-वैराग्यादिनिरूपणरूपसाधननिर्देशः।

३२ ,, पूर्वभागेन त्वंपदार्थस्य, उत्तरभागेन च तत्पदार्थस्य शोधनरूपसाधननिर्देशः।

३३ ,, सगुणविद्यासु गुणोपसंहारस्य निर्गुणे ब्रह्मणि अपुनरुक्तपदोपसंहारस्य च निरूपणद्वारा साधनवर्णनम्।

३।४ पादे निर्गुणज्ञानस्य बहिरङ्ग-साधनभूतानाम् आश्रमयज्ञादीनाम् अन्तरङ्गसाधन-भूतानाञ्च शमदमश्रवणमननादीनां निरूपणद्वारा साधनत्व-निरूपणम्।

४।१ „ श्रवणाद्यावृत्त्या निर्गुणम्, उपासनया सगुणं वा ब्रह्म साक्षात्कृतवतो जीवत पुण्यपापलेपविनाशलक्षणाया मुक्ते अभिधानम्।

४।२ „ म्रियमाणस्य उत्क्रान्तिप्रकारदर्शनम्।

४।३ „ सगुणब्रह्मविदो मृतस्य उत्तरमार्गाभिगमनम्।

४।४ „ पूर्वभागेन निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्ते, उत्तरभागेन च, सगुण-ब्रह्मविदो ब्रह्मलोकस्थिते निरूपणम्।

इत्येव शाङ्करमतानुसारेण पादार्थनिर्णय। तेन इयमेव पादसंगति।

### भास्करमतेन पादप्रतिपाद्यम्

भास्करभाष्यस्य पादार्थप्रदर्शनपर-टीकादिकं न दृश्यते, न वा मुद्रितसंस्करणे तथा कृत्वा पुस्तकमेतत् मुद्रितमास्ते, तथापि एतद्विषये प्रायेण शाङ्करभाष्यानुरूपं भास्करभाष्यम् इति सूत्रार्थत अवगम्यते। भास्करस्तु ज्ञानकर्म-स्वरूपसमुच्चयवादी, शङ्करस्तु तद्विरोधी ज्ञानकर्म-क्रमसमुच्चयवादो, भास्कर द्वैताद्वैतवादी, शङ्करस्तु अद्वैतवादी, तन्मते व्यवहारदशायां द्वैतं स्वीकृतमपि मिथ्या, अद्वैतमेव पारमार्थिकम् इत्यादिरूपं पार्थक्य तयो प्रसिद्धमेव। तेन शङ्कर कृतपादार्थे यत्र निर्गुणब्रह्मविषयवर्णनं, तत्र भास्करस्य सगुणब्रह्मविषय-वर्णनमेव ज्ञातव्यम्। अत तन्मतेन पादार्थनिर्णयादिकं प्रायेण शाङ्करमतानुरूपमेव भवति। एतेन ब्रह्मणो निर्गुण-त्वानुरोधेन यत्र यत्र शङ्कराभिमत-पादार्थमध्ये पूर्वोत्तरभाग-कल्पनादिक दृश्यते, तत्र तत्र भास्करमते तथा न—इत्येव पार्थक्य ज्ञेयं, न तु अन्यत्।

### रामानुजमतेन पादप्रतिपाद्यम्

इदानीं रामानुजमतेन पादार्थो वक्तव्य। रामानुजमतेन पादार्थस्तु—

१।१ पादे अस्पष्टतरजीवादिलिङ्गकानि वाक्यानि विचारितानि।

१।२ „ पुनरस्पष्टजीवादिलिङ्गकानि „

१।३ „ स्पष्टलिङ्गकानि „

१।४ „ स्पष्टतरजीवादिलिङ्गकानि „

२।१ „ सांख्यादिस्मृतिभि बाधस्य परिहार।

२।२ „ प्रतिपक्षतर्काणां वेदान्तवाक्यानुसारिभि सत्तर्कै निराकरणम्।

२।३ „ आकाशादे कार्यत्वनिरूपणम्।

२।४ „ इन्द्रियादे कार्यत्वनिरूपणम्।

३।१ „ जाग्रदाद्यवस्थान्तरस्थितस्य जीवस्य दोषादिनिरूपणम्।

३।२ पादे पुरुषोत्तमस्य सर्वदा हेयप्रत्यनीकत्वकल्याणगुणाकरत्वरूपोभयलिङ्गत्व-प्रतिपादनम् ।

३।३ „ साधनभेदनिरूपणम् ।

३।४ „ अङ्गनिरूपणम् ।

४।१ „ उपासनारोहमाहात्म्यम्, उत्तरपूर्वाघाश्लेषविनाशरूपम् ।

४।२ „ उत्क्रान्तिप्रकार. ।

४।३ „ अर्चिरादिगतिः ।

४।४ „ ब्रह्मप्राप्तिरूपम् अपुनरावृत्तिलक्षणम् ।

ततश्च एतन्मते अध्यायप्रतिपाद्यमपि द्रष्टव्यं, तत्रापि कश्चिद् भेदो दृश्यते, यथा

प्रथमाध्याये ब्रह्मणि जगत्कारणत्वान्वयं प्रतिपादयति ।

द्वितीयाध्याये—ब्रह्मणो निखिलजगदेककारणत्वे वेदान्तवाक्यविरोधशङ्काया यौक्तिक-विरोधशङ्कायाः केषाञ्चिन्नित्यत्वश्रुतिविरोधशङ्कायाश्च निवर्त्तकत्वम् ।

तृतीयाध्याये साधनप्रतिपादकत्वम् ।

चतुर्थाध्याये प्राप्तिचिन्तापरत्वम् ।

एवञ्च शाङ्करमतेन सह अध्याय-पाद-प्रतिपाद्य-विषयेषु यः प्रभेदो प्रदृश्यते, स तु न अकिञ्चित्करः इति प्रतिभाति । शङ्करादू अर्वाचीनेन रामानुजाचार्येण भगवता यदि शङ्करभगवता सह स्वस्य एतत्प्रभेदं समर्थयितु शङ्करादपि प्राचीनभाष्यवृत्त्यादिकं किञ्चित् प्रमाणत्वेन प्रदर्शितं स्यात्, तदा अतीव शोभनम् अभविष्यत् । तदभावात् युक्तिशरणमेव यथा तेन गृहीत, तथा अत्र अस्माकमपि कर्त्तव्यम् ।

तथा सति शाङ्करमतेन अध्यायप्रतिपाद्यादिविषये यादृशं स्वाभाविकत्वं युक्त्यनुकूलत्वं च दृश्यते, तादृशं नात्र उपलभ्यते । यतः उपनिषदः अवलम्ब्य तद्वाक्यार्थमीमासाच्छलेन दर्शनशास्त्ररचनायां कर्त्तव्याया समन्वयाविरोधसाधनफलानि यथाक्रमम् अध्यायार्थरूपेण वक्तव्यानि भवन्ति । न तु "ब्रह्मणि जगत्कारणत्वान्वयप्रतिपादनादिकं", यथोक्तं वेदान्तदीपे श्रीभाष्यभूमिकाया च, अध्यायार्थरूपेण सन्निवेशनीयम् । जगत्कारणत्वेन ब्रह्मपरिचय-प्रदानं तस्य ब्रह्मणः श्रुतितात्पर्यविरुद्धकथनम् एव । जगतकारणत्वेन ब्रह्मपरिचये दीयमाने ब्रह्मण. सच्चिदानन्दरूपत्वस्य हानिरेव आपद्येत । अतः एतत् न समीचीनं प्रतिभाति । ब्रह्मणो जगत्कारणत्व यदि पारमार्थिकं स्यात्, तदा जगतः सत्यतापत्तिः दुर्वारा, तथा सति विशिष्टाद्वैतहानि, द्वैतापत्तिश्च भवत्येव । जगतो ब्रह्माङ्गत्वेऽपि ब्रह्मणोऽशुद्धत्वं विकारित्व च प्रसज्येत । अतो ब्रह्मणो जगत्कारणत्व-वर्णनं न श्रुतितात्पर्यम् ।

अथ **श्रीमन्मध्वमते** ब्रह्मसूत्रस्य पादप्रतिपाद्यविषयाः तावत्

१।१ पादे नामात्मकानां अन्यत्र प्रसिद्धानां शब्दानां विष्णौ समन्वयः ।
१।२ ,, लिङ्गात्मकानाम् अन्यत्र प्रसिद्धानां शब्दानां विष्णौ समन्वयः ।
१।३ ,, उभयत्रप्रसिद्धानां शब्दानां विष्णौ समन्वयः ।
१।४ ,, अन्यत्रैव प्रसिद्धानां शब्दानां विष्णौ समन्वयः ।
२।१ ,, युक्त्यविरोधः ।
२।२ ,, समयाविरोधः ।
२।३ ,, वियच्छ्रुत्यविरोधः ।
२।४ ,, प्राणश्रुत्यविरोधः ।
३।१ ,, वैराग्यार्थं गत्यादिनिरूपणम् ।
३।२ ,, भक्तिनिरूपणम् ।
३।३ ,, उपासनानिरूपणम् ( सर्वपरिमाने प्रथमतः [illegible] ततो अन्ते निर्णयः ) ।
३।४ ,, ज्ञानसामर्थ्यनिरूपणम् ।
४।१ ,, कर्मनाशादि फलम् ।
४।२ ,, देवानां मोक्षः तथा उत्क्रान्तिनिरूपणम् ।
४।३ ,, मार्गगम्ययोर्निरूपणम् ।
४।४ ,, परब्रह्मप्राप्तानां भोगनिरूपणम् ।

अत्र विष्णुपरत्वेन पादप्रतिपाद्यादिनिर्णय एव वैशिष्ट्यम् । एतत् तु उपासनानुकूलम् इति स्पष्टम् । तथा च नैतत् ब्रह्मजिज्ञासाप्रसूचितब्रह्मज्ञानानुकूलम् । अतः एतादृश-पादार्थनिरूपणं सूत्राणां स्पष्टार्थविरुद्धम् । तथापि अत्र शाङ्करमतेन सह न प्रभेदो दृश्यते, स तु [illegible] शङ्करपादभूषणाख्यग्रन्थमध्ये रघुनाथसूरिणा विचारितः । स तु विचारः एतदर्थं द्रष्टव्यः । माध्वभाष्ये तट्टीकातत्त्वप्रकाशिकायां भाष्यचन्द्रिकायां च पादार्थविषये विस्तृतालोचनं दृश्यते । परन्तु तत् सर्वं स्वतन्त्रविचारमूलकं, न तु किमपि प्राचीनभाष्यादिमूलकम् । किमधिकं रामानुजभाष्यस्य यादृशबोधायनवृत्तिमूलकत्वम् उद्घोष्यते तादृशं किञ्चिद्भाष्यमूलकत्वम् अस्य नास्ति ।

इदानीं द्रष्टव्यं **निम्बार्कमते** कीदृशोऽस्य पादप्रतिपाद्यविषयः इति । तत्र श्रीनिवासभाष्ये दृश्यते—

१।१ पादे निरवद्ये श्रीवासुदेवे श्रुतीनां समन्वयः ।
१।२ ,, अस्पष्टस्पष्टजीवादिलिङ्गकवाक्यानां तत्र समन्वयः ।
१।३ ,, ,, ,, ,, ,, ,, ,,
१।४ ,, कापिलतन्त्रसिद्धप्रधानात्मकप्रधानादिप्रतिपादकवाक्यानां ब्रह्मणि समन्वयः ।

२।१ पादे परैः स्वसिद्धान्ते उद्भाविता दोषाः निराक्रियन्ते ।
२।२ „ परोक्तयुक्तीनामाभासत्व-प्रदर्शनरूपपरपक्षखण्डनम् ।
२।३ „ ब्रह्मकार्यवियदाद्युत्पत्तौ जीवविषये च श्रुतीनामविरोधप्रदर्शनम् ।
२।४ „ जीवकरणश्रुतीनामविरोधप्रदर्शनम् ।
३।१ „ संसारस्य दोषनिरूपणेन ततो विरक्तिप्रदर्शनम् ।
३।२ „ विवेकवैराग्यदार्ढ्याय स्वप्नावस्थाविचारः ।
३।३ „ ब्रह्मोपासनासु गुणोपसंहारविकल्पनिर्णयाय विद्याभेदाभेदविचारः ।
३।४ „ विद्यातः तदङ्गात् कर्मणो वा पुरुषार्थविचारः ।
४।१ „ साधनावृत्तिः आप्रयाणात् कर्त्तव्या इति निरूपणम् ।
४।२ „ विद्वदविद्वत्साधारणोत्क्रान्तिनिरूपणम् ।
४।३ „ विदुषो ब्रह्मप्राप्तये गतिनिरूपणम् ।
४।४ „ अर्च्चिरादिमार्गेण परब्रह्मप्राप्तानामाविर्भाववर्णनम् ।

अत्र सगुणब्रह्मवासुदेवपरत्वेन पादप्रतिपाद्यनिर्णयः एव वैशिष्ट्यम् । अन्यथा शाङ्कर-पादप्रतिपाद्यविषयैः सह प्रायेण ऐकमत्यं दृश्यते । अध्याय-प्रतिपाद्यविषयेषु तथैव ऐकमत्यं वर्त्तते एव ।

**श्रीकण्ठमतेन** पादप्रतिपाद्यविषयाः तावत्

१।१ पादे स्पष्टब्रह्मलिङ्गवाक्यविचारः ।
१।२ „ अनतिस्पष्टलिङ्गवाक्यविचारः ।
१।३ „ स्पष्टास्पष्टलिङ्गवाक्यविचारः ।
१।४ „ अस्पष्टलिङ्गवाक्यविचारः ।
२।१ „ साङ्ख्यादितर्कविरोधशङ्कापूर्वकस्वपक्षस्थापनम् ।
२।२ „ साङ्ख्यादिमतानां दुष्टत्वप्रदर्शनम् ।
२।३ „ श्रुतिवाक्यानां परस्परविरोधपरिहारः ।
२।४ „ भौतिकोत्पत्तिश्रुतिविरोधपरिहारः ।
३।१ „ उपासकस्य नित्यत्वादियुक्तस्य जीवस्य गत्यागतिनिरूपणम् ।
३।२ „ जीवावस्थानिरूपणपूर्वकेश्वरस्वरूपलक्षणोक्तिः ।
३।३ „ उपासनाविशेषाणां गुणोपसंहारः ।
३।४ „ विद्यासहकार्याश्रमधर्मादिनिरूपणम् ।
४।१ „ उपासनाप्रकारनिरूपणम् ।
४।२ „ उपासकस्य विदुषः शरीराद् उत्क्रान्तिनिरूपणम् ।

४।३ पादे अर्चिरादिगतिनिरूपणम् ।

४।४ „ मुक्तिस्वरूपनिरूपणम् ।

अत्रापि अध्यायचतुष्टयं समन्वयाविरोधसाधनफलपरम् इति अवगम्यते । परन्तु तृतीयाध्यायस्य द्वितीयपादे ईश्वरस्वरूपलक्षणवर्णनं न साधनपरम्, तथा चतुर्थाध्यायस्य प्रथमपादेऽपि उपासनाप्रकारनिरूपणस्य न फलपरत्वमिति प्रतिभाति, अतो व्यभिचार, शिष्टे विषये शाङ्करमतानुसरणमेव दृश्यते ।

श्रीकरमतेन पादप्रतिपाद्यविषयास्तु—

१।१ पादे परमशिवब्रह्मलिङ्गवाक्यसमन्वयाभिधानम् ।

१।२ „ केषाञ्चिद् अस्पष्टलिङ्गानां पदानां ब्रह्मप्रतिपादकत्वम् अर्थान्तरबोधकत्वं वेति सन्देहे परब्रह्मशिवरूपमुख्यार्थबोधकत्वम् ।

१।३ „ स्पष्टास्पष्टश्रुतिवाक्यसन्देहद्वयनिर्मूलकतया स्पष्टार्थकथनम् ।

१।४ „ क्वचित् शाखासु प्रधानजगत्कारणत्वप्रतिपादकशब्दानां स्पष्टार्थकथनम् ।

२।१ „ वेदान्तविरुद्धस्मृतितर्कादिनिराकरणपूर्वकं जगज्जन्मादिकारणत्वं परब्रह्मशिवस्यैव इति प्रतिपादनम् ।

२।२ „ सांख्यादिदुर्वादनिरसनेन मुमुक्षूणां शुद्धवैदिकमार्गनिष्ठत्वस्यैव दृढीकरणम् ।

२।३ „ श्रुतीनाम् अन्योन्यविरुद्धत्वद्योतनात् जगतो ब्रह्मकारणत्वशङ्कानिरसनम् ।

२।४ „ जीवस्य ब्रह्मकार्यत्वेऽपि चेतनत्वाद् अजन्यत्वस्वाभाविकत्वभिन्नत्वतत्त्वरूपत्वानां प्रतिपादनेन तस्य तल्लिङ्गशरीरत्वप्रतिपादनम् ।

३।१ „ जीवस्य लोकान्तरगमनागमनविचार ।

३।२ „ परमशिवब्रह्मस्वरूपलक्षणादीनि प्रपञ्चितानि ।

३।३ „ तदुपासनविरोधगुणोपलक्षणम् ।

३।४ „ ब्रह्मचर्याद्याश्रमचतुष्टयनिरूपणम् ।

४।१ „ सर्वासां विद्यानां फलम् ।

४।२ „ त्वंपदार्थभूतजीवोत्क्रान्त्यादिदशाविरोधफलम् ।

४।३ „ अर्चिरादिना मार्गेण गत्यागतिफलम् ।

४।४ „ मुमुक्षूणां मुक्तिस्वरूपप्रकारं विचिन्त्य स्वाभाविकजीवभावनिवृत्तिपूर्वकशिवभावाभिव्यक्तिपरमपुरुषार्थफलनिरूपणम् ।

अयं पादार्थः प्रायेण श्रीकण्ठमतानुरूपः, विशेषस्तु ब्रह्मणः परशिवत्वप्रतिपादनम्, यथा माध्वमते ब्रह्मणो विष्णुत्वप्रतिपादनम् । शाङ्करभास्करारूय-भाष्यद्वयं यथा प्राधान्येन ब्रह्मपरं, तेन ब्रह्मभाष्याख्यम्, एवं रामानुजमाध्वाख्य-भाष्यद्वयं यथा नारायणपरं विष्णुपरं वा, तेन वैष्णव-,

भाष्यम्, तथा श्रीकण्ठ-श्रीकराख्यभाष्यद्वयं च शिवपरं परशिवपरं वा, तेन शैवभाष्यम् इत्याख्यातुं शक्यते। प्रभेदोऽयं सम्प्रदायानुसारेण उपासनानुरागजन्य इत्येव प्रतीयते। वल्लभ-विज्ञानभिक्षु-बलदेव-भाष्याणां पादार्थनिर्णये सम्यक् प्रयत्नो न दृश्यते। मुद्रितग्रन्थेषु एतदर्थं सम्पादकवर्गैरपि न कोऽपि समुल्लेखः कृतो दृश्यते। ततश्च एतानि त्रीणि भाष्याणि अतीव-आधुनिकानि, न वा तानि प्राचीनभाष्यमूलकानि। अत. तेषां पादार्थं निरूप्य स नात्र प्रदर्शितः अस्माभिरपि। प्राचीनविषये प्राचीना एव प्रायेण प्रमाणं भवन्ति। प्राचीनविषयावगमे प्राचीनानां यथा सम्भावनाधिक्यं, न तथा अर्वाचीनानाम्। तेन उपलभ्यमानभाष्याणां मध्ये प्राचीनतमत्वात् शाङ्कर-भाष्यं यादृशं प्रमाणं भवति, तथा न परवर्तिनां भास्कर-रामानुजादीनां भाष्यमिति कल्पयितुं शक्यते।

शाङ्करभाष्यमपि कथञ्चित् प्राचीनभाष्यमूलकम् उत प्राचीनमतमूलकं, भास्कर-रामानुजभाष्यादीनामिव, तदपि न सम्यग् ज्ञातुं शक्यते। वाराणसीय-संस्कृतविद्यालयस्यपुस्तकालयाध्यक्ष-स्वर्गीय-श्रीविन्ध्येश्वरीप्रसादद्विवेदी-महोदयाच्छ्रुतं शुकशिष्य-गौडपादप्रणीत-ब्रह्मसूत्र-व्याख्यानरूप. सहस्रकारिकात्मक. एको ग्रन्थः तेन दृष्टः। परन्तु स ग्रन्थ. इदानीं नोपलभ्यते, न वा कुत्रचित् तस्य वाक्यादिकम् उद्धृतमपि। तथा सति शाङ्करभाष्यस्य प्राचीनभाष्यमूलत्वं प्रतिपद्येत। तथापि प्राचीनत्वात् तस्यैव प्रामाण्याधिक्यं सम्भाव्यते। एतेनैव सर्वं बोद्धुं शक्यते, पादप्रतिपाद्यविषये कीदृशो मतभेदो भाष्यकाराणामिति, न कोऽपि अन्यैः सह सर्वथा ऐकमत्यं भजते इति च।

### मतभेदकारणं सम्प्रदायरक्षणम्

एतस्य प्रथमं कारणम्——अधिकरणरचनायां मतभेद। सोऽपि सूत्रार्थमतभेद-जन्य। तस्य अपरं कारणं सम्प्रदायानुरोध। सम्प्रदाय-रक्षणाय युक्त्याश्रयत्वं हातुं प्रायेण सर्वेषां कुण्ठा न भवति। अत एतदेव अत्र मुख्यं कारणं मन्यते। "युक्तियुक्तमुपादेयं वचनं बालकादपि" इति मतम् अनुसृत्य सूत्राक्षरत एव सूत्रार्थे विचारिते सति नैतादृशी मतभेद-सम्भावना स्यात्। अथवा सर्वसम्मत-साक्षाद्व्याससम्प्रदायत सूत्रार्थे लब्धे सति नैव मतानैक्यम् अभविष्यत्। एवञ्च मतभेदस्य मुख्यं कारणं सम्प्रदायरक्षानुरोधरूप-दुराग्रहविशेष एव इत्यनुमीयते।

### पादार्थनिरूपणोपाय:

स्यात् एतत्, परन्तु पादप्रतिपाद्यरूप-पादसङ्गतिनिरूपणं विना अधिकरणार्थनिर्णय. असम्भव., तत तदर्थनिरूपणाद् ऋते सूत्रार्थनिरूपणमपि सुदुष्करम्। तेन ब्रह्मसूत्र-तात्पर्यम् अनिरूपितं स्यात्, तत व्याससम्मत-सूत्रभाष्यनिर्णयश्च ततोऽपि असम्भव. एव प्रतिभाति। परन्तु तथापि अस्माकं नैराश्यं न भजनीयम्। एतदर्थं तत्र उपायद्वयं वर्तते। तत्र प्रथमं तावद् व्याससम्प्रदायानुगत्याविष्करणं, द्वितीयन्तु सूत्राधिकरणयो यथार्थसम्भावितार्थनिरूपणम्।

द्वितीयोपायार्थं यत् कर्तव्यं तद् एकस्मिन् पक्षे उत्तरोत्तरव्याप्य-श्रुति शास्त्राध्याय-सङ्गति-साहाय्येन यथासम्भव पदार्थनिरूपणं, पक्षान्तरे च सूत्राक्षर-पर्यालोचनेन, ततः अधिकरण-रचना-नियमाविष्करणेन अधिकरण-तात्पर्यनिर्णयानन्तरम् अधिकरण-समष्टिरूप-पादार्थनिरूपणम्। अधिकरण-रचना-नियमाविष्करणमपि प्रधानां भाष्याणां मध्ये अधिकसंख्यकानां सम्मति-ग्रहणेन करणीयम्। एतदेव द्वितीयोपायार्थम् अस्माकं कर्तव्यम्। एवं च उभयपक्षतो निरूपितः अयं पादार्थो भवितुम् अर्हति। यथा कस्यचित् कार्ये च कारणे च विज्ञाते सति तस्य स्वरूपम् आविष्कर्तुं शक्यते, कार्यकारणयोः अन्तःपातित्वात् तस्य, तद्वद् अत्रापि श्रुतिशास्त्राध्यायार्थेषु विज्ञातेषु सत्सु, तथा अधिकरणार्थे सूत्रार्थे च अवगते सति पादार्थनिर्णयः सम्भवत्येव, अध्यायाधिकरणार्थयोः अन्तःपातित्वात् पादार्थस्य। अयमेव अत्र द्वितीयः उपायः।

पादार्थनिरूपणे प्रथमोपायः

तत्र प्रागुक्तः प्रथमोपायस्तु एतस्मात् द्वितीयोपायादपि दुर्बलः। यतः सर्वे भाष्यकाराः स्वस्वसम्प्रदायस्य व्यासमूलकत्वम् ऋषिमूलकत्वं वा प्रतिपादयितुम् उत्सहन्ते। यथा शाङ्कर-सम्प्रदायस्य व्यास-शुक-गौडपादादिक्रमेण, तथा शङ्करेण सह उत्तरकाश्यां व्यासस्य साक्षात्कारानन्तरं शाङ्करभाष्यस्य व्यासानुमोदितत्वेन च व्यास-सम्प्रदायत्वं, भास्करसम्प्रदायस्य पाणिनि गुरुपर्वसम्प्रदायत्वं, रामानुजसम्प्रदायस्य व्यास-तच्छिष्य-बोध-तदन्वयोत्पन्न-बोधायनादिक्रमेण व्याससम्प्रदायत्वं, माध्वसम्प्रदायस्य मध्वाचार्येण बदरिकाक्षेत्रस्थ-व्यासाश्रमे व्याससाक्षात्कार-पूर्वकोपदेशलाभात् व्याससम्प्रदायत्वं, निम्बार्कसम्प्रदायस्य सनत्कुमार-नारदादिक्रमेण ऋषिसम्प्रदायत्वं तेन व्याससम्प्रदायत्वम्, श्रीकण्ठ-श्रीकरयोः सर्वज्ञभगवच्छिव-सम्प्रदायत्वाद् व्याससम्प्रदायत्वम्, वल्लभस्य विष्णुस्वामिसम्प्रदायत्वात् तथा, विज्ञानभिक्षोः कपिलसम्प्रदायत्वात् तथा, स्वप्ने गोविन्द-भगवतः ब्रह्मसूत्रार्थविवेकविज्ञानस्य बलदेवस्य माध्वसम्प्रदायत्वाद् व्याससम्प्रदायत्वम्। परन्तु सर्वत्र अविसंवादि सर्वमान्यं सम्यक् प्रमाणं किञ्चिदपि न विद्यते। ऋषीणां मतभेदेन, आचार्याणां मध्ये परस्परविरोधेन च सर्वत्र संशयास्कन्दितत्वात्। अतः व्याससम्प्रदायानुगत्याविष्करणरूपः प्रथमोपायो द्वितीयोपायाद् दुर्बल एव।

पादार्थनिरूपणे द्वितीयोपायः

एवं च द्वितीयेन उपायेन पादार्थनिरूपणे सति यदि कस्मिंश्चित् पादे इयं पाद-सङ्गतिः केनचिद् भाष्यकारेण लङ्घिता स्यात्, तदा तद्भाष्यं तदंशेन न व्याससम्मतं भवेत्, यथा रामानुजभाष्यम्। तत्र द्वितीयाध्यायस्य परमतखण्डनाख्ये द्वितीयपादे अन्तिमोत्पत्त्यधि-करणे इयं सङ्गतिः लङ्घिता दृश्यते, स्वपक्षरूप-पाञ्चरात्रमतस्य स्थापनात्। तथैव बहूनां मतेन उक्ताध्यायस्य उक्तपादे 'महद्दीर्घवद्' अधिकरणे शाङ्करमतेऽपि इयं सङ्गतिः लङ्घितेति दृश्यते, परमति-वादस्य उत्तरप्रदानमुखेन स्वपक्षस्थापनात्। परन्तु रघुनाथसूरिणा शाङ्करपादभूषणाख्ये ग्रन्थे अत्रापि

शाङ्करभाष्ये व्यासमतपरपक्ष-खण्डनपरतया एव व्याख्यातम् इति दृश्यते। एतदपि न असङ्गतकल्पनम्, यत आकरभाष्ये एतत्प्रसङ्गस्य उपक्रमे खण्डनपरत्ववचनमेव उपन्यस्तं दृश्यते। अतो 'सर्वार्थविरुद्ध' इत्यधिकरणे प्रकरणे एव पादसङ्गतिलङ्घनं न निश्चितम् इति कल्पयितुं शक्यते। ननु तावत्, अत्र एतदेव कल्पनीयम्, यद् यस्मिन् भाष्ये एतादृशदोषाधिक्यं भवेत्, तत् व्यासासम्मतं भाष्यम् इति, तथा यत्र एतादृशदोषाभावः, तदेव व्याससम्मतं भाष्यम् इति च। दोषाभावे सन्निकृष्टत्वं दोषाधिक्ये विप्रकृष्टत्वम् इति विवेकः।

परन्तु एतादृशीं बाधाम् अतिक्रमितुं प्रायेण सर्वैः आचार्यैः स्वस्वमतेन पादार्थोऽपि अन्यथाकृत एतत् तु प्रागेव दृष्टम्। तेन निःसंशयं यथा स्यात् तथा व्याससम्मतभाष्य-निर्णयः न सुकरं भवति न कोऽपि केनापि उपायेन निःसंशयम् एतत् सम्पादयितुं समर्थो भवेत्। तथापि एतेन पादसङ्गतिनिरूपणार्थं यथासम्भवम् अत्र प्रयत्नः कर्त्तव्यः।

### अधिकरणनिरूपणद्वारा पादार्थनिर्णयः

एतदर्थम् अस्माभिः आदौ अधिकरण-निरूपणं कर्त्तव्यम्, पादार्थानाम् अधिकरणार्थाधीनत्वात् सुव्यक्तः। अत्र यद्यपि अधिकरण-रचनायामपि पादार्थतोऽपि महान् मतभेदो दृश्यते, तथापि तद्रचना-नियमाविष्करणाय वयम् अत्र प्रयतामहे। यतः समान-लक्षणाक्रान्तानि बहूनि अधिकरणानि सन्ति, तानि दृष्ट्वा अधिकसम्मतनियमाविष्करणं न असम्भवं भवति। पादप्रतिपाद्य-निर्णये तु एतादृशी सम्भावना न विद्यते, तन्निर्णायकसमानाकार-पदादीनाम् असत्त्वात्। अतः केनचित् प्रकारेण अधिकानुगत अधिकरण-रचन-नियमो यदि आविष्कृत स्यात्, तदा स एव नियमो व्यासानुमत इति मत्वा तन्नियमानुगताधिकरण-समूहार्थ एव पादार्थो भवितुम् अर्हति। तथा सति पादार्थनिर्णयो न असम्भव, न वा सुदूरपराहत इति मन्तव्यम्। अतः अधुना पादार्थनिर्णयार्थम् अधिकरणरचनानियमाविष्करणाय [illegible] क्रियते।

उपोद्घातसङ्गतिः, हेतुहेतुमद्भावसङ्गतिः, उपजीव्योपजीवकभावसङ्गतिरित्यादि। यत्र "कथमेवम्" इत्याद्याकारस्य आक्षेपस्य उत्तररूपेण अधिकरणम् अवतार्यते, तत्र आक्षेपसङ्गतिः बोद्धव्या, तथा यत्र दृष्टान्तरूपेण अधिकरणम् आरभ्यते, तत्र दृष्टान्तसङ्गतिः ज्ञेया। "यथा तत्र नात्र तथा" एवम्प्रकारेण अधिकरणं यत्र प्रस्तूयते, तत्र प्रत्युदाहरणसङ्गतिः प्रतिदृष्टान्तसङ्गतिर्वा उच्यते। प्रागुक्तविषयस्य देशविरोधम् अवलम्ब्य यदि तत्संश्लिष्टः कोऽपि प्रसङ्गः अवतारितः स्यात्, तदा प्रसङ्गसङ्गतिः उच्यते। एतत् सर्वं वैयासिकन्यायमालायां, "भाष्यरत्नप्रभा"-नामिकायां टीकायां, प्रज्ञामृतवर्षिण्याख्यटीकायां, प्रज्ञातत्त्वप्रकाशिकाख्यायां सूच्यां च प्रपञ्चितम्। भाष्यभिन्न-मतान्तरीय भाष्यटीकादिषु प्रायेण एतज्जातीयालोचनं न दृश्यते। अधिकरण-मालाजातीय-ग्रन्थादयः केवलं शाङ्कर-रामानुज-श्रीकण्ठसम्प्रदायेष्वेव दृश्यन्ते। तथापि शाङ्करसम्प्रदायस्यैव प्राधान्यं ग्रन्थबाहुल्यं च। रामानुजीयवेदान्ताधिकरणमालाख्यो ग्रन्थः यदि रामानुजाचार्यविरचितः स्यात्, तदा स एव ग्रन्थः अत्र प्रथमत्वेन ग्रहणीयः, यतः बहूनां तस्य रामानुजाचार्यप्रणीतत्वे सन्देहः वर्तते। अन्यथा भारतीतीर्थ-विरचितवैयासिकन्यायमाला-ग्रन्थस्यैव प्राचीनतमत्वं सम्भाव्यते।

४। ततश्च यत्र अधिकरणम् आरभ्यते, तत्र सूत्रमध्ये प्रथमान्तपदमेव प्रायेण विधेयतया प्रयुक्तम्—इत्येतत् प्रायशः भाष्येषु सर्वेषाम् अधिकरणारम्भकसूत्राणाम् आलोचनेन अवगम्यते, प्रथमान्तपदस्यैव वस्तुस्वरूप-वर्णन-योग्यत्वात्। यथा घटं दृष्ट्वा तम् अजानन् यदि कोऽपि पृच्छेत् "कोऽयं पदार्थः ?" तदा तस्य इदम् उत्तरम् "अयं घटः", न तु "इमं घटम्", "अनेन घटेन", "अस्मै घटाय", "अस्मात् घटात्", "अस्य घटस्य", 'अस्मिन् घटे" वेति। द्वितीयादि-विभक्त्यन्तेन पदेन वस्तुनिर्देशः न केनापि क्रियते, तेन वस्तुनिर्देशाय प्रथमान्तपदमेव सर्वैः व्यवह्रियते, अतः सूत्रमध्ये प्रथमान्तपदसत्त्वम् अधिकरणारम्भसूचकम्। यथा "आनन्दमयः अभ्यासात्" इत्यत्र प्रथमान्तानन्दमयपदस्य विधेयत्वात् अस्य अधिकरणारम्भकत्वम्।

५। यत्र एतादृशप्रथमान्तपदं न दृश्यते, तत्र तत्पूर्वसूत्रात् पूर्वाधिकरणाद् वा तादृशप्रथमान्तपदम् अध्याहर्तव्यम्। सूत्रमध्ये प्रथमान्तपदं विना सूत्राणाम् अधिकरणारम्भकत्वं न मन्यते। अतः प्रथमान्तपदम् अधिकरणारम्भलक्षणम्। तथा "जन्माद्यस्य यतः" इति सूत्रे जन्मादि इति प्रथमान्तपदम्। "ईक्षतेर्नाशब्दम्" इति सूत्रे 'अशब्दम्" इति प्रथमान्तपदं वेति।

६। यत्र एकाधिकेन सूत्रेण अधिकरणं रचितं स्यात्, तत्र सर्वाणि सूत्राणि क्वचित् सिद्धान्तबोधकानि, क्वचित् कतिपयानि सिद्धान्तबोधकानि अवशिष्टानि अन्यानि पूर्वपक्ष-सूचकानि। यथा "विलक्षणत्वाधिकरणम्"।

७। पूर्वपक्षसूत्रम् अधिकरणारम्भे अधिकरणमध्ये वा दृश्यते, स्वानुमोदितप्राय मतान्तरज्ञापनाद् क्वचिद् अन्ते न क्वचिद् अन्ते।

८। कुत्रचित् सूत्रशृङ्खलामध्ये आक्षेप-समाधानरूपेण एकाधिकवारं पूर्वपक्षसूत्राणि सिद्धान्तसूत्राणि च दृश्यन्ते।

९। कुत्रचिद् एकस्मिन्नेव सूत्रमध्ये पक्षद्वयं सन्निवेशितम्, यथा "गौणश्चेन्नात्मशब्दात्" इति।

१०। एकेन एकाधिकसूत्रेण वा यत्र अधिकरणं भवति, तत्र अधिकरणस्य षडङ्गानि तत्र अन्तर्निहितानि भवन्ति। टीकादिकृद्भिः तानि अङ्गानि पृथक् कृत्वा प्रदर्शितानि। सूत्रद्वारा सूत्रकृता अधिकरणाङ्गानि न प्रदर्शितानि। न वा सूत्ररचनायां सूत्रक्रमे वा अधिकरणाङ्गक्रमोऽपि अनुसृतः।

११। अधिकरणाङ्गानि षट्, यथा सङ्गतिः, विषय, संशय, पूर्वपक्ष, सिद्धान्तपक्ष, फलभेदश्च। एतदपि प्रागेव उक्तम्। सूत्रकृता एतत्क्रमानुसारेण नैकमपि अधिकरणं रचितम्। तत्र सङ्गतयः सदैव ऊहनीयाः। विषयश्च श्रुतिवाक्यं, तच्च सूत्रपदात् विज्ञेयम्, यथा "जन्माद्यस्य यतः" इति एकेन सूत्रेण एकम् अधिकरणं रचितम्, तत्र "यतः"-पदात् "यतो वा इमानि भूतानि" इत्यादि-श्रुतिवाक्यं विषयत्वेन गृह्यते। क्वचित् सूत्रार्थादपि विषयरूपं श्रुतिवाक्यं संगृह्यते। यथा "शास्त्रयोनित्वात्" इति एकेन सूत्रेण एकम् अधिकरणं रचितम्, तत्र "अस्य महतो भूतस्य निःश्वसितम्" इति श्रुतिवाक्यम् अथवा "तं तु औपनिषदं पुरुषं पृच्छामि" इति श्रुति-वाक्यं विषयत्वेन अर्थाद् गृह्यते। संशयश्च विषयवाक्यम् अवलम्ब्य कल्पनीयः। पूर्वोत्तरपक्षद्वयं संशयस्य कोटिद्वयात् निरूपणीयम्। फलभेदश्च पूर्वोत्तरपक्षात्मकं समग्राधिकरणार्थ-निरूपणाधीनः। एवं च यथासम्भवं सूत्रपदम् अनुसृत्य सूत्रार्थं च पर्यालोच्य अधिकरणाङ्गानि रचयितव्यानि। अधिकरणाङ्गक्रमेण सूत्रकृता सूत्राणि न रचितानि। एतावन्तः एव अधिकरणरचनाया सामान्यनियमा इति वक्तुं शक्यते।

**अधिकरणरचनायां विशेषनियमाः**

विशेषनियमास्तु बहवः। ते सर्वे अधिकरणविचारप्रसङ्गेन संकलनीयाः। सर्वेषां सूत्राणाम् आलोचनं परीक्षणं विना तेषां संकलनं नात्र सम्भवति। शङ्करादिवल्लभान्तानाम् अष्टानाम् आचार्य्याणां मध्ये केन आचार्य्येण, केन वा सूत्रेण अधिकरणारम्भः कृतः, कतिभिः सूत्रैश्च तदधिकरणं सङ्कलितं, कस्मिन् अधिकरणे कति मतभेदाः, तत्रापि के च अधिकैः सह अभिन्नमतावलम्बिनः, के पुनः अल्पसंख्यकगणान्तर्गताः इत्यादिकं सर्वं यावन्न निर्णीयते, तावद् विशेषनियमसङ्कलनं न सम्भवति, तदनन्तरं तैश्च नियमैः अधिकरणरचनायाम् आचार्य्याणां नियम-पालनापालन-जन्यदोषगुण-निर्णयाय अधिकरण-परीक्षणमपि न सम्भवति। अतः सर्वादौ अस्माभिः सर्वाणि सूत्राणि यथाक्रमम् एकीकृत्य सरण्याकारेण च सज्जीकृत्य एका सरणिः विरचनीया। ततश्च अधिकरण-परीक्षामुखेन विभिन्नानाम् आचार्य्याणां भाष्याणाम् एतन्नियम-

पालनापालनजन्य-दोषगुणविचारः करणीयः । तेषु च केषाञ्चिद् दोषबाहुल्यात् व्यासमतविप्रकृष्टत्वं, लाघवाच्च केषाञ्चित् सन्निकृष्टत्वम् अवधार्यम् ।

### व्याससम्मतिनिर्णयोपायः

एवं च सन्निकृष्टविप्रकृष्टत्वनिर्णयेन व्याससम्मताधिकरणं निरूप्य अधिकरणान्तर्गत-विषय-तदनुकूल-श्रुतिवाक्यादिकम् अवलम्ब्य अधिकरण-समष्टिरूप-पादानामपि प्रतिपाद्यं निरूपयितुं शक्यते । तदेव पादसङ्गतिः भविष्यति । तया च पादसङ्गत्या स एव अधिकरणार्थः पुनः निर्णेयः । नात्र अन्योन्याश्रयदोषशङ्का, व्यक्तिभेदात् । यदधिकरणनिरूपिता या पादसंगतिः, तदधिकरणस्य न तत्संगतिनिरूपितत्वात् । परन्तु एतदधिकरणरचनादिकं विशेषनियमाधीनम् । विशेषनियमनिर्णयश्च समग्र-( ५५५ )-सूत्रालोचन-सापेक्षः । एतदर्थं ग्रन्थबाहुल्यम् अवश्यम्भावि । अत्र तत्पूर्वम् उल्लिखित-सरणितः अपरे ये बहवो विषयाः भायन्ते, तैरपि आलोच्यमानानां दशानां भाष्याणां मध्ये कतमस्य व्यासमत-सन्निकृष्टत्वम्, अन्येषां वा तत् कीदृशं तद् विज्ञातुं प्रयतामहे । ते च विषयाः (१) मतान्तरेण सूत्राणां पाठभेदाः, (२) एकस्य सूत्रस्य द्विधाकरणं, (३) सूत्रद्वयस्य एकीकरणम्, (४) अतिरिक्तसूत्रग्रहणम्, (५) गृहीत-सूत्रवर्जनम्, (६) सूत्रक्रमस्य विपर्ययः—इत्यादयः । अत्र सूत्रकृतां निर्देशाभावेन प्राचीनप्रमाणाभावेन च अधिकानां पक्षयुक्तिरेव व्यासमतसन्निकृष्टत्वस्य लक्षणं, तथा अल्पानां पक्षयुक्तिश्च व्यासमतविप्रकृष्टत्वस्य निदर्शनं भवति । एवं च व्यासमतविप्रकृष्टत्वमेव दोषः, सन्निकृष्टत्वमेव गुणो भविष्यति । तथा सति एतादृशदोषगुणनिर्णयः अष्टप्रकारैः सम्पादनीयः, यथा अल्पसंख्यकपक्षान्तर्गतत्वात्—

१ । अधिकरणस्य रचनायां दोषाः, २ । अधिकरणस्य अरचनायां दोषाः, ३ । पाठभेदे दोषाः, ४ । एकसूत्रस्य द्विधाकरणाद् दोषाः, ५ । सूत्रद्वयस्य एकीकरणाद् दोषाः, ६ । अतिरिक्तसूत्रग्रहणाद् दोषाः, ७ । गृहीतसूत्रवर्जनाद् दोषाः, ८ । सूत्रक्रमविपर्ययाद् दोषाः इति ।

एवं च एतेषाम् अष्टानां समाहारे कृते अल्पसंख्यकानां पक्षान्तर्गतत्वात् यस्य दोषसंख्या अपरेभ्यः स्वल्पा भविष्यन्ति, स एव व्यासमतसन्निकृष्टत्वात् व्यासमतानुसारीति आख्यातुम् उचितम् । तथापि एतन्न विस्मर्तव्यं यद् अयं निर्णयः पक्षगतव्यक्तिसंख्याबलसिद्धः, सूत्राक्षरमात्रदर्शनेन । अत्र प्राचीनत्वार्वाचीनत्वजन्य-बलाबलविचारो न कृतः । कालगतपरत्वापरत्वजन्यं यद् व्यासमतस्य अनुसारित्वम् अननुसारित्वं वा तदत्र न परिगणितम् । तस्य परिगणने कृते शाङ्कर-भाष्यस्य यादृशं प्रामाण्यं, न तथा अपरेषाम्—इति अवधेयम् । यतः सर्वे शङ्करपरभविकाः आचार्याः शङ्करात् प्राचीन-प्रमाणप्रदर्शन-पराङ्मुखाः ।

स्यादेतत्, सूत्राक्षरमात्रम् अनुसृत्य इतः अधिकं न निर्णेतुं शक्यते । सूत्राणां केवलम् अर्थविचारेण यो निर्णयः, तत्र विप्रतिपत्तिः न सम्यक् निवारयितुं केनापि शक्यते, तर्काप्रतिष्ठानात् । अतोऽत्र सूत्राक्षरमात्रतो व्यासमतानुसारित्वं निर्णीतम् । एतन्निर्णयम् अवलम्ब्य यदि सूत्रार्थं

विचार. कृत' स्यात्, तदैव काचित् मीमासा सम्भावनीया। अन्यथा असम्भावनीया एव इयं मीमांसा, इत्यत्र न कोऽपि सन्देहः। एतदर्थम् अत्र अस्माभि' सूत्राक्षरमालत. दोषगुणनिर्णय कृतः। एतेन सह सूत्रार्थ-विचार. सुधीभिः करणीयः। एतदर्थं सूत्रपाठ-सूत्रसंख्याधिकरणसंख्या-तदन्तर्गत-सूत्र-संख्यादिकं प्रदर्श्य कतिपया. सरणयोऽत्र विरच्यन्ते अस्माभिः। अधस्तात् एतत्सरणीना फल-मात्रम् अत्र पाठकाना कौतूहलनिवृत्तये प्रदीयते, विशेषेण तेषाम् आलोचनं फलं च द्वितीयपादे करिष्यते। तच्च फलं यथा

## अधिकरणरचननियमनिरपेक्षं संख्यामूलकं विचारफलम्

| भाष्य-नाम | अधिकरणस्य रचनायाम् | अधिकरणस्य अरचनायाम् | १ अधिकरणदोषसमष्टिः | २ सूत्रपाठे | ३ सूत्रयोगे | ४ सूत्रविभागे | ५ सूत्रग्रहणे | ६ सूत्रवर्जने | ७ सूत्रक्रमविपर्यये | दोषसमष्टिः |
|---|---|---|---|---|---|---|---|---|---|---|
| शाङ्कर | १ | १२ | १३ | १० | १ | ० | ० | ० | ० | २४ |
| भास्कर | १ | १० | ११ | ४६ | ४ | ० | ० | ४ | ० | ६५ |
| रामानुज | १९ | ४ | २३ | ३६ | १४ | ६ | ३ | २ | २ | ८६ |
| निम्बार्क. | ४० | ३ | ४३ | ३३ | ८ | २ | ३ | २ | ० | ९१ |
| मध्वः | ३२ | ७४ | १०६ | ४७ | १ | ६ | ६ | ३ | १ | १७० |
| श्रीकण्ठ | १२ | १६ | २८ | २६ | १४ | ६ | ३ | २ | २ | ८१ |
| श्रीकर | १० | ९ | १९ | ६३ | ११ | ० | २ | ० | ४ | ९९ |
| वल्लभ. | ४६ | ३० | ७६ | २४ | २ | ० | १ | १ | ० | १०४ |
| विज्ञानभिक्षु | ? | ? | ? | २९ | १ | ० | १ | ० | ० | ३१ |
| बलदेव | ? | ? | ? | ४१ | २ | ० | १ | ० | ० | ४४ |
| समष्टि | १६१ | १५८ | ३१९ | ३५५ | ५८ | २० | २० | १४ | ९ | ७९५ |

# पञ्चमी सरणिः

## सूत्रविभागप्रदर्शनपरा ।

(१ अ० ३ पा०)

१।३ ३५।९८ क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिंगात्

{ क्षत्रियत्वावगतेश्च (रा०) क्षत्रियत्वगतेश्च (श्री०)
{ उत्तरत्र चैत्ररथेन लिंगात् (रा० श्री०)

„ ३८।१०१ श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च

{ श्रवणाध्ययनार्थप्रतिषेधात् (रा० नि० श्री०)
{ स्मृतेश्च (रा० नि० श्री०)

(१ अ० पा० ४)

१।४ ५।१११ वदतीति चेन्न प्राज्ञो हि प्रकरणात्—

{ वदतीति चेन्न प्राज्ञो हि (म०)
{ प्रकरणात् (म०)

„ २६।१३२ आत्मकृतेः परिणामात्

{ आत्मकृतेः (रा० श्री०)
{ परिणामात् (रा० श्री०)

२।१ ११।१४५ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसंग—

{ तर्काप्रतिष्ठानादिति (रा० श्री०)
{ अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसंग. (रा० श्री०)

२।३ ६।२२२ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्य—

{ प्रतिज्ञाहानिरव्यतिरेकात् (रा० श्री०)
{ शब्देभ्यः (रा० श्री०)

„ १२।२२८ पृथिव्यधिकाररूपशब्दान्तरेभ्यः—

{ पृथिवी (रा० नि० श्री०)
{ अधिकाररूपशब्दान्तरेभ्य. (रा० नि० श्री०)

३।१ ८।२९९ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेव च—

{ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् (म० वल०)
{ यथेतमनेव च (म० वल०)

३।२ २५।३४३ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्—
{प्रकाशादिवच्चावैशेष्यम् ( म० बल० )
{प्रकाशश्च कर्मण्यभ्यासात् ( म० बल० )
३।३ ३।३६२ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियम—
{स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ( म० बल० )
{सववच्च तन्नियम ( म० बल० )
„ ५०।४०९ अनुबन्धादिभ्य प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्—
{अनुबन्धादिभ्य ( म० बल० )
{प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ( म० बल० )
४।४ १७।५५० जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च—
{जगद्व्यापारवर्जम् म० )
{प्रकरणादसन्निहितत्वाच्च ( म० )

अत्र म० १११, ५५० इति सूत्रद्वये सूत्रविभागपक्षपाती।

रा० श्री० ९८, १३२, १४५, २२२ सूत्रेषु सूत्रविभागपक्षपातिनौ।

म० बल० २९९, ३४३,३६२, ४०९ „ „ „

रा०नि०श्री० १०१, २२८ इति सूत्रद्वये सूत्रविभागपक्षपातिन।

तेन सर्वे सूत्रविभागकारिण आचार्या अल्पसंख्यकदलान्तर्गतत्वात् दोषिण भवन्ति। तत्रापि—

रामानुज ९८,१०१,१३२,१४५,२२२,२२८ इति षट्सु स्थलेषु सूत्रविभागपक्षपाती।

श्रीकण्ठ ९८,१०१,१३२,१४५,२२२, २२८ इति षट्सु स्थलेषु सूत्रविभागपक्षपाती।

निम्बार्क—१०१, २२८ इति द्वयो स्थलयो सूत्रविभागपक्षपाती।

मध्व—१११, २९९,३४३,३६२,४०९,५५० इति षट्सु स्थलेषु सूत्रविभागपक्षपाती।

बलदेव—२९९, ३४३, ३६२, ४०९ इति चतुर्षु स्थलेषु सूत्रविभागपक्षपाती।

तेन शंकर, भास्कर, श्रीपति वल्लभ, विज्ञानभिक्षुश्च एते पञ्च अधिकसंख्यकदलान्तर्गतत्वात् दोषवर्जिता भवन्ति। तेन—

रामानुज—६ स्थलेषु निम्बार्क—२ स्थलयो बलदेव—४ स्थलेषु दोषी भवति।
श्रीकण्ठ—६ „ मध्व—६ स्थलेषु

इदानीं द्रष्टव्यं कस्य केन सह कीदृश सम्बन्ध इति, तद् यथा—

रा० श्री० ६, म० बल० ४, रा० नि० २, नि० श्री० २ स्थलेषु मिलितौ।

तेन श्रीकण्ठ यथा रामानुजपक्षपाती बलदेवश्च यथा मध्वस्य न तथा अन्योऽन्येषाम्।

## अतिरिक्तसूत्रग्रहणे दोषगुणनिर्णयः ।

इदानीं द्रष्टव्यम् अतिरिक्तसूत्रग्रहणफलम् । दृश्यते च बहूनि सूत्राणि रामानुजादिभिः अतिरिक्तत्वेन सन्निवेशितानि । तत्रापि तैः न प्रमाणत्वेन प्राचीनतरभाष्यादीनि उद्धृतानि उल्लिखितानि वा । दृश्यते च प्रायेण एतानि अतिरिक्तसूत्राणि शंकरभाष्यान्तर्गत-वाक्यविशेषा एव । वस्तुतस्तु सम्प्रदायोपदेशम् अन्तरेण बुद्धिबलेन सूत्रार्थनिर्णये प्रवृत्ते सति, एवमेव सम्भाव्यते । यतः भाष्यलक्षणमेव

"सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" ॥ इति ।

तेन सूत्रानुरूपेण वाक्येन यत्र भाष्यं रचितम्, तच्च स्ववाक्यं यत्र व्याख्यातमपि भाष्यकृता, तत्र स्वबुद्धिबलेन अलब्धोपदेशेन सूत्रार्थनिर्णये प्रवृत्ते, भाष्यवाक्यमपि सूत्रत्वेन गृहीतम् इत्येव सम्भवति । एतदेव अतिरिक्तसूत्रत्वं शाकरभाष्यपर्यालोचनेन अवगम्यते । स्यादेतत्, अधुना कानि तानि अतिरिक्तसूत्राणि इत्येव आलोचनीयम् ।

# षष्ठी सरणिः

## अतिरिक्तसूत्रप्रदर्शनपरा ।

| | | |
|---|---|---|
| १।१ ( ८क, ) | प्रतिज्ञाविरोधात् | रा० नि० श्री० श्रीप० |
| १।२ ( १५क, ४६-४७ ) | अत एव च स ब्रह्म | रा० नि० श्री० |
| | अत एव च तद् ब्रह्म | नि० |
| | अत एव स ब्रह्म | श्री० |
| „ ( २३क, ५४-५५ ) | प्रकरणात् | बल० |
| २।१ ( ४क, १३८-१३९ ) | दृश्यते तु | म० |
| २।२ ( ३४क, २०५-२०६ ) | शरीराणाञ्चानवस्थितपरिमाणत्वात् | श्रीप० |
| २।३ ( १२क, २२८-२२९ ) | पृथिवी | रा० नि० श्री० |
| „ ( १८क, २३४-२३५ ) | युक्तेश्च | म० |
| २।४ ( २क, २७१-२७२ ) | प्रतिज्ञानुरोधाच्च | म० |
| ३।१ ( २१क, ३१२-३१३ ) | स्मरणाच्च | म० |
| ३।२ ( ३१क, ३४९-३५० ) | दर्शनात् | म० |
| ३।४ ( १६क, ४४१-४४२ ) | कामकारेण चैके | वि० |
| ४।२ ( १९क, ५१५-५१६ ) | यावद्देहभावित्वाद्दर्शयति च | म० |
| ४।३ ( ३क, ५२०-५२१ ) | वरुणाच्चाधीन्द्र-प्रजापती | व० |

एवं च श्रीप० २०५ सूत्रात्पर, वल० ५४ सूत्रात्परं, वि० ४४१ सूत्रात्परं, व० ५२० सूत्रात्परं, म० १३८, २३४, २७१, ३१२, ३४९, ५१५ सूत्रेभ्य परं, १० स्थलेषु अतिरिक्तसूत्रं पठितवान्।

| | | |
|---|---|---|
| रा० नि० श्री० ४६, २२८ सूत्राभ्यां परं | २ स्थलयो अतिरिक्तसूत्रं पठितवन्तौ | |
| रा० नि० श्री० श्रीप० ८ सूत्रात्परं | १ स्थले | ,, ,, |

| | | | | |
|---|---|---|---|---|
| तेन रामानुज—८ क, ४६-४७, २२८-२२९ | इति ३ स्थलेषु | अतिरिक्तसूत्रं | गृहीतवान् |
| निम्बार्क—८ क, ४६-४७, २२८-२२९ | ,, ३ स्थलेषु | ,, | ,, |
| श्रीकण्ठ—८ क, ४६-४७, २२८-२२९ | ,, ३ स्थलेषु | ,, | ,, |
| श्रीपति—८ क, २०५ २०६ | ,, २ स्थलयो | ,, | ,, |
| मध्व—१३८-१३९,२३४ २३५,२७१-२७२ ३१२-३१३,३४९ ३५०,५१५-५१६ | ,, ६ स्थलेषु | ,, | ,, |
| वल्लभ—५२०-५२१ | ,, १ स्थले | ,, | ,, |
| विज्ञानभिक्षु—४४१-४४२ | ,, १ ,, | ,, | ,, |
| बलदेव—५४-५५ | ,, १ ,, | ,, | ,, |

अत्र अष्ट आचार्या अल्पसंख्यकदलान्तर्गता सन्त दोषभागिन सञ्जाता, तद् यथा—

| | | | | | |
|---|---|---|---|---|---|
| रामानुज | ३ स्थलेषु | दोषी | मध्व | ६ स्थलेषु | दोषी |
| निम्बार्क | ३ ,, | ,, | वल्लभ | १ स्थले | ,, |
| श्रीकण्ठ | ३ ,, | ,, | विज्ञानभिक्षु | १ ,, | ,, |
| श्रीपति | २ स्थलयो | ,, | बलदेव | १ ,, | ,, |

तेन अतिरिक्तसूत्रग्रहणे केवलं शंकर-भास्करौ न दोषभागिनौ दृश्येते। अपरे सर्वे दोषिण इति प्रतिभाति।

इदानीं द्रष्टव्यं कस्य केन सह कीदृश सम्बन्ध इति, तद् यथा—

| | | | | | |
|---|---|---|---|---|---|
| रा० नि० | ३ | नि० श्री० | ३ | नि० श्रीप० | १ |
| रा० श्री० | ३ | रा०श्रीप० | १ | श्री० श्रीप० | १ |

एतेन प्रतीयते यथा निम्बार्क रामानुजानुगामी तथा श्रीकण्ठोऽपि, पुन तथैव श्रीकण्ठ निम्बार्कानुगामी इति।

## सूत्रवर्जने दोषगुणनिर्णयः।

इदानीं द्रष्टव्यं सूत्रवर्जनफलम्। दृश्यते च भास्करादिभि आचार्यै शंकरपठित-सूत्राणि परित्यक्तानि। अत्रापि न प्राचीनतरप्रमाणानि प्रदर्शितानि। वर्जितसूत्राणि यथा—

# सप्तमी सरणिः

**सूत्रवर्जनप्रदर्शनपरा ।**

| | | | | |
|---|---|---|---|---|
| २।१ | ६।१४० | दृश्यते तु | इति सूत्रं | म० भाष्ये वर्जितम् |
| २।२ | ४५।२१६ | विप्रतिषेधाच्च | " | भा० " " |
| ३।१ | २७।३१८ | योनेः शरीरम् | " | भा० " " |
| ३।२ | ३२।३५० | सामान्यात् तु | " | म० " " |
| " | ३४।३५२ | स्थानविशेषात् प्रकाशादिवत् | " | भा० " " |
| ३।४ | २२।४४७ | भावशब्दाच्च | " | व० " " |
| " | ४२।४६७ | उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् | " | भा० " " |
| " | ४६।४७१ | श्रुतेश्च | " | भा०रा०म०नि०श्री० " " |
| ४।३ | ५।५२२ | उभयव्यामोहात् तत्सिद्धेः | " | भा० रा० नि० श्री० " " |

अत्र म० १४०, ३५० इति सूत्रद्वयं, भा० २१६, ३१८, ३५२, ४३७ इति सूत्राणि, व० ४४७ सूत्रम् एवम् एकैकः आचार्यः ७ स्थलेषु पूर्वगृहीतसूत्रं परित्यक्तवान् ।

भा० रा० नि० श्री० ४ आचार्याः ५२२ सूत्रे, अतः १ स्थले गृहीतसूत्रं परित्यक्तवन्तः ।

भा०रा०म०नि०श्री० ५ " ४७१ " " १ " " " ।

तेन

| | |
|---|---|
| भास्करः २१६, ३१८, ३५२, ४६७, ४७१, ५२२ इति ६ स्थलेषु | निम्बार्कः ४७१, ५२२ इति २ स्थलयोः - |
| रामानुज - ४७१, ५२२ इति द्वयोः स्थलयोः | श्रीकण्ठः ४७१, ५२२ " २ " - |
| मध्वः १४०, ३५०, ४७१ इति ३ स्थलेषु | वल्लभः ४४७ " १ स्थले— |

प्राचीनैः गृहीतानां सूत्राणां वर्जनं कृतवान् ।

तेन अल्पसंख्यकगणान्तर्गतत्वात्

| | | |
|---|---|---|
| रामानुजः २ स्थलयोः | निम्बार्कः २ स्थलयोः | वल्लभः १ स्थले |
| मध्वः ३ स्थलेषु | श्रीकण्ठः २ स्थलयोः | भास्करः— ४ स्थलेषु |

दोषी भवति ।

अत्र भास्करः ४७१ सूत्रे, रा० म० नि० श्री० इति चतुर्भिः आचार्यैः सह मिलितः दृश्यते । तेन अत्र स समसंख्यकगणान्तर्गतः सन् न दोषभाक् भवति । किन्तु अन्येषु सूत्रेषु अल्पसंख्यकदलान्तर्गतः सन् स चतुर्षु स्थलेषु दोषग्रस्तः जातः इति विशेषः ।

इदानीं द्रष्टव्यं कस्य केन सह कीदृशः सम्बन्ध इति, तद् यथा—

| | | | | | | |
|---|---|---|---|---|---|---|
| मा० रा० २ स्थलयोः | रा० नि० २ स्थलयोः | मा० म० १ | स्थले | म० श्री० १ | स्थले | |
| मा० नि० २ ,, | रा० श्री० २ ,, | रा० म० १ | ,, | | | मिलितौ। |
| मा० श्री० २ ,, | नि० श्री० २ ,, | नि० म० १ | ,, | | | |

एतेन रामानुज, निम्बार्क, श्रीकण्ठश्च भास्करानुगामिनः, निम्बार्क श्रीकण्ठश्च रामानुजानुगामीति दृश्यते।

## सूत्रक्रमविपर्यये दोषगुणनिर्णय।

अधुना द्रष्टव्यं—सूत्रक्रमविपर्ययफलम्। दृश्यते च शंकरपठितसूत्रक्रमस्य चतुर्षु स्थलेषु अपरे आचार्या व्यतिक्रमं कृतं, तथापि प्राचीनतरप्रमाणं न प्रदत्तम्। तद् यथा—

# अष्टमी सरणिः

## सूत्रक्रमविपर्ययप्रदर्शनपरा

२।१

| शंकरपाठ | मध्वपाठ |
|---|---|
| ४। न विलक्षणत्वादस्य तथात्वं च शब्दात् | ४। न विलक्षणत्वादस्य तथात्वं च शब्दात् |
| ५। अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् | ५। दृश्यते तु |
| ६। दृश्यते तु | ६। अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् |
| ७। असदिति चेन्न प्रतिषेधमात्रत्वात् | ७। दृश्यते च |
| | ८। असदिति चेन्न प्रतिषेधमात्रत्वात् |

२।२

| शंकरपाठः | रा० श्री० श्रीप० पाठ |
|---|---|
| ५। अन्यत्राभावाच्च न तृणादिवत् | ४। अन्यत्राभावाच्च न तृणादिवत् |
| ६। अभ्युपगमेऽप्यर्थाभावात् | ५। पुरुषाश्मवदिति चेत्तथापि |
| ७। पुरुषाश्मवदिति चेत्तथापि | ६। अंगित्वानुपपत्तेश्च |
| ८। अंगित्वानुपपत्तेश्च | ७। अन्यथानुमितौ (च) ज्ञशक्तिवियोगात् |
| ९। अन्यथानुमितौ च ज्ञशक्तिवियोगात् | ८। अभ्युपगमेऽप्यर्थाभावात् |
| १०। विप्रतिषेधाच्चासमञ्जसम् | ९। विप्रतिषेधाच्चासमञ्जसम् |

२।२

| शंकरपाठः | श्रीपतिपाठ |
|---|---|
| ३०। न भावोऽनुपलब्धेः | २९। न भावोऽनुपलब्धेः |
| ३१। क्षणिकत्वाच्च | ३०। सर्वथानुपपत्तेश्च |
| ३२। सर्वथानुपपत्तेश्च | ३१। क्षणिकत्वाच्च |
| ३३। नैकस्मिन्नसम्भवात् | ३२। नैकस्मिन्नसम्भवात् |

| शंकरपाठः | २।३ | रा० श्री० श्रीप०-पाठः |
|---|---|---|
| ३४। विहारोपदेशात् | ३४ । रा०श्री० | उपादानाद् विहारोपदेशश्च |
| ३५। उपादानात् | ३२ । श्रीप० | |
| ३६। व्यपदेशाच्च क्रियाया न चेन्निर्देशविपर्ययः | ३५ । रा०श्री० | व्यपदेशाच्च क्रियाया न चेत् निर्देशविपर्यय । |
| | ३३ । श्रीप० | |

| शंकरपाठः | ४।२ | श्रीपतिपाठः |
|---|---|---|
| ५। उभयव्यामोहात्तत्सिद्धेः | | ५। वैद्युतेनैव ततस्तच्छ्रुतेः |
| ६। वैद्युतेनैव ततस्तच्छ्रुतेः | | ६। उभयव्यामोहात्तत्सिद्धेः |

अत्र मध्व, रामानुज, श्रीकण्ठ श्रीपतिश्च सर्वे अल्पसंख्यक-दलान्तर्गतत्वाद् दोषभागिन भवन्ति। तेन

२।२।५, २।३।३४ } रामानुजः २ स्थलयोर्दोषी, | २।२।५, २।३।३४ } श्रीकण्ठ २ स्थलयोर्दोषी

२।१।६-७ मध्व १ स्थले दोषी, | २।२।५, २।२।३०, २।३।३४, ४।२।५ } श्रीपतिः ४ स्थलेषु दोषी भवति।

अपरे षट् आचार्याः शंकर, भास्कर, निम्बार्क, श्रीपतिः, विज्ञानभिक्षुः, बलदेवश्च तेन दोषवर्जिता भवन्ति।

इदानीं द्रष्टव्यम् अत्र कस्य केन सह कीदृशः सम्बन्धः, इति, तद् यथा

रा० श्री० २।२।५ सूत्रे, रा०श्रीप० २।२।५ सूत्रे, श्री०श्रीप० २।२।५ सूत्रे,
,, २।३।३४ ,, ,, २।३।३४ ,, ,, २।३।३४ ,,
अभिन्नमतावलम्बिनौ भवतः।

तेन इदं निर्गलितं फलम्—

रा० श्री० २ स्थलयो मिलितौ
रा० श्रीप० ,, ,,

# द्वितीयपादसमालोचनम् ।

इदानीं यदि अधिकरणरचनानियमनिरपेक्षाधिकरणरचना-सूत्रपाठ-सूत्रयोग-सूत्रविभाग-सूत्रग्रहण-सूत्रवर्जन-सूत्रक्रमविपर्ययजन्य-दोषगुणानां समाहार मिष्येत, तदा इत्यमेव फलं दृश्यते—

| | अधिकरणरचनायाम् | अधिकरणारचनायाम् | समष्टिः | सूत्रपाठे | सूत्रयोगे | सूत्रविभागे | सूत्रग्रहणे | सूत्रवर्जने | सूत्रविपर्यये | समष्टिदोषाः |
|---|---|---|---|---|---|---|---|---|---|---|
| शां० | १ | १२ | १३ | १० | १ | | | | | २४ |
| भा० | १ | १० | ११ | ४६ | ४ | | | ४ | | ६५ |
| रा० | १९ | ४ | २३ | ३६ | १४ | ६ | ३ | २ | २ | ८६ |
| नि० | ४० | ३ | ४३ | ३३ | ८ | २ | ३ | २ | | ९१ |
| म० | ३२ | ७४ | १०६ | ४७ | १ | ६ | ६ | ३ | १ | १७० |
| श्री० | १२ | १६ | २८ | २६ | १४ | ६ | ३ | २ | २ | ८१ |
| श्रीप० | १० | ६ | १६ | ६३ | ११ | | २ | | ४ | ९६ |
| व० | ४६ | ३० | ७६ | २४ | २ | | १ | १ | .. | १०४ |
| वि० | ? | ? | ? | २९ | १ | | १ | | | ३१ |
| बल० | ? | ? | ? | ४१ | २ | | १ | | .. | ४४ |
| | १६१ | १५७ | ३१६ | ३५५ | ५८ | २० | २० | १४ | ९ | ७२५ |

अत्र विज्ञानभिक्षु-बलदेव-भाष्ययो अधिकरणरचनाऽरचनाजन्यतुलनाफल न प्रदर्शितम्। तयो मुद्रितग्रन्थे अधिकरणनिर्देशस्य असाधितत्वात्, तेन अधिकरणरचनाविषयकविचार अष्टसु भाष्येषु कृत, पाठभेदादि विचारस्तु दशसु भाष्येषु कृत इति विवेक । एव च अष्टानां भाष्याणां मध्ये दोषाणां संख्याधिक्यक्रम इत्थम्—

शंकरभाष्ये २४ दोषा, श्रीकण्ठभाष्ये ८१ दोषा, निम्बार्कभाष्ये ९१ दोषा, वल्लभभाष्ये १०३ दोषा,
भास्कर „ ६५ „, रामानुज „ ८६ „, श्रीपति „ ९८ „, मध्व „ १७० „ ।

तेन शंकरभाष्यमेव अत्र दोषाल्पत्वात्, व्यासमतसन्निकृष्टं भवति । तत. भास्कर-

दीनामिति यथायथं बोद्धव्यम् । एतद् एव अधिकरणरचनानियमनिरपेक्षनिर्णयफलम्, नियमसापेक्षनिर्णयफलं तु एतद् ग्रन्थस्य तृतीये पादे प्रदर्शनीयम् ।

इदानीं द्रष्टव्यं प्रागुक्तेषु सप्तसु विषयेषु कस्य केन सह कीदृशो नेदिष्ठो दूरस्थो वा सम्बन्धः इति ।

| भाष्य-नामानि | अधिकरण-रचनाऽ-रचनायाम् | सूत्र-पाठे | सूत्र-योगे | सूत्र-विभागे | सूत्र-ग्रहणे | सूत्र-वर्जने | सूत्रक्रम-विपर्यये | समष्टि |
|---|---|---|---|---|---|---|---|---|
| शां० भा० | २५ | -- |  | -- |  |  |  | २५ |
| शां० रा० | २ |  |  |  |  |  |  | २ |
| शां० नि० | २ |  |  |  |  |  |  | २ |
| शां० म० | ११ |  |  |  |  |  |  | ११ |
| शां० श्री० | ११ |  |  |  |  |  |  | ११ |
| शां० श्रीप | ३ |  |  |  |  |  |  | ३ |
| शां० व० | १० |  |  |  |  |  |  | १० |
| भा० रा० | २ | १२ | २ |  |  | २ |  | १८ |
| भा० नि० | १ | १० | २ |  |  | २ |  | १५ |
| भा० म० | ११ | १२ |  |  |  | १ |  | २४ |
| भा० श्री० | ११ | ११ | २ |  |  | २ |  | २६ |
| भा० श्रीप | ३ | ९ | २ |  |  |  |  | १४ |
| भा० व० | ९ | ९ |  |  |  |  |  | १८ |
| भा० वि० |  | ६ |  |  |  |  |  | ६ |
| भा०वल० |  | १० |  |  |  |  |  | १० |
| रा० नि० | २४ | २२ | ८ | २ | ३ | २ |  | ६१ |
| रा० म० | ७ | १९ | १ | – | — | १ |  | २८ |
| रा० श्री० | ११ | ३० | १४ | ६ | ३ | २ | २ | ६८ |
| रा०श्रीप० | १६ | २७ | ११ |  | १ |  | २ | ६० |
| रा० व० | ११ | १२ |  |  |  |  |  | २३ |

अथ यदि एतेषां दोषाणां सङ्ख्यानुक्रमेण विन्यासः कृतः स्यात्, तदा—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| रा० श्री० | ६८ | भा० श्री० | २६ | भा० नि० | १५ | व० वि० | ८ |
| रा० नि० | ६१ | शं० भा० | २५ | श्री० वल० | १५ | नि० वि० | ६ |
| रा० श्रीप० | ६० | भा० म० | २४ | भा० श्रीप० | १४ | भा० वि० | ६ |
| नि० श्री० | ४८ | म० श्रीप० | २४ | श्रीप० वल० | १३ | म० वि० | ६ |
| म० व० | ४७ | रा० व० | २३ | श्री० व० | १२ | वि० वल० | ५ |
| श्री० श्रीप० | ४६ | म० वल० | २२ | शं० म० | ११ | श्री० वि० | ४ |
| नि० श्रीप० | ३८ | रा० वल० | २० | शं० श्री० | ११ | श्रीप० वि० | ३ |
| नि० व० | ३८ | श्रीप० व० | २० | व० वल० | ११ | शं० श्रीप० | ३ |
| रा० म० | २८ | भा० रा० | १८ | शं० व० | १० | शं० रा० | २ |
| नि० म० | २७ | भा० व० | १८ | भा० वल० | १० | शं० नि० | २ |
| म० श्री० | २६ | नि० वल० | १८ | रा० वि० | ८ | | |

तेन श्रीकण्ठ सर्वेभ्यः रामानुजानुगामी, ततः निम्बार्कः रामानुजानुगामी, ततः श्रीपतिः रामानुजानुगामीति दृश्यते। एवम्—अवशिष्ट बोद्धव्यम् इति। अयमपि आचार्याणां सम्बन्धनिर्णये एकः पन्थाः। एतेन निम्बार्क-श्रीकण्ठ-श्रीपतीनां रामानुजपरभविकत्वमपि अनुमातुं शक्यते।

एवं च दशानाम् आचार्याणाम् एकैकस्य अल्पसंख्यकगणान्तर्गतत्वात्

१। अधिकरणरचनाऽरचनयोः
२। पाठभेदे
३। सूत्रद्वययोगे
४। सूत्रविभागे
५। अतिरिक्तसूत्रग्रहणे
६। गृहीतसूत्रवर्जने
७। सूत्रक्रमविपर्यये चेति

एतेषु सप्तसु विषयेषु कति दोषाः भवन्ति, ते च

| | | | | | |
|---|---|---|---|---|---|
| शंकरे | २४ | दोषाः | श्रीकण्ठे | ८१ | दोषाः |
| भास्करे | ६५ | ,, | श्रीपतौ | ९९ | ,, |
| रामानुजे | ८६ | ,, | वल्लभे | १०४ | ,, |
| निम्बार्के | ९१ | ,, | विज्ञानभिक्षौ | ३१ | ,, |
| मध्वे | १७० | ,, | बलदेवे | ४४ | ,, |

भवन्ति। तत्रापि दोषसंख्यायाः अल्पाधिक्यतुलनायां कृतायां दृश्यते शंकरे २४ दोषाः, अपरेषां सर्वेषां दोषाधिक्यम् इति। तेन शंकरः यथा व्याससमतानुसारी नापरे तथा। अतः शांकरभाष्यं यथा व्याससम्मतं न तथा अन्यानि भाष्याणि भवन्ति इति अवगन्तुं शक्यते। एतच्च सूत्रार्थविचारं विनैव अधिकसंख्यकभाष्यकाराणां सम्मतिक्रमेण निरूपितम्। न तु

अधिकरणरचनानियमाविष्करणान्तरम् एतत् निरूपणं कृतम्। अग्रे वयं त नियमम् आविष्कृत्य विचारयाम, अधिकरणरचनायां कोऽसौ भाष्यकार कियद्व्यासमतानुसारी इति। अत्र यत् निरूपणं कृतं, तत्तु आपातसंगतमेव, तत् तु स्थूलदृष्ट्या कृते स्थूलदृष्टौ वा इति बोद्धव्यम्। वस्तुतस्तु अत्र यो निर्णय कृत, सोऽपि भाष्याणां दोषादोषनिर्णये न सम्यक् पन्था भवितुमर्हति। स तु भायत्वेन ग्रहणीय एव, यत प्राचीनार्वाचीनयोमध्ये सम्मतिबाहुल्यमेव अत्र विचारमानदण्डत्वेन गृहीतम्। समशक्तिकानां समविद्याबुद्धिबलवीर्याणां समकालीनानां मध्ये विषयविरोधे सम्मतिबाहुल्यमेव प्रमाणत्वेन ग्रहणीयम्, न तु प्राचीनार्वाचीनयोर्मध्ये सर्वस्मिन् विषये तथा भवितुमुचितम्। अर्वाचीना नियमेन प्राचीनानां दायादा भवन्ति, अतस्तेषां मतं प्राचीनानां मतसापेक्षं प्राचीनानाम् अनुकरणं वा। तेन योऽयं सम्मतिबाहुल्यरूपपन्था अत्र अनुसृत स न प्रकृतसत्यनिर्णयाय अलं, न व्यासमतनिर्णये सम्यक् पन्था। एतेन सम्भावनाविषयमात्रं विज्ञापयितुं शक्यते। तेन शंकरे ये २४ दोषा प्रदर्शिता, भास्करादीनां मतविरोधित्वात्, भास्करे वा ये ६७ दोषा उपस्थापिता रामानुजादीनां मतवैलक्षण्यात्, तत्सर्वम् अर्वाचीनैः प्राचीनमतदूषणम्, प्राचीनतर प्रमाणं विनैव, तेनायं निर्णय न संशयानाकुलित। एतेन कतम भाष्यकार कियद्व्यासमतानुवर्ती व्यासमतसन्निकृष्ट वा इत्येव ज्ञातुं शक्यते, न तु तस्य दोषसंख्याया सत्यत्वम् अभ्रान्तत्वं वा। तथापि अधिकसम्मत्या शंकरमतस्यैव व्यासमतानुवर्तित्वं व्यासमतसन्निकृष्टत्वं वा यथा स्यात् न तथा अन्येषाम् इत्येव सिध्यति। एवं च शंकरव्याख्याने दोषाणाम् अल्पत्वात् पादार्थनिर्णय यथा शंकरभाष्यत संगच्छते, तथैव व्याससम्मतपादार्थ भवेत् इति युक्तम्। अयं पादार्थ एव पादसंगति, अनया पादसंगत्या अधिकरणार्थ नियम्यते, तत अधिकरणार्थेन सूत्रार्थ निरूपणीय इति एतत्सर्वं प्रागेव उक्तम्।

अत्र केचित् प्रत्यवतिष्ठन्ते—अधिकरणरचनानियमाविष्करणं न प्रयोजनम्। यत सूत्रार्थाधीन अधिकरणार्थ, तदधीनश्च पादार्थ। तेन पादार्थेन सूत्रार्थ न निर्णेतव्य। अन्योन्याश्रयत्वात्।

नैतद् युक्तम्, तद्व्यक्तित्वनिवेशेन शंकेयं निवार्यते। अधिकसंख्यकसूत्रैः अधिकरणार्थे निरूपिते तथा अधिकसंख्यके अधिकरणे पादार्थे निरूपिते सति तेन पादार्थेन अवशिष्टाधिकरणार्थनिर्णय सम्भवति। एव च सूत्रार्थोऽपि निर्णेतव्य।

एवं च श्रुतिसंगत्यनुरोधेन सर्वाणि सूत्राणि श्रुत्यर्थपराणि इति कृत्वा अथात् श्रुत्यर्थसन्देहनिराकरणानि इति कृत्वा व्याख्येयानि। शास्त्रसंगतिबलेन सर्वाणि सूत्राणि साक्षाद् वा परम्परया वा ब्रह्मप्रतिपादकानि इति कृत्वा योजनीयानि। ततश्च प्रथमाध्यायान्तर्गतसूत्राणि समन्वयसाधकानि, द्वितीयाध्यायान्तर्गतसूत्राणि अविरोधबोधकानि, तृतीयाध्यायान्तर्गतसूत्राणि साधनपराणि, तथा चतुर्थाध्यायान्तर्गतसूत्राणि फलज्ञापकानि इति कृत्वा व्याख्येयानि। समन्वयादय अत्र

अध्यायसंगतिरिति उच्यते। पादप्रतिपाद्यविषया एव पादसंगतयः। शांकरमतानुसारेण पाद-प्रतिपाद्यविषयाः प्रागेव प्रदर्शिताः, ते एवात्र पादसंगतित्वेन ग्रहणीयाः। शांकरव्याख्यानस्यैव अधिकसम्मतत्वेन दोषाल्पत्वात्। तत्रापि उपलभ्यमानाना भाष्याणां मध्ये प्राचीनतमत्वमपि शांकरव्याख्यानस्य उत्कर्षसाधकम्। शांकरव्याख्यानादीना खण्डनाय प्रवृत्ताना भाष्याणा शंकर-भाष्यादपि प्राचीनतरभाष्यादीनाम् अप्रदर्शनात् अपकृष्टत्वम् इत्यपि अवधेयम्।

एव च सर्वशास्त्रपारदृशा अलौकिक-शक्तिसम्पन्नानाम् आसमुद्र-हिमाचलविश्रान्त-सम्प्रदायप्रवर्त्तकानाम् अवतारकल्पानां महात्मनाम् आचार्याणाम् अनुमोदनाधिक्यम् अवलम्ब्य व्याससम्मतसूत्रार्थनिर्णय समुचित इत्येव अविसंवादिमार्गमेक परिकल्प्य, शंकरसम्मतपादार्थ एव व्यासानुमोदिता पादसगतिरिति उत्पश्याम।

इदानीं द्रष्टव्य कीदृशी सा पादसगति अधिकरणसगतिश्च इति, यच्च संगतिद्वयम् अधिकरणार्थनिर्णयद्वारा सूत्रार्थनिर्णये तथा च व्यासमतविनिर्णये आवश्यकम्। तत्र अधि-करणसगतिरत्र बहुविधा, यथा, आक्षेपिकी सगति, उदाहरणसगतिः, प्रत्युदाहरणसंगति, प्रसग-सगति, एकफलत्वसंगतिः, दृष्टान्तसंगति, उपजीव्योपजीवकभावसंगतिः, हेतुहेतुमद्भावसंगति-रित्याद्याः। एतासा बलाबलविनिर्णयद्वारा सूत्रव्याख्यानयौक्तिकत्वमपि निर्णेतव्यम्। यथा यदि केनचिद् आचार्येण अधिकरणविशेषस्य पूर्वाधिकरणेन सह सम्बन्धः क्रियते प्रसगसगत्या, तदनु-सारेण अधिकरणान्तर्गतसूत्राण्यपि व्याख्यायन्ते, अन्येन तु तदेव आक्षेपसंगत्या दृष्टान्तसगत्या वा कृत स्यात्, तदा प्रसगसगत्यनुसारिव्याख्यानात् अपरव्याख्यान युक्ततरमिति भवितुम् उचितम्। प्रसंगसंगत्या दुर्बलत्वात्। एवं च अन्यत्रापि यथासम्भवं बोद्धव्यम्। अतः अधिकरणसगतिरपि सूत्रार्थनिर्णये तथा व्यासमतविनिर्णये आवश्यकी। तथैव अधिकरण-मध्येऽपि, यत्र एकाधिकानि सूत्राणि वर्त्तन्ते तत्र सूत्राणाम् अर्थनिर्द्धारणे मिथः संगतिरपि उप-कारिणी भवति। तत्रापि यस्मिन् भाष्ये पूर्वसूत्रेण सह परसूत्रस्य प्रसंगसगत्या अर्थनिर्द्धारणं क्रियते, तत्र चेद् भाष्यान्तरे आक्षेपादि-संगत्या अर्थान्तर निर्दिष्ट स्यात्, तदा एतद् भाष्यान्तर-व्याख्यानमेव युक्ततर भवति। यथा आनन्दमयाधिकरणे अष्टाना सूत्राणा मध्ये सप्तम यत् "कामाच्च नानुमानापेक्षा" १।१।१८ इति सूत्र, तस्य वृत्तिकृन्मतेन यद् व्याख्यान तत्र साख्यमत-खण्डनात् तत्प्रासगिकम् इति उक्त दृश्यते, परन्तु भगवत्पादीयव्याख्याने तत्सूत्रार्थ आक्षेप-सगत्या सम्बध्यते। अत अत्र भगवत्पादीयव्याख्यानस्य केवल सगतिमात्रविचारेण युक्ततरत्वं कल्पयितु शक्यते। एव च एतादृशसगतिविचारस्य महदुपयोगित्व वर्त्तते एव।

परन्तु एतदर्थम् अस्माभि सूत्रकृताम् अधिकरणसूत्रयोः रचनाकौशलम् अवगन्तव्यम्। यत अधिकरणारम्भशेषयो तथा अधिकरणान्तर्गतविषयभेदस्यापि न किमपि निदर्शन सूत्रमध्ये प्रदर्शि सूत्रकृद्भिरिति प्रतीयते। विभिन्नभाष्येषु विषयेऽस्मिन् सम्यक् ऐकमत्यमपि न दृश्यते

एतच्च प्रागेव विस्तरेण प्रतिपादितम्। अतोऽस्माभिः अधुना कोऽप्युपायः निर्णेयः, येन सूत्रकृताम् अधिकरणसूत्रयोः रचनाकौशलं विज्ञायेत। नाप्यर्थं सम्भवति यत् सूत्रकृद्भिः न कोऽपि नियमोऽनुसृत, न चेदं युक्तं यत् सूत्रार्थबुभुत्सुभिः पाठकवृन्दैः व्याससम्मतसूत्रार्थं निर्णेतुं न शक्येत इति सूत्रकृतामाशय सम्भवेत्। अत नूनं किमपि निदर्शनम् अधिकरणसूत्ररचनार्थं प्रदत्तमेव सूत्रकृद्भिः।

एतदर्थं कतिचित् साधारणनियमाः सन्निबद्धाः अस्माभिः पूर्वस्मिन् पादे विशेषनियमास्तु संगृहीष्यन्ते इति तत्रैव प्रतिज्ञातमपि। अतोऽधुना अस्माभिः अधिकरणरचनाकौशले विशेषनियमाः आविष्करणीयाः तृतीयपादे। तैश्च नियमनिवहैः अधिकरणरचनाऽरचनाजन्यदोषादोषौ निर्णेतव्यौ। नियमनिरपेक्षनिर्णयफलेन सह नियमसापेक्षनिर्णयफले विवेचिते सति यस्य पक्षे दोषाल्पता भवेत् स एव पक्षः समीचीनः व्यासमतसम्मतश्च इत्येवं कल्पयितुं शक्यम्। सूत्राणां यादृशस्वल्पाक्षरत्वं गम्भीरार्थकत्वं तथा अस्पष्टत्वं च प्रतीयते, तेन निःसन्दिग्धतया व्यासमतनिरूपणं नितरां सदुष्करमेव, अथ किम् असम्भवमेव। विभिन्नाचार्याणां भाष्यरचनानैपुण्यं युक्तिपरिपाट्यादिकं च यथा अतुलनीयं तथैव अपरिमेयं च। अत व्यासमतसन्निकृष्टत्वनिरूपणमेव अत्र प्रयतामहे इति यावत्। सूत्रार्थविचारादिकं विना अधिकरणरचनारचनाविचारः कथं व्यासमतनिर्णयोपयोगीति अग्रे वक्ष्यते।

इति श्रीचिद्घनानन्दपुरी-विरचिते व्याससम्मत-ब्रह्मसूत्र-भाष्यनिर्णये

द्वितीयः पादः।

इति प्रथमो भागः।

# अथ तृतीयः पादः ।

## अधिकसम्मतनियमानुसारेण निर्णयः ।

भगवद्व्यासविरचितब्रह्मसूत्रग्रन्थस्य तदनुमोदितसूत्रार्थनिर्णयाय श्रुति ॥अध्यायपादाधिकरणादीनां विभागपूर्वकं संगतिनिरूपणम् एकं मुख्यं प्रयोजनं भवति । वस्तुतस्तु सा संगति तथा अधिकरणविभागश्च प्रत्येकं भाष्यस्य प्रायेण पृथक् पृथक् दृश्यते । अत ताद ॥धिकरण-संगतिप्रभृति-निरूपणेन व्यासानुमोदितसूत्रतात्पर्यनिर्णयार्थम् आसी तदनुमोदित भाष्यं निर्णेयम् । तदर्थम् इदानीम् अस्माभिः अधिकरणरचनायाः सूत्ररचनायाश्च विशेषनियमनिचय आविष्करणीय । यत सूत्ररचनायां तथा अधिकरणरचनायामेव व्यासमतस्य वैशिष्ट्यमस्ति । यथा सम्भवति, न तथा सूत्रार्थविचारे भवितुम् अर्हति, सूत्रार्थस्य श्रुत्यर्थाधीनत्वात् । श्रुत्यनुसारेणैव सूत्रार्थ करणीय, यत श्रुत्यर्थनिर्णयार्थमेव ब्रह्मसूत्रग्रन्थ रचित भगवता व्यासदेवेन इति हि सर्ववादिसम्मतम् । अतो न सूत्रार्थमध्ये व्यासमतवैशिष्ट्यं प्राचुर्येण पूर्णतया वा वर्तते, परन्तु सूत्राधिकरणरचनायामेव तत । तेन यदि सूत्राधिकरणरचनानियमनिवहा विनिर्णीता स्यु, तदा यावत्सम्मतब्रह्मसूत्रभाष्यनिर्णयप्रयासे अस्माकं कथञ्चित् सफलता प्राप्नुयात । यत तैश्च नियमै अत्र विभिन्नभाष्याणां दोषादोषनिर्णये कृते तेषां प्रतमत व्यासानुमोदितम् इति कथञ्चित् निर्णेतुं शक्यम् । अत अत्र अधिकरणरचनानियमा निरूपणीया भवन्ति । तत्र एकादश सामान्य नियमा प्रथमपादे सन्निबद्धा, एतदर्थं तेऽपि अत्र स्मर्तव्या । तेषाम् अधीनैव एते विशेषनियमा अधिकसम्मतत्वा सङ्कलनीया । ततश्च प्रथमत निरूपितनियमा पश्चाद् येन यत्र लङ्घ्यन्ते तत्र तस्य दोषेण भवितव्यम् इत्येव मन्तव्यम् । अथ यदि एतादृशलङ्घने अधिकसम्मतिरेव पुन आपद्येत—अधिकसम्मता आचार्या यदि पूर्वनिष्पन्ननियमविरोधिन स्यु, तदा ततोऽपि विशेषनियमसंकलनेन पूर्वनियमरक्षणं कर्तव्यं, न तु प्राङ्निष्पन्नस्य नियमस्य समहणं विकल्पनं वा समुचितं भवेत् । अत्र चेद् विशेषतरनियमसंकलनम् असम्भवि, तदा ते एव अधिकसम्मता आचार्या दूषणीया, व्यासमतविरुद्धत्वात् । नात्र संख्याधिक्येन पूर्वनियमनिष्पन्नस्य फलस्य अन्यथात्वं करणीयम्, अथवा अधिकसंख्यकानाम् आचार्याणामपि दोषकल्पनं न असंगतं भविष्यति । एवं च अधिकरणरचनानियमानाम् अनुसरणाननुसरणाभ्यां भाष्याणां दोषगुणविनिर्णय अत्र प्रस्तूयते । पूर्वस्मिन् पादे एतादृशनियमनिरपेक्षैरेव अस्माभि संख्याधिक्यसम्मतिरेव भाष्याणां दोषगुणनिर्णायकत्वेन परिकल्पिता, अत्र तु तृतीये पादे अधिकसम्मतनियमसापेक्षै अस्माभि भाष्याणां दोषगुणनिर्णय करिष्यते । अयमेव अत्र प्रभेद । तेन प्रत्येकम् अधिकरणं पृथक्तया अवलम्ब्य तदन्तर्गतसूत्राणि एकत्रीकृत्य भाष्याणां परीक्षणम् आरभ्यते ।

## अथ समन्वयनाम-प्रथमाध्याये प्रथमपादे
## प्रथमं जिज्ञासाधिकरणम् ।

अत्र प्रथमं जिज्ञासाधिकरणम् । तत्र—"अथातो ब्रह्मजिज्ञासा" १।१।१ इति एकेन सूत्रेण एतद् अधिकरणं रचितम् । अत्र सर्वे भाष्यकाराः अभिन्नमतावलम्बिनः । सूत्रस्थजिज्ञासापदम् आश्रित्य सर्वसम्मत्या एतस्य "जिज्ञासाधिकरण" नाम । एवं सूत्रपदसाहाय्येन अधिकरण-नाम-करण-रीतिरियं प्रायेण सर्वैः आचार्यैः सर्वत्र अनुसृतेति दृश्यते । यत्र कुत्रचित् एतस्य अन्यथात्वं भविष्यति, तत्र तत्र तच्च प्रदर्शनीयम् अस्माभिः । तत्र प्रायेण अधिकरणप्रतिपाद्यविषयानुसारेण अधिकरण-नाम-निर्देशः परिलक्ष्यते । परन्तु अधिकरणप्रतिपाद्यविषयनिर्देशे विप्रतिपत्ति-शंकापत्तेः प्रतिपाद्य-विषयानुसारेण अधिकरण-नाम-निर्देश-करणं सर्वत्र नाधिकैः समाश्रितम् इति । अधिकरणारम्भक-सूत्रपदेन अधिकरण-नाम-निर्देशरहस्यम् इत्येव सम्भाव्यते । अतः अधिकरणनामनिर्देशे अयमेको नियमः कल्पयितुं शक्यते, यत् "सूत्रान्तर्गतपदानुसारेण अधिकरण-नाम-करणं सम्पादनीयम्" इति । अत इत्येव अत्र एको विशेषनियमो भवतु । इति प्रथमो विशेषः नियमः ।

ततश्च अत्र ग्रन्थाध्यायपादानाम् आरम्भः । अत्र प्रथमसूत्रेण सर्वसम्मत्या अधिकरणारम्भ-दर्शनात् व्यापकारम्भे व्याप्यस्यापि तथात्वदर्शनात् अपर एको नियमः अत्र कर्तुं शक्यते, यत्—"अध्यायपादानाम् आरम्भे अधिकरणारम्भः नियमेन करणीयः" । तेनायम् अत्र द्वितीयो विशेष-नियमः भवतु । तेन यस्तु चतुर्थसामान्यनियमः—"सूत्रमध्ये उद्देश्यतया विधेयतया वा निराकाङ्क्ष-प्रथमान्त-पदसत्त्वम् अधिकरणारम्भसूचकम्" इति, भूमिकापादे प्रदर्शितः, तस्य नात्र उपयोगिता । तस्य एतद्द्वितीयनियमव्याप्यत्वात् । अतो "ब्रह्मजिज्ञासा" इति प्रथमान्तपदस्य अत्र अधि-करणारम्भसूचकत्वं न व्याहतम् । नियमोऽयम् पादमध्ये प्रयोज्यः । द्वितीयविशेष-नियम-बलेन पादारम्भे प्रथमान्तपदाभावेऽपि अधिकरणारम्भः करणीयः— इत्यपि फलबलात् आयातम् । यथा "सर्वत्र प्रसिद्धोपदेशात्" १।२।१ इत्यत्र अधिकरणारम्भो दृश्यते, प्रथमान्तपदाभावेऽपि । तेन ऊहनीयप्रथमान्तपदस्यापि अधिकरणारम्भकत्वम् इति विज्ञेयम् । पञ्चमसामान्यनियमोऽपि अत्र न प्रयोक्तव्यः । तेन अत्र "तद् ब्रह्म" इति प्रथमान्तपदस्य अध्याहर्तव्यत्वेऽपि तद्बलादेव न अस्य अधिकरणारम्भकत्वं, किन्तु पादारम्भादेव अस्य अधिकरणारम्भकत्वम् इति बोद्धव्यम् । इति द्वितीयः विशेषः नियमः ।

ततश्च एतत्सामान्य-नियम-बलेन अधिकरणसमाप्ति-सूचकनियमोऽपि आविष्कर्तुं शक्यते । स च 'यावत् अधिकरणारम्भक-तादृश-प्रथमान्तपदघटितं सूत्रं पुनरुपलभ्यते, तावद् आरब्धाधिकरणम् असमाप्तम्' इति । तेनायं तृतीयो विशेषनियमो भवितुम् अर्हति । अनेन अत्र "अथातो ब्रह्म-जिज्ञासा" इति एकेनैव सूत्रेण अधिकरणं रचनीयम् । यतो "जन्माद्यस्य यतः" १।१।२ इति द्वितीय-

सूत्रे "जन्मादि" इति निरपेक्षप्रथमान्तपदसत्त्वात् पृथगधिकरणारम्भ समुचित । अत "अथातो ब्रह्मजिज्ञासा" इति एकेन सूत्रेण प्रथमं जिज्ञासाधिकरणं समाप्तम् इति बोद्धव्यम्। इति तृतीय विशेष नियम ।

आचार्याणां मतभेदेन सूत्रार्थभेदात् अधिकरणावयवेष्वपि मतभेद संजात । स तु तत्तद् भाष्येभ्य अवगन्तव्य । तत्र सर्वभाष्यकाराणाम् एतेन सूत्रेण एतदधिकरणरचनायाम् ऐकमत्यात् न कस्यापि अत्र कश्चित् दोष इति बोद्धव्यम्।१।१।१

## द्वितीय जन्माद्यधिकरणम् ।

जन्माद्यस्य यत" १।१।२ इति द्वितीय सूत्रम् । अस्य 'जन्मादि"-पदात् अस्य 'जन्माद्यधिकरणं" नाम । वल्लभभाष्यमतेन "जन्माद्यस्य यत शास्त्रयोनित्वात्" इत्येव द्वितीय सूत्रम् । अन्येषां सर्वेषां मतेन 'जन्माद्यस्य यत" इति द्वितीय सूत्रम्, ततश्च "शास्त्रयोनित्वात्" इत्येवं तृतीयं सूत्रम् । तथापि सर्वैरेव आचार्यै अत्र द्वितीयम् अधिकरणं रचितम् । अत्र "जन्मादि" इति प्रथमान्तपदात् तथा "तद् ब्रह्म" इति प्रथमान्तपदाध्याहाराच्च अधिकरणारम्भ करणीय, चतुर्थ-पंचम-सामान्य-नियमाभ्याम् । अत्र अधिकरणरचना एतत्सामान्यनियमद्वयेनैव समाप्यते । एतदर्थं चतुर्थ सामान्य-नियमो द्रष्टव्य । अधिकरण-समाप्तिस्तु 'शास्त्रयोनित्वात" इति परसूत्रे 'सर्वज्ञं ब्रह्म" इति प्रथमान्तपदाध्याहारस्य आवश्यकत्वात् तेन च तस्य पृथगधिकरणत्वात् कल्पनीया । अध्याहृत प्रथमान्तपदबलेन तस्य अधिकरणारम्भणीयत्वात् । पञ्चम सामान्यनियमो द्रष्टव्य । वल्लभाचार्यभिन्नानां नवानाम् आचार्याणाम् मतेन "शास्त्रयोनित्वात्" इति सूत्रेण तृतीयम् अधिकरणं रचितम् । तेन अधिकसंख्यकाचार्यमतविरोधात् तथा सर्वसम्मतनियमविरोधाच्च वल्लभाचार्यमतम् अत्र सदोषमिति मन्तव्यम् । तथापि सूत्रद्वयैकीकरणात् तन्मते तृतीयसूत्रे पृथक् तया अध्याहारस्य अनावश्यकत्वात्, अन्येषाम् आचार्याणाम् मते तस्य आवश्यकत्वात्, वल्लभमतस्य उत्कर्ष कल्पनीय । परन्तु एतत्सूत्रद्वयस्य स्पष्टार्थविचारेण तथा विषयश्रुतिभेदेन च एतयो पृथक्सूत्रत्वं सगतम् इति मन्तव्यम् । एतत्तु अग्रे तृतीयाधिकरणविचारप्रसंगे व्यक्तीभविष्यति । तेन वल्लभभाष्यस्य अयम् उत्कर्ष लघुतां प्रयाति । इदानीम् अस्य अधिकरणावयवादिक विचार्यम्—

अत्र केचित् 'जन्म आद्यस्य यत" इति पदच्छेदम् इच्छन्ति । तन्न सम्यक् । अनादिसंसारे आद्यत्वं नास्ति । संसारस्य सादित्वे स्रष्टु वैषम्यनैर्घृण्यदोषापत्ति । कल्पान्तर्गत-सर्गीयादित्वकल्पने आदित्वस्य लाक्षणिकत्वापत्ति, आद्यस्य जन्ममात्रकथने स्थितिभंगबोधनाय उपलक्षण वक्तव्यं भवति । यतो वा इमानि" इति विषयश्रुतौ जन्मस्थितिलयानाम् उल्लेखो दृश्यते । तेन "जन्मादि" इति आदि-पदेन स्थितिभंगयो ग्रहणं स्वारसिकमेव । ततश्च आद्यस्य जन्मबोधिका श्रुति अत्र विषयत्वेन न केनापि परिगृहीता इति । अत एतादृशकारणकूटात् आद्यस्य जन्म इत्येवम्

अर्थकरणं न संगतम् । ततश्च आद्यस्य जन्महेतुत्वं कार्यब्रह्मणोऽपि सत्त्वात् सर्वकारण-कारण-रूपत्वेन ब्रह्मणः अत्र न जिज्ञास्यत्वम् आपद्यते । अत ईदृशी व्याख्या नादरणीयेति मन्यामहे । शाकरादपि प्राचीनतरस्य व्याख्यानस्य अप्रदर्शितत्वाच्च । अत. एतादृशी व्याख्या न रमणीया इति । तथापि अधिकरणरचनायां नात्र कस्यापि कोऽपि दोषः संजातः ।

## तृतीयं शास्त्रयोनित्वाधिकरणम् ।

"शास्त्रयोनित्वात्" १।१।३ इति तृतीयं सूत्रम् । अस्य शास्त्रयोनित्व-पदात् अस्य "शास्त्रयोनित्वाधिकरणं" नाम । वल्लभभिन्नानां नवानाम् आचार्याणाम् मते एतेन तृतीयसूत्रेण तृतीयम् अधिकरणं सम्मतम् । वल्लभमतेन एतत् सूत्रं "जन्माद्यस्य यत" इति द्वितीयसूत्रस्य शेषविशेषमात्रम् । अतः तन्मतेन एतत्सूत्रस्य अधिकरणारम्भकत्वम् असंगतम् । परन्तु तच्च चिन्त्यम् । "शास्त्रयोनित्वात्" इति एतत्सूत्रस्य हेतुबोधकाकाररूपत्वात् अन्वयानुरोधात् उद्देश्यविधेयरूपत्वेन प्रथमान्तपदाध्याहारः अत्र प्रथमत एव अपेक्षितः । तेन "तद् ब्रह्म सर्वज्ञम्" इत्येवं प्रथमान्तपदानि अत्र अध्याहर्तव्यानि इति कल्प्यते । तेन अध्याहृतप्रथमान्तपदबलेन अस्य अधिकरणारम्भकत्वं सगच्छते । एतदपि पञ्चमसामान्यनियमनिरूपणप्रस्तावे वर्णितमेव । एतदर्थं पञ्चम. सामान्य' नियमो द्रष्टव्यः ।

इदानीं द्रष्टव्यं वल्लभमतेन एतत्सूत्रद्वयस्य एकीकरणं संगतम् असंगतम् वा । तत्र "शास्त्रयोनित्वात्" इत्येतत्सूत्रस्य हेतुरूपत्वात् अन्वयानुरोधात् आकाङ्क्षानिवृत्तये च उद्देश्यविधेयबोधक पदद्वयमपि आवश्यकम् । तदृते सूत्रार्थ. न सम्भवति । ततश्च द्वितीयसूत्रीयविधेयात् अस्य विधेयभेदात् पृथक् सूत्रत्वमेव संगतम् । अतो युक्त्यापि एतस्य पृथक्सूत्रत्व समर्थितमेव । ततश्च दशानाम् आचार्याणां मध्ये नवानाम् ऐकमत्यात् पृथक्सूत्रत्वमेव अस्य समर्थयितव्यं भवति । अतोऽत्र विशेषनियम एक संकलनीय । स च इत्थम्—"उद्देश्यविधेयान्यतरभेदाद् अधिकरणभेदेन सूत्रभेद साधीयान् । अथवा अधिकरणावयवभेदबोधनात् विधेयभेदाद् वा सूत्रभेद युक्त' । किंवा अवयवविशेषस्य वैशिष्ट्यसाधनात् सूत्रभेद. करणीय' । अत्र विधेयभेदेन अधिकरणभेदात् सूत्रभेद युक्त' । तेन वल्लभभाष्यस्य अत्र दोष एव कल्पनीय' । इति चतुर्थ' विशेष नियमः ।

ततश्च अत्र निम्बार्कमतेनापि सह विरोधो दृश्यते । शंकर भास्कर-रामानुज-मध्व-श्रीकण्ठ-श्रीपति-वल्लभ-विज्ञानभिक्षु-बलदेव-प्रमुखा भाष्यकाराः सर्वे एकेनैव सूत्रेण अत्र अधिकरणं रचितवन्त, निम्बार्कभाष्ये तु "तत्तु समन्वयात्" इति परवर्त्तिसूत्रमपि एतदधिकरणान्तर्गतं कृतम् । "तत्तु समन्वयात" इति एकेनैव सूत्रेण निम्बार्काचार्य्यभिन्नै. सर्वैः आचार्य्यै. एकमेव अधिकरणं रचितम् । एतस्य अन्यथाचरणेन निम्बार्कभाष्यस्यैव तेन दोषस्पर्श' सञ्जात'—इति कल्पयितुं शक्यते ।

"तत् तु समन्वयात्" इत्यत्र 'तत्' इति प्रथमा तपवसत्त्वाद् अस्य पृथग् अधिकरणत्वं सुगतमेव। तेन च शास्त्रयोनित्वाधिकरणस्य एषैव सूत्रेण समाप्तिरपि सूचिता भवति।

ततश्च शांकरभाष्यानुसारेण एतस्य शास्त्रयोनित्वाधिकरणस्य वर्णकद्वयं दृश्यते। नैतत अन्येन केनापि भाष्यकारेण कृतम्। तेनाऽत्र शांकरभाष्ये दोष दृश्यते केश्चित। परं तु तत्र दोषत्वेन परिगणनीयं यावत शांकरात्पि प्राचीनतरभाष्यकरेन समर्थितं स्यात्। को जानाति सूत्र कृद्भगवत एतदधिकरणस्य वर्णकद्वयं नाभिप्रेतमिति। अतोऽत्र शांकरभाष्ये नोपपत्स्यना न संगता। सूत्राणां बह्वर्थसूचनम् अलंकाराय इति गण्यते सुधीभि बहुभि। एव च अत्र बलभनिम्बार्कभाष्ययो दोष सूचित इति। १।१।३

## चतुर्थं समन्वयाधिकरणम्।

"तत्तु समन्वयात्" १।१।४ इति चतुर्थं सूत्रम्। अस्य "समन्वय"—पदात् अस्य समन्वयाधिकरणं नाम। 'तत्' इति प्रथमान्तपदात् अत्र अधिकरणारम्भ निम्बार्कभिन्नै सर्वै आचार्यै कृत। निम्बार्कभाष्ये एतत् सूत्रं शास्त्रयोनित्वाधिकरणान्तर्गतं कृतम्। अत तत्र निम्बार्कमतेन प्रथमान्त पद-घटित-सामान्य-नियम-लघनं भवति। तेन इदम् अत्र तस्य दोषाय एव।

न च अत्र 'तु'—शब्देन अधिकरणरचनायां प्रथमान्त-पद-घटित-सामान्य-नियमान्तगत-निरपेक्षत्वस्य व्याघातात्, तेन च प्रथमान्त तत्पदस्य साकांक्षत्वप्रतिपादनात् सूत्रस्य एतस्य अधिकरणारम्भकत्वम् असंगतम् इति वाच्यम्। आशंकितपूर्वपक्षीयविधेयस्य पूर्वाधिकरणप्रतिपाद्यत पृथग् विषयत्वात्। पूर्वाधिकरणस्य विधेयन्तु "ब्रह्मण सर्वज्ञत्वं शास्त्रप्रमाणकत्वं" च, अत्र तु सर्व-शास्त्रसमन्वितत्वं विधेयम्। अत अधिकरणावयवभेदात् यथा सूत्रभेद कर्तव्य तथा विधेयभेदात् अधिकरणभेदोऽपि करणीय, चतुर्थमि तपनियमात। अत एतत्सूत्रेण पृथगधिकरणरचनं सुसंगतमेव। तेन निम्बार्कव्याख्यानम् अधिकरणरचनानियमविरुद्धमिति सिद्धयति। न केवल नियमविरुद्ध, परन्तु प्रमाणाम् आचार्याणाम् अपि विरोधि। अत्र तु "तु"—शब्देन प्रथमान्तपदस्य अधिकरणारम्भकत्व व्याहतम्, तत् अग्रे प्रदर्शयिष्यते। अतोऽत्र एक निम्बार्कभाष्यमेव दोषमस्तम् इति कल्पयितुं शक्यते। परसूत्रे पृथगधिकरणारम्भात् एतत्सूत्रान्तम् एतत् अधिकरणम्। एतच्च सर्वाचार्यसम्मतम्।

अत्रापि शांकरभाष्ये वर्णकद्वय वर्तते। नान्यै कैरपि एतत् समाचरितम् इत्यपि दृश्यते। रहस्य तु सुधीभिर्विवेचनीयम्। तथाहि शांकरमतेन कर्मणा सह यथा ज्ञानोपासनयो भेद तथा ज्ञानेन सह उपासनस्यापि भेद स्वीक्रियते। मतान्तरे तु नैतत् अंगीक्रियते। अत प्रथम-वर्णकेन कर्मणि श्रुतितात्पर्यत्व निरस्य द्वितीये तेन ज्ञानस्यैव तत् प्रदर्शितम् इति दिक्। १।१।५

## पञ्चमम् ईक्षत्यधिकरणम्।

अत्र "ईक्षतेर्नाशब्दम्" १।१।५ इतिसूत्रस्य "ईक्षति"—पदात् अस्य ईक्षत्यधिकरणं नाम।

अस्मिन् पञ्चमाधिकरणे शांकर-भास्कर-मध्व-वल्लभ-विज्ञानभिक्षु-बलदेवमतेन सप्त सूत्राणि, रामानुज-निम्बार्क-श्रीकण्ठ-श्रीपति मतेन तु अष्ट सूत्राणि परिगृहीतानि। "प्रतिज्ञाविरोधात्" इति एक सूत्रं रामानुजादिमतेन अतिरिक्तं गृहीतम्। एतत्तु शांकर-भास्कर-भाष्यद्वयमध्ये कथंचित् स्वपद-वर्णनीयभाष्यांशरूपेण दृश्यते। तद् यथा

अत्र शंकरभाष्यम्—"च-शब्दः प्रतिज्ञाविरोधाभ्युच्चय-प्रदर्शनार्थः। सत्यपि हेयत्ववचने प्रतिज्ञाविरोधः प्रसज्येत। कारण-विज्ञानाद्धि सर्वं विज्ञातम् इति प्रतिज्ञातम्। 'उत तम् आदेशम् अप्राक्ष्यः'—इत्यादि।

अत्र भास्करभाष्यम्—"अतः सच्छब्दवाच्यं चेतनं ब्रह्म इति निश्चीयते, प्रतिज्ञा-विरोधाच्च। 'उत तम् आदेशम् अप्राक्ष्यः येन अश्रुतं श्रुतं भवति, अमतं मतम्, अविज्ञातम् विज्ञातम्" इति।

शांकरभाष्यतः पूर्वतनभाष्यादीनां प्रमाणं विना सूत्रत्वेन अस्य ग्रहणेन स्वपदवर्णनस्य च भाष्यलक्षणत्वात्, तथा हि—

"सूत्रस्थं पदमादाय पदैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥"

इति वचनात्, एतत्सूत्रस्य शंकर-भास्कर-भाष्यांशत्वकल्पनं नासंगतम्।

तानि च अष्टसूत्राणि यथा—

| | |
|---|---|
| १। ईक्षतेर्नाशब्दम् १।१।५ | ५। प्रतिज्ञाविरोधात् १।१।८ (?) |
| २। गौणश्चेन्नात्मशब्दात् १।१।६ | ६। स्वाप्ययात् १।१।९ |
| ३। तन्निष्ठस्य मोक्षोपदेशात् १।१।७ | ७। गतिसामान्यात् १।१।१० |
| ४। हेयत्वावचनाच्च १।१।८ | ८। श्रुतत्वाच्च १।१।११ |

अत्र (१) "ईक्षतेर्नाशब्दम्" १।१।५ इत्यत्र "अशब्दम्" इति प्रथमान्तपदेन अधि-करणारम्भः संगच्छते। चतुर्थसामान्यनियमो द्रष्टव्यः। अत्र सर्वेषाम् ऐकमत्यं च।

(२) "गौणश्चेन्नात्मशब्दात्" १।१।६ इत्यत्र "गौण इति प्रथमान्तपदसत्त्वेऽपि न केनापि अधिकरणारम्भः कृतः, अतोऽत्र एको विशेषनियमः करणीयः। स च इत्थम् भवेत् "अथ यदि सूत्रमध्ये—"चेत्" "चेन्न" "इति चेन्न" इत्यादिपदसत्त्वं तदा अधिकरणं नारम्भणीयम्" इति। अग्रेऽपि प्रायेण एवमेव दृश्यते। अतो यत्र व्यभिचारशंका भवेत्, तत्र विशेषनियमेन सा निवर्तनीया। एतेन अधिकरणारम्भकत्वं निषिद्धम्। इति पञ्चमविशेषनियमः।

(३) "तन्निष्ठस्य मोक्षोपदेशात् १।१।७ अत्र प्रथमान्तपदाभावात् नात्र अधिकरणारम्भः करणीयः। अत्रापि सर्वेषाम् ऐकमत्यं दृश्यते। अन्वयार्थम् उद्देश्यविधेय-बोधक-प्रथमान्त-पदस्य

आवश्यकत्वेऽपि सूत्रार्थस्य साकांक्षार्थत्वात् नास्य अधिकरणारम्भकत्वं कल्पनीयम्, एतदर्थं चतुर्थसामान्यनियमो द्रष्टव्यः।

(४) "हेयत्वावचनाच्च" १।१।८ एतदपि तादृशम्। च-कारात् साकांक्षत्वमपि। अतः नाधिकरणारम्भः। चतुर्थसामान्यनियमात् षष्ठविशेषनियमाच्च। षष्ठविशेषनियमस्तु '१।१।१५" मन्त्रवर्णसूत्रे द्रष्टव्यः।

(५) "प्रतिज्ञाविरोधात्" १।१।० इति एतदपि तथा। परन्तु षट्सु भाष्येषु न एतत् गृहीतम्। सूत्रमेतत् शंकरभाष्यानुविशेष एवेति प्रतिभाति।

(६) 'स्वाप्ययात्" १।१।९ इदमपि पूर्ववत्। प्रथमान्तपदाभावात् चतुर्थसामान्यनियमात् च नास्य अधिकरणारम्भकत्वम्।

(७) गतिसामान्यात्" १।१।१० एतदपि तथैव। चतुर्थसामान्यनियमात्।

(८) 'श्रुतत्वाच्च" १।१।११ प्रथमान्तपदाभावात्, तदध्याहारेऽपि 'च'-कारात् साकांक्षत्वम्, अत एतदपि पूर्ववत्। चतुर्थसामान्यनियमात् षष्ठविशेषनियमाच्च। ततश्च इतः परम् "आनन्दमयोऽभ्यासात्" इति सूत्रेण अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिः संगतैव। तेन अधिकरणरचनायाम् अत्र न कस्यापि दोषः इति गम्यते।

## पञ्चम् आनन्दमयाधिकरणम्।

अत्र "आनन्दमयोऽभ्यासात्" १।१।१२ इति सूत्रस्य "आनन्दमय"-पदात् अस्य "आनन्दमयाधिकरणं" नाम। अस्मिन् अधिकरणे केवलं श्रीकण्ठाचार्यं विहाय सप्त आचार्याः अष्टसूत्राणि गृहीतवन्तः। श्रीकण्ठाचार्येण एतदधिकरणं द्विधा विभक्तं कृतं, यथा—प्रथमचतुर्भिः सूत्रैः एकम् अधिकरणम्, अन्तिमचतुर्भिः सूत्रैः अपरम् अधिकरणम्। तानि च अष्ट सूत्राणि यथा—

| | |
|---|---|
| १। आनन्दमयोऽभ्यासात् १।१।१२ | ५। नेतरोऽनुपपत्तेः १।१।१६ |
| २। विकारशब्दान्नेति चेन्न प्राचुर्यात् १।१।१३ | ६। भेदव्यपदेशाच्च १।१।१७ |
| ३। तद्धेतुव्यपदेशाच्च १।१।१४ | ७। कामाच्च नानुमानापेक्षा १।१।१८ |
| ४। मान्त्रवर्णिकमेव च गीयते १।१।१५ | ८। अस्मिन्नस्य च तद्योगं शास्ति। १।१।१९ |

अत्र (१) "आनन्दमयोऽभ्यासात्" १।१।१२ इति सूत्रे "आनन्दमय" इति प्रथमान्तपदात् अनेनैव अधिकरणारम्भः समुचितः। अत्र सर्वेषाम् ऐकमत्यं च दृश्यते। एतदर्थं चतुर्थसामान्यनियमो द्रष्टव्यः।

(२) 'विकारशब्दान्नेति चेन्न प्राचुर्यात्" १।१।१३ अत्र सूत्रमध्ये अन्वयार्थम् कस्यचित् प्रथमान्तपदस्य अध्याहारेऽपि 'इति चेन्न" इति पदात् नास्य अधिकरणारम्भकत्वम्। एतदर्थं पञ्चमविशेषनियमो द्रष्टव्यः।

( ३ ) "तद्धेतुव्यपदेशाच्च" १।१।१४ अस्य प्रथमान्तपदाभावात् नाधिकरणारम्भकत्वम्। च-कारात् अध्याहारे कृतेऽपि "तत्"-शब्देन साकाक्षत्वात् न तस्य विभिन्नविधेयबोधकत्वम्। अतो नास्यापि अधिकरणारम्भकत्वम्। चतुर्थसामान्य' नियम. तथा षष्ठविशेषनियमोऽत्र द्रष्टव्य'।

( ४ ) "मान्त्रवर्णिकमेव च गीयते १।१।१५ अत्र "मान्त्रवर्णिकम्" इति पदस्य प्रथमान्तत्वेऽपि उद्देश्यविधेयाभेदाद् अस्य नाधिकरणारम्भकत्वम् इति। सर्वेषु भाष्येषु एवमेव दृश्यते। न च च-कारस्य समुच्चायकार्थकत्वात् उद्देश्यविधेययोः मध्ये अनुक्तसन्निवेश शंक्य', तस्य हेतुसमुच्चायकार्थकत्वात्। अतः अत्र कस्यचित् विशेषनियमस्य प्रयोजनं, येन एतादृशस्थले सूत्राणाम् आकारमात्रदर्शनेन तेषाम् अधिकरणारम्भकत्वं वार्येत। स च नियमः इत्थम् भवेत् "चकारादिपदयोगात् अध्याहृतस्य अनध्याहृतस्य वा प्रथमान्तपदस्य सापेक्षत्वे सिद्धे नाधिकरणारम्भकत्वम्" इति। एतेन अत्र प्रथमान्तपदसत्त्वेऽपि अस्य अधिकरणारम्भकत्व व्याहतम्। अय तु चतुर्थसामान्यनियमस्य प्रतिप्रसवः। इति षष्ठ. विशेष नियम.।

( ५ ) "नेतरोऽनुपपत्तेः" १।१।१६ अत्र "इतरः" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्वं युक्त, तथापि "इतर"-शब्दस्य स्वरूपत एव सापेक्षत्वार्थकत्वात् तन्न युक्तम्। एतेन चतुर्थसामान्यमियमोक्तनिरपेक्षत्वार्थस्य व्याघातो भवति। श्रीकण्ठाचार्यस्तु एतेन पृथग् अधिकरणं रचयाचकार। तन्न सम्यक्। अधिकसम्मतेरभावात्, "इतर"-शब्दस्य सापेक्षत्वबोधकत्वेन युक्त्यननुकूलत्वाच्च। तथा च अपर एको नियमोऽत्र आवश्यक'। यथा—"इतरादिशब्दवत् स्वरूपत' सापेक्षत्वार्थकप्रथमान्तपदस्य न अधिकरणारम्भकत्वम्" इति। अयमपि चतुर्थसामान्यनियमस्य प्रतिप्रसव'। इति सप्तमः विशेष. नियमः।

( ६ ) "भेदव्यपदेशाच्च" १।१।१७ अत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। प्रथमान्तपदाध्याहारे कृतेऽपि च-कारात् साकाक्षत्वविधानात् तथैव चतुर्थसामान्यनियमात् षष्ठविशेषनियमाच्च न तत्।

( ७ ) "कामाच्च नानुमानापेक्षा" १।१।१८ अत्र "अनुमानापेक्षा" इति प्रथमान्तपदसत्त्वेऽपि नास्य पृथग् अधिकरणारम्भकत्वम्, एतच्च सर्वसम्मतमेव। "कामाच्च" इत्यत्र 'च'-शब्दयोगात् साकाक्षत्वविधानात् तन्निषेध, षष्ठविशेषनियमाच्च।

( ८ ) "अस्मिन्नस्य च तद्योगं शास्ति" २।२।१९ अत्र प्रथमान्तपदाभावात् न पृथगधिकरणारम्भ.। च-कारात् तदध्याहारेऽपि साकाक्षत्वात् तन्निषेध। षष्ठविशेषनियमात्। परसूत्रे पृथग् अधिकरणारम्भणात् अत्रैव अधिकरणसमाप्तिश्च सुसंगता इति।

शाकरभाष्ये अत्रापि वर्णकद्वयं दृश्यते। तत्र शाकरभाष्यटीकातः अवगम्यते—वृत्तिकारमतमेव प्रथमवर्णके एकदेशिमतत्वेन विवृतम्। स्वमतं च द्वितीये वर्णितम् इति।

उपवर्ष-बोधायनानुसारि-भास्कर-रामानुजाभ्यामपि सर्वैः वृत्तिकारमतव्याख्यानं गृहीतम्। एवं च सर्वत्र वृत्तिकारमतमेव प्रथमवर्णकप्रतिपाद्यम् एकदेशिमतम्। वृत्तिकारोऽपि एक एवाधिको वा इति तु सुधीभिर्विमर्श्यम्। शंकरस्य गुरुणाऽप्य गौडपादसाम्प्रदायिकत्वेन शंकरव्याख्यानं गौडपादानुमोदितमिति कल्पयितुं शक्यते। अयं च वृत्तिकारः बोधायनो वा उपवर्षो वा तत्र निर्णेतुं शक्यते। आपाततः यावन्ति प्रमाणानि उपलब्धानि तेभ्यः तयोः भेद एव प्रतिभाति इति। बोधायनानुगत-रामानुजव्याख्यानात् उपवर्षानुगत-भास्करव्याख्यानस्य भेदात्, रामानुजेन भास्करमतस्य खण्डनात्। अतः तौ भिन्नौ एवेति मन्यते। आस्तां तावत्। अत्र तु अधिकरणरचनायां श्रीशंकरभाष्यस्यैव दोषः, नापरस्य कस्यचित् इत्येव बोद्धव्यम्।

## सप्तमम् अन्तरधिकरणम्। १।१।७

अत्र "अन्तस्तद्धर्मोपदेशात्" १।१।२० इति सूत्रस्य "अन्तर्"-पदात् अस्य अन्तरधिकरणं नाम। अस्मिन् अधिकरणे सर्वैः आचार्यैः एकमत्येन सूत्रद्वयं गृहीतम्। तद् यथा

१। अन्तस्तद्धर्मोपदेशात् १।१।२० २। भेदव्यपदेशाच्चान्यः १।१।२१

अत्र (१) "अन्तस्तद्धर्मोपदेशात्" इति १।१।२० सूत्रे "अन्तर्" इति प्रथमान्तपदात् अधिकरणारम्भः चतुर्थसामान्यनियमानुगत एव। नात्र एतत् प्रथमान्तपदस्य सापेक्षत्वदोषः। 'अन्तर्' इत्यपि 'अथ य एष अन्तरादित्ये' इतिश्रुतेः विषयत्वात्। चतुर्थविशेषनियमो द्रष्टव्यः। नात्र अधिकरणदोषः, परसूत्रे अधिकरणस्य अनारम्भणात्।

(२) "भेदव्यपदेशाच्चान्यः" इति १।१।२१ सूत्रे निरपेक्षप्रथमान्तपदस्य अभावात् नात्र अधिकरणारम्भः समुचितः। "अन्यः" इति शब्दस्य प्रथमान्तत्वेऽपि तस्य स्वरूपतः साकाङ्क्षत्वात्। प्रथमविशेषनियमो द्रष्टव्यः। चकारयोगाच्च अध्याहृतस्यापि साकाङ्क्षत्वात् अत्र नाधिकरणारम्भः षष्ठविशेषनियमात्। परसूत्रे अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिः संगच्छते। अत्र न कस्यापि भाष्यस्य दुष्टत्वम्, अतः न कस्यापि दोषः।

## अष्टमम् आकाशाधिकरणम्। १।१।८

अत्र 'आकाशस्तल्लिङ्गात्' १।१।२२ इति एकेन सूत्रेण इदम् अधिकरणं रचितं सर्वैरेव भाष्यकारैः। अस्य "आकाश" इति शब्दात् एतस्य "आकाशाधिकरणम्" नाम। परसूत्रेण पृथगधिकरणारम्भणात् अत्रैव अधिकरणसमाप्तिः समुचिता। "आकाश" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वम्। एतदर्थं चतुर्थसामान्यनियमो द्रष्टव्यः। अत्रापि न कस्यापि दोषः। सर्वेषामेव ऐकमत्यात्।

## नवमं प्राणाधिकरणम्। १।१।९

अत्रापि "अतएव प्राणः" १।१।२३ इति एकेनैव सूत्रेण एकम् अधिकरणं रचितं

सर्वैरेव भाष्यकारैः। अस्य सूत्रस्य "प्राण"-शब्दात् एतस्य "प्राणाधिकरणं" नाम। ततश्च "प्राण" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमानुसारेण। परसूत्रे अधिकरणारम्भणात् अत्रैव अधिकरण-समाप्तिरपि संगच्छते। अत्रापि अधिकरणरचनायां न कस्यापि दोषः।

## दशम ज्योतिश्चरणाधिकरणम् १।१।१०

अत्र "ज्योतिश्चरणाभिधानात्" १।१।२४ इति सूत्रे "ज्योतिश्चरण"-इति पदात् अस्य "ज्योतिश्चरणाधिकरणं" नाम। मध्वाचार्यभिन्नैः सर्वैः सप्तभिः आचार्यैः अत्र चतुर्भिः सूत्रैः अधिकरणं रचितम्। मध्वाचार्यस्तु केवलं "ज्योतिश्चरणाभिधानात्" इति एकेन सूत्रेण एकम् अधिकरणम्, अवशिष्टसूत्रत्रयेण च अपरम् एकम् अधिकरणं रचयामास। तानि च चत्वारि सूत्राणि यथा

१। ज्योतिश्चरणाभिधानात् १।१।२४

२। छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथाहि दर्शनम् १।१।२५

३। भूतादिपादव्यपदेशोपपत्तेश्चैवम् १।१।२६

४। उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् १।१।२७

अत्र (१) "ज्योतिश्चरणाभिधानात्" १।१।२४ इति सूत्रे "ज्योति" इति प्रथमान्तपदात् अनेन अधिकारणारम्भः चतुर्थसामान्यनियमानुगत एव।

(२) "छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथाहि दर्शनम्" १।१।२५ अत्र दर्शनम् इति प्रथमान्तपदसत्त्वेऽपि "इति चेन्न" इति पदात् नास्य अधिकरणारम्भकत्वम्। एतदर्थं पञ्चमविशेषनियमो द्रष्टव्यः। मध्वाचार्येण अत्र अधिकरणरचनात् तस्यैव दोषः, बहुमतविरोधात् चतुर्थसामान्यनियमविरोधाच्च।

(३) "भूतादिपादव्यपदेशोपपत्तेश्चैवम्" १।१।२६ अत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। "एवम्" इति न प्रथमान्तं, किन्तु द्वितीयान्तमेव। प्रथमान्तस्य अध्याहृतत्वेऽपि चकारेण साकाङ्क्षत्वात् तन्निषेधः, षष्ठविशेषनियमात् इति।

(४) "उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् १।१।२७ इत्यत्र "इति चेन्न" इति पदात् नास्य अधिकारणारम्भकत्वम्, पञ्चमविशेषनियमो द्रष्टव्यः। एवं च अस्मिन् अधिकरणे मध्वभाष्यमेव दूषणीयम्। परसूत्रे अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिः सुसङ्गतेति बोद्धव्यम्।

## एकादशं प्रतर्दनाधिकरणम् ।१।१।११

अत्र अधिकरणविषयश्रुतिप्रसङ्गानुसरेण "प्रतर्दनाधिकरणम्" इति अधिकरणनाम। सूत्रपदानुसारेण नामकरणे कृते अस्यापि "प्राणाधिकरणम्" नाम भवितुम् उचितम्। परन्तु नवमम् अधिकरणं तन्नाम्ना प्रसिद्धिं गतं प्रागेव, अतः अत्र अन्यः पन्थाः अवलम्बितः। तेन

नात्र अधिकरणारम्भःतस्मात्पदानुसारेण नामकरण समुचितम् । अतोऽयं नियमो भवतु–"विरोधे सति प्रतिपाद्याद्यनुसारेण अधिकरणनाम करणीयम्" इति । अयमेव अष्टमो नियम ।

अत्र सर्वे भाष्यकारै चत्वारि सूत्राणि गृहीतानि । तानि च सूत्राणि यथा—

१। प्राणस्तथानुगमात् १।१।२८

२। न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ।१।१।२९

३। शास्त्रदृष्ट्या तूपदेशो वामदेववत् १।१।३०

४। जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ।१।१।३१

अत्र (१) "प्राणस्तथानुगमात्" १।१।२८ इति सूत्रे प्रथमान्त "प्राण"-पदात् अनेने अधिकरणारम्भ चतुर्थसामान्यनियमानुगत एव ।

(२) "न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्" १।१।२९ अत्र "अध्यात्मसंबन्धभूमा" इति प्रथमान्तपदसत्त्वेऽपि 'चेत्'-शब्दात् नाधिकरणारम्भ इति पञ्चमविशेषनियमेन सिध्यति ।

(३) "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" १।१।३० अत्र 'उपदेश' इति प्रथमान्त पदसत्त्वेऽपि नाधिकरणारम्भः कैरपि कृत । अतोऽत्र कश्चिद् अवान्तरविशेषनियम सकल्पनीय, येन नियमानुसारित्वमस्य सिध्येत् । स च नियम एव भवेत्—"यत्र अनिषेधार्थक तु'शब्देन सह प्रथमान्तपदसत्त्वं तत्र तेन नाधिकरणारम्भ करणीय" इति । अत्र 'तु'-शब्द अर्थसंकोचार्थक आंशिकनिषेधवाचको वा, अत नात्र दोष । "तत्तु समन्वयात्" १।१।४ इति सूत्रे य 'तु' शब्द स तु सम्पूर्णतया निरस्यति पूर्वपक्षीयशङ्काम्, अत तत्र स तु-शब्द निषेधार्थक । अत्र 'तु'-शब्देन पूर्वपक्षीयशङ्का न सम्पूर्णतया निषिद्धा, तेन स संकोचार्थक । इति नवमो नियम ।

(४) 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्" १।१।३१ अत्र प्रथमान्तपदाभावात् नाधिकरणारम्भ पृथक्तया कृत । अध्याहारेऽपि उद्देश्यविधेययो न भेद सम्भवति । अत नाधिकरणम् आरम्भणीयम् इति । "चेत्"-शब्द-योगाच्च । पञ्चमविशेषनियमात् । अत्रैव सर्वसम्मत्या पादसमाप्ते अधिकरणसमाप्तिश्च सङ्गतेति बोद्धव्यम् । अत्रापि न कस्यचिद् भाष्यस्य अधिकरणरचनाजन्यदोष सजात ।

इदानीं चिन्तनीयं कथम् अत्र पादसमाप्ति अवगन्तव्या इति । ग्रन्थसमाप्तौ यथा अन्तिमसूत्रस्य द्विर्वचनम् "अनावृत्ति शब्दात् अनावृत्ति शब्दात्" (४।४।२२)इति, तथा अध्यायसमाप्तौ यथा अन्तिमसूत्रस्यस्य अन्तिमपदस्याभ्यास 'एतेन सर्वे व्याख्याता व्याख्याता "(२।४।२८)इति च, तथा पादसमाप्तौ न किमपि निदर्शन दृश्यते । न केनापि भाष्यकारेण एतदर्थं किमपि उक्तम् । सूत्रार्थालोचनेन नास्य निर्णय सम्भवति । व्याख्याकौशलेन सर्वे सर्वं प्रतिपादयितुं शक्यम् । अत

सूत्राणाम् आकारमात्रदर्शनेन एतस्य मीमांसाया यदि कोऽपि उपाय. अस्थास्यत्, तदैव शोभनम् अभविष्यत् । परन्तु एतस्य न किमपि निदर्शनं लभ्यम् । अतोऽत्र कल्प्यते व्यासशिष्यसम्प्रदायक्रमेण शिक्षा एवात्र शरणम् । तेनात्र अनुमीयते—"स्वरितेनाऽधिकारः" इति सूत्रानुसारेण पाणिनीयव्याकरणसूत्रपाठवत् स्वरितादिस्वरयोगेन एतत्सूत्रपाठार्थं कश्चित् नियमः सम्प्रदायमध्ये प्रचलित आसीदिति । एतज्जातीय' अपर कोऽपि नियम अधिकरणशेषार्थं सूत्रशेषार्थं चापि आसीदेव । स च नियम परिवर्तिकाले बौद्धादिविरुद्धमतप्राबल्यात् सर्वेषा विस्मृति गत. । अतएव एतादृशेषु विषयेषु भाष्यकाराणा मतभेदबाहुल्यं सञ्जातम् । तेन व्यासानुमोदितसूत्रार्थनिर्णये व्याससम्प्रदायानुसारि-व्याख्यानाविष्करणमेव मतभेदनिराकरणाय सम्यक् पन्था. । पादशेषनिर्णयप्रसंगे एतदेव अस्माकं कल्पनम् । अथ कोऽसौ व्यास-सम्प्रदाय' कतमत् भाष्यं वा तादृशसम्प्रदायानुसारि इत्यादिकं सर्वम् अग्रे वक्ष्यते ।

## प्रथमाध्याय प्रथमपादसमालोचनम् ।

इदानीं द्रष्टव्यम् अनेन निबन्धेन अस्मिन् पादे अधिकरणरचनायाम्

( १ ) कति कीदृशाश्च नियमा संकलिता.,

( २ ) कति च दोषा कस्य भाष्यस्य कथं संवृत्ता.,

( ३ ) काश्च श्रुतय कैश्च सूत्रै उपजीव्यत्वेन गृहीता,

( ४ ) उपजीव्यश्रुतिबलेन कीदृशी च पादसंगति. भवितव्या इति ।

एते चत्वारो विषया अत्र क्रमेण प्रदर्शनीयाः । तेन षोडशपादानाम् अन्ते एतेषाम् सर्वेषाम् निरूपणानाम् उपसहारे कृते अधिकरणरचननियमानुसारेण कस्य भाष्यस्य कीदृशं व्यासमतानुसारित्वं तत् अनायासेन अवगन्तुं शक्यम् । अत्र प्रथमं तावत द्रष्टव्यम्

**( १ ) कति कीदृशाश्च नियमाः संकलिता'** इति ।

तत्र प्रथमो नियम सूत्रान्तर्गतपदानुसारेण अधिकरणनामकरणं सम्पादनीयम् । ( १ म सूत्रम् )

द्वितीयो निमय अध्यायपादारम्भे अधिकरण करणीयम् । ( १ म सूत्रम् )

तृतीयो नियम यावन्न अधिकरणारम्भक-प्रथमान्तपदघटितं सूत्र पुनरुपलभ्यते तावद् आरब्धाधिकरणम् असमाप्तम् । ( १ म सूत्रम् )

चतुर्थो नियम उद्देश्यविधेयान्यतरभेदात सूत्रभेद तथा अधिकरणभेदोऽपि साधीयान् । ( ३ य सूत्रम् )

पञ्चमो नियम यदि सूत्रमध्ये "चेत्" "नेत्र" "इति चेन्न" इत्यादि पदसत्त्वं तदा अधिकरणं नारम्भणीयम । ( ६ ष्ठ सूत्रम )

षष्ठो नियम --च-कार-योगात प्रथमान्तपदस्य सापेक्षत्वे सिद्धे नाधिकरणारम्भकत्वम । (१७ शम् )

सप्तमो नियम —'इतरा''दिशब्दवत् स्वरूपत सापेक्षार्थक-प्रथमान्तपदसत्त्वेऽपि अधिकरणं नारम्भणीयम्। ( १६ श सूत्रम् )

अष्टमो नियम —बाधे सति प्रतिपाद्यानुसारेण अधिकरणनाम करणीयम्। ( २८ श सूत्रम् )

नवमो नियम —यत्र अनिषेधार्थक-'तु' शब्देन सह प्रथमान्तपदसत्त्व तत्र तेन नाधिकरणारम्भ करणीय। ( ३० श सूत्रम् )

एते च नव नियमा प्रथमाध्याये प्रथमपादे संकलिता। इदानीं द्रष्टव्यम्—

**( २ ) कति च दोषा कस्य भाष्यस्य कथ सख्या इति।**

तृतीयाधिकरणे "शास्त्रयोनित्वात्" १।१।३ इति तृतीयसूत्रे अधिकरणस्य अरचनायां वल्लभभाष्ये दोष।

चतुर्थाधिकरणे "तत्तु समन्वयात्" १।१।४ इति चतुर्थसूत्रे अधिकरणस्य अरचनायां निम्बार्कभाष्ये दोष।

पष्ठाधिकरणे—'नेतरोऽनुपपत्ते" १।१।१६ इति षोडशसूत्रे अधिकरणस्य रचनायां श्रीकण्ठभाष्ये दोष।

दशमाधिकरणे—'छन्दोऽभिधानान्नेति चेन्न "१।१।२५ इति पञ्चविंशसूत्रे अधिकरणस्य रचनायां माध्वभाष्ये दोष।

तेन अस्मिन् पादे अधिकरणरचनानियमानुसारेण निम्बार्क-माध्व-श्रीकण्ठ-वल्लभ-भाष्याणाम् एकैक दोष संजात।

तत्र अधिकरणरचनायां श्रीकण्ठ-माध्व-भाष्ययो दोष, अधिकरणस्य अरचनायां निम्बार्क-वल्लभ-भाष्ययो दोष। एवं च विभागचित्रम्—

| | अधिकरणस्य अरचनायाम् | अधिकरणस्य रचनायाम् | |
|---|---|---|---|
| वल्लभभाष्ये | १ | ० | दोष |
| निम्बार्कभाष्ये | १ | ० | ” |
| श्रीकण्ठभाष्ये | ० | १ | ” |
| माध्वभाष्ये | ० | १ | ” |

अथ द्रष्टव्यं शांकरभाष्यानुसारेण—

**( ३ ) काश्च श्रुतयः कैश्च सूत्रैः उपजीव्यत्वेन गृहीताः इति।**

तत्र प्रथमाधिकरणे—

"अथातो ब्रह्मजिज्ञासा" इति प्रथमसूत्रे वेदान्तवाक्यविचार विषयत्वेन गृहीत। तेन 'आत्मा वा रे द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्य" ( बृ० २।४।५ ) इत्याद्या श्रुतय उपजीव्यत्वेन ग्रहणीया इति।

द्वितीयाधिकरणे

"जन्माद्यस्य यतः" इति द्वितीयसूत्रे "सत्यं ज्ञानम् अनन्तं ब्रह्म" ( तै॰ २।१ ); "यतो वा इमानि भूतानि जायन्ते" ( तैः ३।२ )

तृतीयाधिकरणे

"शास्त्रयोनित्वात्" इति तृतीयसूत्रे "अस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदः" ( बृ २।४।१० ) "वाचा विरूप नित्यया" ( ? )

"तं त्वौपनिषदं पुरुषम्" ( बृः ३।९।२६ )

चतुर्थाधिकरणे

"तत्तु समन्वयात्" इति चतुर्थसूत्रे सर्वे वेदान्ताः विषयत्वेन गृहीताः ।

पञ्चमाधिकरणे

"ईक्षतेर्नाशब्दम्" इति पञ्चमसूत्रे "सदेव सोम्येदमग्र आसीत्, तदैक्षत" (छा. ६।१।२,३)

"गौणश्चेन्नात्मशब्दात्" इति षष्ठसूत्रे "तत्तेज ऐक्षत" "ता आप ऐक्षन्त" (छाः ६।२।३,४)

"सेयं देवता" (छा॰ ६।३।२) "अनेन जीवेन आत्मना" (छाः ६।३।२)

"तन्निष्ठस्य मोक्षोपदेशात्" इति सप्तम सूत्रे "स आत्मा तत्त्वमसि" (छा. ६।८।७) ।

"अथ सम्पत्स्ये" ( छा. ६।१४।२ )

"हेयत्वावचनाच्च" इति अष्टमसूत्रे "स आत्मा तत्त्वमसि" ( छा. ६।१४।२ )

"स्वाप्ययात्" इति नवमसूत्रे—"सता सोम्य तदा सम्पन्नो भवति" ( छा. ६।८।१ )

"गतिसामान्यात्" इति दशम सूत्रे "आत्मन आकाशः सम्भूतः" ( तै॰ २।१ )

"श्रुतत्वाच्च" इति एकादशसूत्रे "स कारणं कारणाधिपाधिपः न चास्य कश्चित् जनिता न चाधिपः" । ( श्वे. ६।९ )

षष्ठाधिकरणे

"आनन्दमयोऽभ्यासात्" इति द्वादशसूत्रे "अन्नमयः" (तै.२।१), "अन्योऽन्तर आत्मा आनन्दमयः" (तैः२।५), "सत्यं ज्ञानम् अनन्तं ब्रह्म" (तैः २।१ ), "ब्रह्म पुच्छं प्रतिष्ठा" ( तैः २।५ ) "असन्नेव स भवति" ( तै. २।६ )

"विकारशब्दान्नेति चेन्न"—इत्यादि त्रयोदशसूत्रे—हेतुप्रदर्शनमात्रं कृतम् ।

"तद्धेतुव्यपदेशात्" इति चतुर्दशसूत्रे "एष ह्येवानन्दयाति" ( तैः २।७ ) "इदं सर्वमसृजत" ( तै. २।६ )

"मान्त्रवर्णिकमेव च गीयते" इति पञ्चदशसूत्रे "ब्रह्मविद् आप्नोति परम्" "सत्यं ज्ञानम् अनन्तं ब्रह्म" ( तैः २।२ )

"नेतरोऽनुपपत्ते" इति पोडशसूत्रे 'सोऽकामयत बहुस्याम् प्रजायेय।' (तै २।६) (छा ६।२।३)

"भेदव्यपदेशाच्च" इति सप्तदशसूत्रे "रसो वै स रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" (तै २।७)

कामाच्च नानुमानापेक्षा" इति अष्टादशसूत्रे "सोऽकामयत" (तै २।६) "आनन्दो ब्रह्म" (तै ३।६)

"अस्मिन्नस्य च तद्योगं शास्ति" इति ऊनविंशसूत्रे—'यदा ह्येवैष एतस्मिन् अदृश्ये अनात्म्ये अनिरुक्ते" (तै २।७)

सप्तमाधिकरणे—

"अन्तस्तद्धर्मोपदेशात्" इति विंशसूत्रे "अथ य एष अन्तरादित्ये हिरण्मय पुरुष" (छा १।६।६) "एष अन्तरक्षिणि"। (१।७।५)।

"भेदव्यपदेशाच्चान्य" इति एकविंश सूत्रे "य आदित्ये तिष्ठन्" (बृ ३।७।९)।

अष्टमाधिकरणे—

"आकाशस्तल्लिंगात्" इति द्वाविंश सूत्रे "अस्य लोकस्य का गतिरिति आकाश इति होवाच" (छा० १।९।१) "आकाशो ह्येवेभ्य" (छा १।९।१)

नवमाधिकरणे—

अतएव" प्राण इति त्रयोविंश सूत्रे "प्रस्तोतर्या देवता„ (छा १।११।४) 'कतमा सा देवतेति प्राण इति होवाच' (छा १।११।४-५) "प्राणमेवाभिसंविशन्ति" (छा १।११।५ 'प्राणं तर्हि वाचप्येति" (श ब्रा १०।३।३।६)

दशमाधिकरणे—

"ज्योतिश्चरणाभिधानात्" इति चतुर्विंशसूत्रे "अथ यदत परो दिवो ज्योति दीप्यते " (छा ३।१३।७) "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृत दिवि" (छा ३।१२।६)

"छन्दोऽभिधानान्नेति चेन्ने—'इत्यादि पञ्चविंश सूत्रे "गायत्री वा इदं सर्वम्" (छा ३।१२।१) "एत ह्येवबह्वृचा महत्युक्थ" मीमांसन्ते" (ऐ आ ३।२।३।१२)

"भूतादिपादव्यपदेशोपपत्तेश्चैवम्" इति षड्विंशसूत्रे "चतुष्पदा गायत्री" (छा ३।१२।५)

"उपदेशभेदान्नेति चेन " इत्यादि सप्तविंशसूत्रे हेतुप्रदर्शनमात्रम्।

एकादशाधिकरणे—

"प्राणस्तथानुगमात्" इति अष्टाविंशसूत्रे "हिततमं मन्यसे" (कौ ३।१) "अथ खलु प्राण एव (कौ ३।२)

"न वक्तुरात्मोपदेशादिति चेत—"इत्यादि ऊनत्रिंशसूत्रे "मामेव विजानीहि' (कौ ३।१) 'यावद् हि अस्मिन् शरीरे प्राण वसति तावदायु" (कौ ३।२) "स एष प्राण एव प्रज्ञात्मानन्दोऽमृत" (कौ ३।८)

"शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति त्रिंशसूत्रे "मामेव विजानीहि" (कौः ३।१) "अहं मनुरभव सूर्यश्च" ( बृ. १।४।१० )

"जीवमुख्यप्राणलिंगान्नेति चेन्न " इत्यादि एकत्रिंशसूत्रे "वक्तारं विद्यात्" (कौः ३।८) "इदं शरीरं परिगृह्य उत्थापयति" (कौ. ३।३) "मामेव" "प्राणोऽस्मि" "स एष प्राणः एष प्रज्ञात्मा।" ( कौ ३।१-८ )

इदानीं द्रष्टव्यम् एतादृशसूत्रोपजीव्यश्रुतिबलेन—

## ( ४ ) कीदृशी अस्य पादसंगति ।

सूत्रस्थपदसन्दर्भेण तथा सूत्रोपजीव्यश्रुतितात्पर्यसन्दर्शनेन अतिस्पष्टतया प्रतिभाति यद् अत्र—"ब्रह्मात्मापुरुषसदानन्दमयाकाशज्योतिप्राणप्रभृतीनां पदानां ब्रह्मपरत्वेन प्रतिपाद्यते। एतेन एतत्पादप्रतिपाद्य स्पष्टब्रह्मलिंगकश्रुतिवाक्यानां समन्वयः इति कल्पयितुं शक्यते । अयमेव एतत्पादार्थः शांकरभाष्यानुसारेण तथा अधिकांशभाष्यकारसम्मत्या । मतभेदेन पादार्थादिकं भूमिकाख्य-प्रथमपादे एव वर्णितम्। तद् यथा

शांकरमते—सुस्पष्टब्रह्मबोधकश्रुतिवाक्यानां समन्वयः ।

भास्करमते—प्रायेण शांकरमतानुरूपम् ।

रामानुजमते—अस्पष्टतरजीवादिलिंगकानि वाक्यानि विचारितानि ।

माध्वमते—नामात्मकानाम् अन्यत्र प्रसिद्धानां शब्दानां विष्णौ समन्वयः ।

निम्बार्कमते—जिज्ञास्ये श्रीवासुदेवे श्रुतीनां समन्वयः ।

श्रीकण्ठमते स्पष्टब्रह्मलिंगवाक्यविचार ।

श्रीकरमते—परमशिवब्रह्मलिंगवाक्यसमन्वयाभिधानम् ।

एतेषां मतभेदानां सम्यक् पर्यालोचने कृते स्पष्टब्रह्मलिंगकश्रुतिवाक्यसमन्वय एव एतत्पादसंगतित्वेन ग्रहणीय । अनया पादसंगत्या एतत्पादान्तर्गताधिकरणानि सर्वाणि व्याख्येयानि, ततश्च तादृशाधिकरणार्थानुसारेण सर्वाणि सूत्राण्यपि विवृतव्यानि । एवं च श्रुतिवाक्यानां ब्रह्मण्येव तात्पर्यम् इति प्रदर्शनपरत्वमेव एतत्पादान्तर्गतसूत्रार्थः पर्यवसितः । तेन ब्रह्मण सगुणत्व-निर्गुणत्वादिकं द्वैतत्वाद्वैतत्वादिकमपि नात्र पादे मुख्यत्वेन वर्णनीयम्, किंतु प्रसंगत एवेति बोद्धव्यम् । एवं च "जन्माद्यस्य यत ,, (१।१।२) इति सूत्रत. "आनन्दमयोऽभ्यासात्,, (१।१।१२) इति सूत्रतो वा यदि ब्रह्मणः सगुणत्व प्रतिपादयितुं कोऽपि इच्छेत्, तथैव "नेतरोऽनुपपत्ते,, ( १।१।१६ ) इतिसूत्रात् "भेदव्यपदेशाच्च १।१।१७" इति सूत्राद् वा जीवब्रह्मभेदं प्रतिपादयितु कोऽपि अभिवाञ्छेत्, तदा तस्य चेष्टा न संगता भविष्यति, एवंजातीयविषयाणामत्र प्रसंगत उक्तत्वात्. यत्र यन्मुख्यत्वेन उक्तम् तदेव तत्र प्रमाणं भवितुम् उचितम् । प्रसंगत उक्तानां गौणप्रमाणत्वम्, प्रयोजनानुरोधेन तस्य अन्यथाकरणं न दूषणीयम्। तथापि एतादृशे

प्रसंगाधीनविचारफले आग्रहश्चेत् तदा पादसंगतीनां शास्त्रसंगतिव्याप्यत्वात् तादृशविचारफलं शास्त्रसंगतिरूपब्रह्मप्रतिपाद्यविषयानुकूलं करणीयम्। शास्त्रप्रतिपाद्यत्वं च प्रथमपादे भूमिकारूपे विवृतम्। तच्च एतत् शास्त्रस्य निर्विशेषाद्वैतब्रह्मपरत्वम्। तस्य पुनः प्रतिपादनमत्र बाहुल्यमेव। अतोऽत्र विरम्यते। तेन पूर्वोद्धृतसूत्रनिवहे ब्रह्मणः सगुणत्वं तथा जीवब्रह्मणोः भेदादिकं न कल्पनीयम्।

## इति प्रथमपादोपसंहारः

---

# अथ प्रथमाध्याये द्वितीयपादः।

## प्रथमं सर्वत्रप्रसिद्धाधिकरणम्।

अत्र सर्वसम्मत्या पादारम्भः दृश्यते। अतोऽत्र अधिकरणारम्भः समुचितः। अत्र "सर्वत्र प्रसिद्धोपदेशात्" १।२।१ इति सूत्रस्य "सर्वत्र प्रसिद्ध" शब्दात् अस्य "सर्वत्रप्रसिद्धाधिकरणं" नाम। श्रीकण्ठ-वल्लभ-भाष्यभिन्नेषु सर्वेषु भाष्येषु अत्र अष्टसूत्राणि गृहीतानि, श्रीकण्ठस्तु प्रथम-सूत्रद्वयेन एकम् अधिकरणम्, अवशिष्टैः षड्भिः सूत्रैः द्वितीयम् अधिकरणं कृतवान्। वल्लभभाष्ये तु प्रथमचतुर्भिः सूत्रैः एकम् अधिकरणं, ततः पञ्चमादिचतुर्भिः सूत्रैः अन्यत् अधिकरणं रचितम्। तानि च अष्टसूत्राणि यथा—

१। सर्वत्रप्रसिद्धोपदेशात् १।२।१ ( ३२ )
२। विवक्षितगुणोपपत्तेश्च १।२।२ ( ३३ )
३। अनुपपत्तेस्तु न शारीरः १।२।३ ( ३४ )
४। कर्मकर्तृव्यपदेशाच्च १।२।३ ( ३५ )
५। शब्दविशेषात् १।२।५ ( ३६ )
६। स्मृतेश्च १।२।६ ( ३७ )
७। अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च १।२।७ ( ३८ )
८। सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् १।२।८ ( ३९ )

तत्र ( १ ) 'सर्वत्र प्रसिद्धोपदेशात्" ( १।२।१ ) इति सूत्रेण सर्वसम्मत्या पादारब्धत्वात् अधिकरणारम्भः, द्वितीयविशेषनियमानुगत एव। अपि च पूर्वस्मिन् पादे अन्तिमषट्सु अधिकरणेषु सर्वत्र ब्रह्मणः विधेयत्वात् अत्रापि "तद् ब्रह्म" इत्येवं पदम् अपि अध्याहर्त्तव्यम्। तेन अध्याहृतप्रथमान्तपदबलेन पञ्चमसामान्यनियमानुसारतः अत्रापि अधिकरणारम्भः कल्पयितुं शक्यते। तृतीय-विशेषनियमेन नात्र अधिकरणसमाप्तिश्च।

( २ ) 'विवक्षितगुणोपपत्तेश्च" ( १।२।२ ) अत्र प्रथमान्तपदाभावात् "उपपत्ते" इति हेतुबोधक-पदेन सह समुच्चयार्थं चकार-योगेन प्रथमान्तपदस्य अध्याहारेऽपि साकाङ्क्षत्व-

विधानात् नाधिकरणारम्भः संगतः । चतुर्थसामान्यनियमात् षष्ठविशेषनियमाच्च । नापि अत्र अधिकरणसमाप्ति, परसूत्रे वहूना मतेन अधिकरणस्य अनारम्भात् ।

( ३ ) "अनुपपत्तेस्तु न शारीर." ( १।२।३ ) अत्र "शारीर." इति प्रथमान्तपदसत्त्वेऽपि-अनिषेधार्थक-"तु"-शब्दयोगात् नात्र अधिकरणारम्भः समुचितः । नवमविशेषनियमात् । श्रीकन्ठ-भाष्ये अत्र अधिकरणारम्भ. कृतः । नायं तु सगतः । नवमविशेषनियमविरोधात्, भाष्यसप्तकविरोधाच्च, तेन अत्र श्रीकण्ठभाष्यस्यैव दोष. सञ्जातः ।

( ४ ) "कर्म्मकर्तृव्यपदेशाच्च" ( १।२।४ ) अत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । अध्याहृतेऽपि तस्य साकांक्षत्वमेव सिध्यति, न वा तस्य पृथग् विधेयत्वम्, चकारयोगात्, चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च ।

(५) "शब्दविशेषात्" १।२।५ अत्रापि प्रथमान्तपदाभावात् नाधिकरणारम्भ सगत, चतुर्थसामान्यनियमात् । वल्लभभाष्ये तु अत्र अधिकरणारम्भ कृत, स न साधु चतुर्थसामान्यनियमविरोधात्, भाष्यसप्तकविरोधित्वाच्च । अतोऽत्र वल्लभभाष्यस्य दोष संवृत्त ।

( ६ ) "स्मृतेश्च" ( १।२।६ ) अत्रापि पूर्ववत् नाधिकरणारम्भः सगत इति वोध्यम्, प्रथमान्तपदाभावात् । अध्याहृतेऽपि तस्मिन् चकारात् साकाक्षत्वम् । अत. नाधिकरणारम्भः । चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च ।

( ७ ) "अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च" ( १।२७ ) अत्र प्रथमान्तपदाभावात्, "इति चेन्न" इति पदसत्त्वाच्च। पञ्चमविशेषनियमात् नास्य अधिकरणारम्भकत्वम् । चकारात् साकांक्षत्वमपि । चतुर्थसामान्यनियमात्, पञ्चमषष्ठविशेषनियमाभ्याञ्च ।

( ८ ) "सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्" ( १।२।८ ), अत्र "सम्भोगप्राप्ति." इति प्रथमान्तपदसत्त्वेऽपि "इति चेन्न" इति पदसत्त्वात् नास्य अधिकरणारम्भकत्वम् । पञ्चमविशेषनियमात् । परसूत्रे. सर्वसम्मत्या अधिकरणारम्भणात् अत्रैव अधिकरणसमाप्तिः संगता एव ।

एव च अधिकरणेऽस्मिन् श्रीकण्ठभाष्यस्य तथा वल्लभभाष्यस्य अधिकरणरचनाया दोष सञ्जातः ।

## द्वितीयम् अत्त्रधिकरणम् ।

"अत्ता चराचरग्रहणात्" ( १।२।९ ) इति सूत्रस्य "अत्ता" इति पदात् अस्य "अत्त्रधिकरण" नाम । रामानुजाचार्य्यभिन्नै सर्वै भाष्यकारै अत्र सूत्रद्वय गृहीतम् । केवलं तेनैव सर्वसम्मतं परवर्त्तिसूत्रद्वयात्मकम् अधिकरणमपि अत्र सन्निवेशितम् । तत् च सूत्र द्वयम्

१। अत्ता चराचरग्रहणात् १।२।९(४०) २। प्रकरणाच्च १।२।२०(४१)

अत्र ( १ ) "अत्ता चराचरग्रहणात्" ( १।२।९ ) इति सूत्रस्य "अत्ता" इति प्रथमान्तपदसत्त्वात् अत्रैव अधिकरणारम्भ सगत एव । चतुर्थसामान्यनियमो द्रष्टव्य । अत्र सर्वे भाष्यकारा सम्मता. ।

( २ ) "प्रकरणाच्च" ( १।२।१० ) इति सूत्रे प्रथमान्तपदाभावात् नात्र अधिकरणारम्भ समुचितं । तादृशपदाध्याहारे कृतेऽपि चकारस्य हेतुसमुच्चायकत्वेन साकाङ्क्षत्वात् नाधिकरणारम्भ संगच्छते । चतुर्थसामान्यनियमात्, पञ्चविशेषनियमाच्च । परसूत्रे पृथगधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिश्च जाता । तेन एतस्मिन् अधिकरणे रामानुजभाष्यस्यैव दोषस्पर्शः सञ्जातः । एतच्च अग्रिमाधिकरणे विचारयिष्यते ।

## तृतीयं गुहाप्रविष्टाधिकरणम् ।

अत्र 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' ( १।२।११ ) इति सूत्रस्य "गुहाप्रविष्ट-" शब्दात् अस्य "गुहाप्रविष्टाधिकरणं" नाम । अत्र केवलं रामानुजभाष्यं विहाय सर्वेषु भाष्येषु सूत्रद्वयेन एतदधिकरणं रचितम् । रामानुजमतेन एतदधिकरणं पूर्वाधिकरणान्तर्गतमेव । तच्च सूत्रद्वयम्—

१। गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ( १।२।११ ) ( ४२ )

२। विशेषणाच्च ( १।२।१२ ) ( ४३ )

( १ ) अत्र 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' ( १।२।११ ) इति सूत्रे "आत्मानौ" इति प्रथमान्तपदसत्त्वात् अधिकरणारम्भः समुचित एव । चतुर्थसामान्यनियमो द्रष्टव्यः । रामानुजाचार्येण अत्र अधिकरणारचनायां न केवलं तस्य आचार्यसप्तकविरोधित्वं, किन्तु चतुर्थसामान्यनियमलङ्घनजन्यदोषश्चापि । पूर्वाधिकरणस्य विषयश्रुतितः अस्य विषयश्रुतेर्भेदात्, विधेयभेदाच्च । चतुर्थविशेषनियमोऽपि द्रष्टव्यः ।

( २ ) 'विशेषणाच्च' ( १।२।१२ ) अत्र प्रथमान्तपदाभावात्, चकारेण हेतोरेव समुच्चयकरणात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात्, पञ्चविशेषनियमाच्च । परसूत्रे पृथगधिकरणारम्भणाच्च अत्रैव एतदधिकरणस्य समाप्तिः समुचिता सर्वसम्मता च ।

## चतुर्थम् अन्तराधिकरणम् ।

अत्र "अन्तर उपपत्तेः" (१।२।१३) इति सूत्रस्य "अन्तर"-पदम् आश्रित्य अस्य "अन्तराधिकरणं" नाम । तत्र शङ्कर-भास्कर-मध्व-श्रीपति-वल्लभाचार्यैः पञ्चभिः सूत्रैः अधिकरणं रचितम् । रामानुजाचार्यस्तु "अतएव च स ब्रह्म" इति सूत्रं, निम्बार्काचार्यस्तु "अतएव च तद् ब्रह्म" इति सूत्रम्, अतिरिक्तं गृहीत्वा षड्भिः सूत्रैः एतदधिकरणं रचितवन्तौ । श्रीकण्ठाचार्यस्तु अत्र 'अतएव स ब्रह्म' इत्येवं सूत्रम् अतिरिक्तं गृहीत्वा अन्यपां मतेन यत् अधिकरणारोपसूत्रं तत् च वर्जयित्वा पञ्चभिः सूत्रैः एतदधिकरणं रचयाञ्चकार । तानि च अधिकरणगतानि पञ्च सूत्राणि यथा—

( १ ) अन्तर उपपत्तेः ( १।२।१३ ) ( ४४ )

( २ ) स्थानादिव्यपदेशाच्च ( १।२।१४ ) ( ४५ )

( ३ ) सुखविशिष्टाभिधानादेव च ( १।२।१५ ) ( ४६ )

( ४ ) श्रुतोपनिषत्कगत्यभिधानाच्च ( १।२।१६ ) ( ४७ )

( ५ ) अनवस्थितेरसम्भवाच्च नेतरः ( १।२।१७ ) ( ४८ )

अत्र ( १ ) "अन्तर उपपत्तेः" ( १।२।१३ ) इति सूत्रे "अन्तरः" इति प्रथमान्तपद-सत्त्वात् अनेन अधिकरणारम्भ चतुर्थसामान्यनियमानुगत एव, सर्वसम्मतश्च ।

( २ ) "स्थानादिव्यपदेशाच्च" ( १।२।१४ ) अत्र प्रथमान्तपदाभावात् नास्य अधि-करणारम्भकत्वम् । चकारात् हेतुसमुच्चयात् तस्य सम्भावनापि दूरमपास्ता, षष्ठविशेषनियमात् ।

( ३ ) "सुखविशिष्टाभिधानादेव च" ( १।२।१५ ) एतदपि तथा । इतः परं रामानुज-निम्बार्क-श्रीकण्ठाचार्य्यैः "अतएव च स ब्रह्म" अथवा "अतएव च तद् ब्रह्म किंवा "अतएव स ब्रह्म" इति एकम् अतिरिक्तं सूत्रं गृहीतम् । एतच्च शाकरभाष्ये तदीयवाक्याशार्थविशेषत्वेन उपलभ्यते । भाष्करभाष्ये तु एवं दृश्यते—"अत्रावसरे अतएव तद् ब्रह्म" इति सूत्रम् अन्ये पठन्ति, तत् पुनर्गतार्थम् इति अन्यै नाभिधीयते" इति । एतेन अनुमीयते अन्यत् भाष्यद्वयं भास्करेण दृष्टमिति । तत्र एकस्मिन् भाष्ये एतद् अतिरिक्तं सूत्र गृहीतम् अन्यस्मिन् नेति । भास्करस्तु ग्रहणविरोधीति । अतिरिक्तसूत्रग्रहणजन्यदोषादोषः यथास्थानं प्रदर्शयिष्यते ।

( ४ ) "श्रुतोपनिषत्कगत्यभिधानाच्च" (१।२।१६) एतदपि पूर्ववत् नाधिकरणारम्भकम् ।

( ५ ) "अनवस्थितेरसम्भवाच्च नेतर" (१।२।१७) अत्र "इतर" इति प्रथमान्तपदसत्त्वे-ऽपि तस्य स्वरूपत सापेक्षत्वबोधकत्वात् हेतुसमुच्चायक-चकार-सत्त्वात्, चतुर्थसामान्यनियमात्, एव सप्तमविशेषनियमात्, तथा षष्ठविशेषनियमानुसाराच्च नाधिकरणारम्भ. संगत. । परसूत्रे सर्वसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिश्च सगता एव । श्रीकण्ठभाष्ये एतेनैव सूत्रेण पृथगधिकरणमेकं रचितम् । एतत्तु सप्तमविशेषनियमविरुद्धम् । अत्र तेन "नेतरोऽनुपपत्तेः" ( १।१।१६ ) इति सूत्रीयाधिकरणवत् अधिकरणमेकं पृथक्तया उपन्यस्तम् । एतच्च अपरेषां सप्तानाम् आचार्य्याणां मतविरुद्धमेव । अतस्तस्यैव अत्र दोष सञ्जातं इत्येव कल्पनीयम् ।

## पञ्चमम् अन्तर्य्याम्यधिकरणम् ।

अत्र "अन्तर्य्याम्यधिदैवादिषु तद्धर्म्मव्यपदेशात्" ( १।२।१८ ) इति सूत्रस्य "अन्तर्य्यामी" इति पदात् अस्य "अन्तर्य्याम्यधिकरण" नाम । सर्वैः भाष्यकारैः अस्मिन् अधिकरणे सूत्रत्रयं गृही-तम् । तानि च त्रीणि सूत्राणि यथा

१। अन्तर्य्याम्यधिदैवादिषु तद्धर्म्मव्यपदेशात् ( १।२।१८ ) ( ४९ )

२। न च स्मार्त्तमतद्धर्म्माभिलापात् ( १।२।१९ ) ( ५० )

३। शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ( १।२।२० ) ( ५१ )

अत्र ( १ ) "अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्" ( १।२।१८ ) इति सूत्रस्य "अन्तर्यामी" इति प्रथमान्तपदात् एतेन पृथगधिकरणारम्भ चतुर्थसामान्यनियमानुगत एव। नात्र कस्यापि मतभेद ।

( २ ) "न च स्मार्त्तमतद्धर्म्माभिलापात्" ( १।२।१९ ) अत्र "स्मार्त्तम्" इति प्रथमान्त पदसत्त्वेऽपि चकारयोगात् सापेक्षत्वे सिद्धे नास्य अधिकरणारम्भकत्वम् उचितम्। एतेन षष्ठविशेषनियमो द्रष्टव्य । अत्र रामानुजमतेन श्रीकण्ठमतेन च सह महान् पाठभेद सञ्जात । तन्मते तृतीयसूत्रस्य "शारीरश्च" इति पदद्वयम् अस्मिन् सूत्रे संयोजितम्। तथापि अधिकरण-रचनायां नान्यथा जातम् ।

( ३ ) शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ( १।२।२० ) अत्र "शारीर" इति प्रथमान्तपदसत्त्वेऽपि चकारयोगात् तस्य निरपेक्षत्वबाधात् पृथगधिकरणरचनायां षष्ठविशेषनियमेन व्याघात सञ्जात । परसूत्रे सर्वसम्मत्या पृथगधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति समुचितैव। निम्बार्कमतेन अत्र सूत्रादौ नकार पठ्यते। ततोऽपि नाधिकरणरचनव्याघात । एव च अस्मिन् अधिकरणविरचने न कस्यापि नोपस्पर्श । प्राचीनप्रमाणप्रदर्शनं विनैव एतादृशपाठभेद-साधनं सूत्रव्याख्याने युक्त्यनुसरणमवणतां सूचयति, न तु सम्प्रदायलब्धव्याख्यानुसरणम्। पाट-भेदजन्यदोषादोषविचार अग्रे वक्ष्यते ।

## षष्ठम् अदृश्यत्वाद्यधिकरणम् ।

अत्र "अदृश्यत्वादिगुणको धर्म्मोक्ते" ( १।२।२१ ) इति सूत्रस्य "अदृश्यत्वादि"-पदात् अस्य "अदृश्यत्वाद्यधिकरणं" नाम। अत्र बलदेवभिन्नै सर्वै भाष्यकारै सूत्रत्रयं गृहीतम्। बलदेवाचार्यस्तु "प्रकरणात्" इति एकम् अधिकं सूत्र गृहीत्वा चतुर्भि सूत्रै एतदधिकरणं रचितवान्। तच्च सूत्रत्रय यथा—

'अदृश्यत्वादिगुणको धर्म्मोक्ते" ( १।२।२१ ) ( ५२ )

"विशेषणभेदव्यपदेशाभ्यां च नेतरौ" ( १।२।२२ ) ( ५३ )

'रूपोपन्यासाच्च' ( १।२।२३ ) ( ५४ )

अत्र ( १ ) अदृश्यत्वादिगुणको धर्मोक्ते" ( १।२।२१ ) इति सूत्रस्य "अदृश्यत्वादि गुणक" इति प्रथमान्तपदात् अनेन अधिकरणारम्भ संगत एव। नात्र कस्यापि मतवैषम्यम्। चतुर्थसामान्यनियमात्।

( २ ) "विशेषणभेदव्यपदेशाभ्यां च नेतरौ" ( १।२।२२ ) अत्र "इतरौ" इति प्रथमान्त-पदसत्त्वेऽपि अस्य स्वरूपत सापेक्षत्वबोधकत्वात् चकारयोगाच्च नास्य अधिकरणारम्भकत्वम्। अत्रापि न कस्यापि मतवैषम्यम्। चतुर्थसामान्यनियमात्, षष्ठसप्तमविशेषनियमाभ्याञ्च ।

( ३ ) "रूपोपन्यासाच्च" ( १।२।२३ ) अत्र प्रथमान्तपदाभावात्, तस्य अध्याहारे कृतेऽपि चकारयोगेन साकांक्षत्वसिद्धेः नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यषष्ठविशेषनियमाभ्याम् । परसूत्रे सर्वसम्मत्या पृथगधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिः सङ्गतैव । नात्र कस्यापि दोषः सञ्जातः । बलदेवभाष्ये अतिरिक्तसूत्रग्रहणात् दोषादोषविचारः अग्रे वक्ष्यते ।

## सप्तमं वैश्वानराधिकरणम् ।

अत्र "वैश्वानरः साधारणशब्दविशेषात्" ( १।२।२४ ) इति सूत्रस्य "वैश्वानरः"-इति पदात् अस्य "वैश्वानराधिकरण" नाम । ततश्च अस्मिन् अधिकरणे सर्वैः भाष्यकारैः नव सूत्राणि गृहीतानि । तानि च सूत्राणि यथा

( १ ) वैश्वानरः साधारणशब्दविशेषात् ( १।२।२४ ) ( ५५ )

( २ ) स्मर्यमाणमनुमानं स्यादिति ( १।२।२५ ) ( ५६ )

( ३ ) शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते । ( १।२।२६ ) ( ५७ )

( ४ ) अतएव न देवता भूतं च ( १।२।२७ ) ( ५८ )

( ५ ) साक्षादप्यविरोधं जैमिनिः ( १।२।२८ ) ( ५९ )

( ६ ) अभिव्यक्तेरित्याश्मरथ्यः ( १।२।२९ ) ( ६० )

( ७ ) अनुस्मृतेर्बादरिः ( १।२।३० ) ( ६१ )

( ८ ) सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ( १।२।३१ ) ( ६२ )

( ९ ) आमनन्ति चैनमस्मिन् ( १।२।३२ ) ( ६३ )

अत्र ( १ ) "वैश्वानरः साधारणशब्दविशेषात् ( १।२।२४ ) इति सूत्रस्य "वैश्वानरः" इति प्रथमान्तपदसत्त्वात् अत्र अधिकरणारम्भः सङ्गत एव, चतुर्थसामान्यनियमात् ।

( २ ) "स्मर्यमाणमनुमानं स्यादिति" ( १।२।२५ ) अत्र "अनुमानम्" इति प्रथमान्तपदसत्त्वेऽपि नात्र अधिकरणारम्भः, "स्यादिति" इतिपदात् सापेक्षत्वसिद्धेः । चतुर्थसामान्यनियमोक्तनिरपेक्षत्वस्य अभावात् । अथवा तु-युक्त "स्यात्"-शब्दस्य अभावात् नाधिकरणारम्भः । उभयविशेषनियमात् ।

( ३ ) "शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते ( १।२।२६ ) इत्यत्र प्रथमान्तपदाभावात्, चेत्-शब्दयोगाच्च नात्र अधिकरणारम्भः । चतुर्थसामान्यनियमात्, पञ्चमविशेषनियमाच्च ।

( ४ ) "अतएव न देवताभूतं च" ( १।२।२७ ) इत्यत्र "देवताभूतम्" इति प्रथमान्तपदसत्त्वेऽपि च-शब्दयोगात् न तथा । षष्ठविशेषनियमात् ।

(५) "साक्षादप्यविरोधं जैमिनि" (१।२।२८) इत्यत्र "जैमिनि" इति प्रथमान्तपदसत्त्वात् अधिकरणारम्भ समुचित, किन्तु सर्वै भाष्यकारै तथा न कृतम्, अतोऽत्र कश्चिन्नियम कर्त्तव्य, येन एतदधिकरणं नियमानुगत भवेत, अन्यत्र स्पर्शनं च दोषाय भविष्यति। स च नियम इत्थं भवतु— 'विषयान्तरसूत्राद्दते प्रथमान्तनामपदेन सिद्धान्तपक्षगत स्वमतानुकूलमतान्तरज्ञापने तथा स्वमतज्ञापने च तत् प्रथमान्तपदस्य नाधिकरणारम्भकत्वम्।" यथा अत्र "जैमिनि" इति प्रथमान्तपदसत्त्वेऽपि नाधिकरणारम्भ। एतदर्थं चिन्तनीयमेतत्—तत्र नाम्ना येषाम् आचार्य्याणां मतादिकम् उक्तम्, ते च आचार्या (१) जैमिनि (२) आश्मरथ्य, (३) बादरि, (४) बादरायण, (५) औडुलोमि, (६) काशकृत्स्न, (७) कार्ष्णाजिनि, (८) आत्रेय—इति अष्टौ। तत्र जैमिनि आश्मरथ्य बादरि औडुलोमि,—एतेषां मतादिक क्वचित् सिद्धान्तरूपेण क्वचित् पूर्वपक्षरूपेण गृहीतम्। बादरायणस्य तु मतादिकं सर्वत्र सिद्धान्तरूपेण प्रदर्शितम्। काशकृत्स्नस्य तथा कार्ष्णाजिने केवल सिद्धान्तरूपेण, आत्रेयस्य तु केवल पूर्वपक्षरूपेण गृहीतम्। तस्य विभागश्च इत्थम्—

जैमिनिमतेन—सिद्धान्तसूत्राणि—५०, ६२, १७४, ४६५ *, पूर्वपक्षसूत्राणि—९४, ३५८, ४२७, ४४३ * ५२०, ५३८, * ५४४

आश्मरथ्यमतेन—सिद्धान्तसूत्रं–६०, पूर्वपक्षसूत्रं–१२६,

बादरिमतेन—सिद्धान्तसूत्राणि—६१, ३०२, ५२४, *, पूर्वपक्षसूत्रं— ५४३, *

बादरायणमतेन—सिद्धान्तसूत्राणि— ८०, * ९६, ३५९, ४७६, * ४३३, ४४४, ५३२, * ५४० ५४५

औडुलोमिमतेन—सिद्धान्तसूत्रं–४७०, पूर्वपक्षसूत्रं–१२७, ५३०

काशकृत्स्नमतेन—सिद्धान्तसूत्रं–१२८, पूर्वपक्षसूत्रं नास्ति।

कार्ष्णाजिनिमतेन सिद्धान्तसूत्रं–३००, पूर्वपक्षसूत्रं नास्ति।

आत्रेयमतेन—पूर्वपक्षसूत्रं—४६० *, सिद्धान्तसूत्रं नास्ति।

तत्र तारकाचिह्नितसूत्राणि अधिकरणारम्भकानि। सूत्रसंख्या च आदित अन्तपर्य्यन्त प्रदत्तसंख्यानुसारेण बोद्धव्या। एतन्नियमार्थं विधानियमोऽपि द्रष्टव्य। तत्र पूर्वपक्षसम्बन्धनियम सङ्कलित। एवं च आश्मरथ्य औडुलोमि काशकृत्स्न कार्ष्णाजिनि इति एतेषां चतुर्णां मते न एकमपि अधिकरणं रचितम्। तथा च—

जैमिनिरिति नाम्ना अधिकरणानि रचितानि ४६५, ४४३, ५३८ सूत्रै

बादरिरिति नाम्ना अधिकरणानि रचितानि ५२४, ५४३ सूत्राभ्याम्।

बादरायण इति „ „ „ ८९, ४२६ ५७२ सूत्रै।

आत्रेय इति „ „ „ ४६९ सूत्रेण। इति दशमो नियम।

( ६ ) "अभिव्यक्तेरित्याश्मरथ्यः" ( १।२।२९ ) अत्र "आश्मरथ्यः" इति प्रथमान्तपदसत्त्वेऽपि दशमविशेषनियमानुसारेण नाधिकरणारम्भः ।

( ७ ) "अनुस्मृतेर्बादरिः" ( १।२।३० ) अत्र "बादरिः" इति प्रथमान्तपदसत्त्वेऽपि दशमविशेषनियमानुसारेण नाधिकरणारम्भः ।

( ८ ) "सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति" ( १।२।३१ ) अत्र "जैमिनि" इति प्रथमान्तपदसत्त्वेऽपि दशमविशेषनियमानुसारेण नाधिकरणारम्भः ।

( ९ ) "आमनन्ति चैनमस्मिन् ( १।२।३२ ) अत्र प्रथमान्तपदाभावात् नाधिकरणारम्भः, चकारेण अभ्याहृतेऽपि साकाङ्क्षत्वार्थकत्वात् तन्निषेधः । चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च । पादशेषात् अधिकरणशेषश्च । पादसमाप्तिनिदर्शनं तु प्रथमपादवद् विज्ञेयम् इति ।

## प्रथमाध्याय द्वितीयपादसमालोचनम् ।

एतत्पादोपसंहारे अस्माकं प्रागुक्तरीत्या प्रथमपादोपसंहारवत् चत्वारो विषया आलोचनीया । ते च

( १ ) कति कीदृशाश्च नियमा अत्र संकलिताः ।

( २ ) कति दोषा कस्य भाष्यस्य कथं संवृत्ताः ।

( ३ ) काश्च श्रुतयः कैश्च सूत्रैरुपजीव्यत्वेन गृहीताः ।

( ४ ) उपजीव्यश्रुतिबलेन कीदृशी च पादसंगतिर्भवितव्या इति । तत्र प्रथमम्

### ( १ ) कति कीदृशाश्च नियमाः अत्र संकलिताः ।

अत्र एक एव नियमः संकलितः । स च "विषयान्तरसूचनादृते प्रथमान्तनामपदेन सिद्धान्तपक्षभूत स्वमतानुकूलमतान्तरज्ञापने तथा स्वमतज्ञापने च तत्प्रथमान्तपदस्य नाधिकरणारम्भकत्वम्"—इति दशमो नियमः । यथा "साक्षादप्यविरोधं जैमिनिः" ( १।२।२८ ) इत्यादि सूत्रेषु अधिकरणं नारब्धम् । इदानीं द्रष्टव्यम्

### ( २ ) कति दोषा कस्य भाष्यस्य कथं संवृत्ताः ।

१।२।१ अधिकरणे श्रीकण्ठभाष्ये "अनुपपत्तेस्तु न शारीरः" इति १।२।३ सूत्रे अधिकरणरचनाया दोषः ।

१।२।१ अधिकरणे मध्वभाष्ये "शब्दविशेषात्" इति १।२।५ सूत्रे अधिकरणरचनाया दोषः ।

१।२।३ अधिकरणे रामानुजभाष्ये "गुहां प्रविष्टावात्मानौ" इत्यादि १।२।११ सूत्रे अधिकरणस्य अरचनया दोषः ।

१।२।४ अधिकरणे श्रीकण्ठभाष्ये "अनवस्थितेरसम्भवाच्च नेतरः" इति ( १।२।१७ ) सूत्रे अधिकरणरचनाया दोषः ।

तेन अस्मिन् पादे अधिकरणरचनानियमानुसारेण रामानुज-श्रीकण्ठ-मध्वभाष्याणां दोषः ।

तत्र श्रीकण्ठभाष्यस्य अधिकरणरचनायां दोषद्वयम्, वल्लभभाष्यस्य अधिकरणरचनायां एको दोष, रामानुजभाष्यस्य अधिकरणस्य अरचनायाम् एको दोष इति । एवं च—

| भाष्यनाम | अधिकरणस्य अरचनायां | अधिकरणस्य रचनायाम् । | |
|---|---|---|---|
| श्रीकण्ठभाष्ये— | ० | २ | दोषौ |
| वल्लभभाष्ये— | ० | १ | दोष |
| रामानुजभाष्ये— | १ | ० | " |

अधुना द्रष्टव्यम्—

( ३ ) काश्च श्रुतय कैश्च सूत्रै उपजीव्यत्वेन गृहीता

तत्र प्रथमाधिकरणे—

'सर्वत्र प्रसिद्धोपदेशात्' इति प्रथमसूत्रे—"स क्रतु कुर्वीत" (छा ३।१४।१) 'मनोमय प्राणशरीरो भारूप" (छा ३।१४।२) "सर्वं खलु इदं ब्रह्म" (छा ३।१४।१)

'विवक्षितगुणोपपत्तेश्च" इति द्वितीयसूत्रे—'भारूप सत्यसंकल्प" (छा ३।१४।२)

"अनुपपत्तेस्तु न शारीर" इति तृतीयसूत्रे (सैव)

कर्म्मकर्तृव्यपदेशाच्च" इति चतुर्थसूत्रे—"एतमित प्रेत्याभिसम्भवितास्मि" (छा ३।१४।४)

"शब्दविशेषात्" इति पञ्चमसूत्रे—"अन्तरात्मन् पुरुषो हिरण्मय" (शत ब्रा १०।६।३।२)

"स्मृतेश्च" इति षष्ठ सूत्रे—"ईश्वर सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतेषु यन्त्रारूढानि मायया" (गी १८।६२)

"अर्भकौकस्त्वात् तद्व्यपदेशाच्च " इत्यादि सप्तमसूत्रे—"एष मे आत्मान्तर्हृदये" (छा ३।१४।३), "अणीयान्" (सैव), आराग्रमात्र (श्वे ५।८)

'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्" इति अष्टमसूत्रे (सैव)

द्वितीयाधिकरणे—

"अत्ताचराचरग्रहणात्" इति नवमसूत्रे—"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन (कठ१।२।२४)

'प्रकरणाच्च" इति दशमसूत्रे—"न जायते म्रियते वा विपश्चित्" (कठ १।२।२५), "क इत्था वेद यत्र स" (कठ १।२।२५)

तृतीयाधिकरणे—

"गुहां प्रविष्टावात्मानौ" इत्यादि एकादशसूत्रे—"ऋतं पिबन्तौ सुकृतस्य लोके (कठ १।३।१)

"विशेषणाच्च" इति द्वादशसूत्रे—"सोऽध्वन पारमाप्नोति" (कठ १।३।९), "देवंमत्वा धीरो हर्ष शोकौ जहाति" (कठ १।२।१२)।

चतुर्थाधिकरणे—

'अन्तर उपपत्ते ' इति त्रयोदश सूत्रे—"य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मा इति होवाच

"शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च" इत्यादि। षड्विंशसूत्रे—'हृदयं गार्हपत्यः" (छा ५।१८।२)
"तद् यद् भक्तं प्रथमम् आगच्छेत् तद् होमीयम्" ( छा ५।१०।१, )। "पुरुषेऽन्तः प्रतिष्ठितं वेद।" शतपथ ब्रा (१०।६।१।११) 'मनोमयः" (छा ३।१४।२)
'मनो ब्रह्मेत्युपासीत' (छा ३।१८।१) 'मूर्द्धैव सुतेजाः।" (छा ५।१८।२ ) "एतमेव अग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद।" (शतपथ ब्रा१०।६।१।११)
"अतएव न देवता भूतं च" इति सप्तविंश सूत्रे—( हेतुप्रदर्शनमेवमात्रम् )
"साक्षादप्यविरोधं जैमिनिः" इति अष्टाविंश सूत्रे— ( " )
"अभिव्यक्तेरित्याश्मरथ्यः" इति ऊनत्रिंश सूत्रे— ( " )
"अनुस्मृतेर्बादरिः" इति त्रिंश सूत्रे— ( " )
"सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति" इति एकत्रिंशसूत्रे—'प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसम्पन्नाः" ( शतपथ ब्रा )
"आमनन्ति चैनमस्मिन्" इति द्वात्रिंशसूत्रे—"य एष अनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठितः" ( जाबाल २ )

इदानीं द्रष्टव्यम् एतादृशसूत्रोपजीव्यश्रुतिबलेन—

( ४ ) कीदृशी अस्य पादसङ्गतिः।

अस्मिन् पादे याश्च श्रुतयः गृहीताः, ताः सर्वाः शङ्करभाष्यानुसारेणेति अवगन्तव्यम्। भाष्यान्तरे तु अत्र कश्चित् वैषम्यं दृश्यते। अधिकरणविषयनिर्देशे विभिन्नश्रुतीनां गृहीतत्वात्। तेन विभिन्नभाष्याणि स्वस्वमतानुसारेण नासंगतानीति मन्तव्यम्। तथापि शांकरभाष्यस्य प्राचीनत्वात् तदुक्तश्रुतीनामेव प्रायेण सर्वैः ग्रहणं कृतम्। अतः तदुक्तपादप्रतिपाद्यमेव संगतमित्येव सम्भाव्यते। तन्मते अस्मिन् द्वितीयपादे उपास्यब्रह्मवाचकास्पष्टश्रुतिवाक्यानां समन्वयः कृत इति दृश्यते। भाष्यान्तरेषु अयमेव विषयः तावत् किञ्चित्प्रकारान्तरेण परिगृहीतः। यदेतत् मतान्तरं तत् तु तेषां स्वस्वमतानां तात्त्विकभेदसंरक्षणार्थमेव। तथापि तेषां संग्रहः प्रदर्श्यते—

शाङ्करमते—उपास्यब्रह्मवाचकास्पष्टश्रुतिवाक्यानां समन्वयः।
भास्करमते प्रायेण शाङ्करमतानुरूपम्।
रामानुजमते—पुनरस्पष्टजीवादिलिंगकानि वाक्यानि विचारितानि।
मध्वमते—लिंगात्मकानामन्यत्र प्रसिद्धानां शब्दानां विष्णौ समन्वयः।
निम्बार्कमते—अस्पष्टस्पष्टजीवादिलिंगकवाक्यानां तत्र समन्वयः।
श्रीकण्ठमते—अनतिस्पष्टलिंगवाक्यविचारः।
श्रीकरमते—कैपाश्चित् अस्पष्टलिंगानां पदानां ब्रह्मप्रतिपादकत्वम् अर्थान्तरबोधकत्वं वा इति सन्देहे परब्रह्मशिवरूपमुख्यार्थबोधकत्वम्।

एतेषां सम्यक् पर्य्यालोचने कृते तत्त्वतः न महान् मतभेदः परिलक्ष्यते। उपास्यत्वेन ब्रह्मणः शिवविष्णुभाव गृहीत्वैव अयं मतभेदः । अतः अस्पष्टब्रह्मबोधकश्रुतिवाक्यसमन्वयः एव द्वितीयपादार्थः इति वक्तुं शक्यते। अयमेव अत्र पादसगति । एवं च एतादृशपादसंगत्या एतत्पादीयसूत्राणि व्याख्येयानि। तेन एतत्पादीयसूत्रवलेन यज्जीवजगद्ब्रह्मस्वरूप-निरूपणादिकं तत् तु प्रासङ्गिकमेवेति वोद्धव्यम्, तथैव ब्रह्मणः सगुणत्वनिर्गुणत्वादिकमपि ।

इति प्रथमाध्याये द्वितीयपादोपसंहारः।

## अथ प्रथमाध्याये तृतीयपादः।

### प्रथम द्युभ्वाद्यधिकरणम्।

अत्र "द्युभ्वाद्यायतन स्वशब्दात्" ( १।३।१ ) इति सूत्रस्य "द्युभ्वादि"—शब्दात् अस्य "द्युभ्वाद्यधिकरणं" नाम। अत्र सर्वैं भाष्यकारैः सप्त सूत्राणि गृहीतानि। केवलं रामानुजाचार्यः तथा श्रीकण्ठाचार्यः तृतीयं "नानुमानमतच्छब्दात्" तथा चतुर्थं "प्राणभृच्च" इत्येतत्सूत्रद्वयम् एकीकृत्य षड्भि सूत्रै एतदधिकरण रचितवन्तौ। तानि च सप्त सूत्राणि यथा

| | | | |
|---|---|---|---|
| १। द्युभ्वाद्यायतन स्वशब्दात् | १।३।१ ( ६४ ) | ४। प्राणभृच्च | १।३।४ ( ६७ ) |
| २। मुक्तोपसृप्यव्यपदेशात् | १।३।२ ( ६५ ) | ५। भेदव्यपदेशात | १।३।५ ( ६८ ) |
| ३। नानुमानमतच्छब्दात | १।३।३ ( ६६ ) | ६। प्रकरणात् | १।३।६ ( ६९ ) |
| | | ७। स्थित्यदनाभ्या च | १।३।७ ( ७० ) |

तत्र ( १ ) "द्युभ्वाद्यायतन स्वशब्दात्" ( १।३।१ ) इति सूत्रे "द्युभ्वाद्यायतनम्" इति प्रथमान्तपदात् पादारम्भाच्च अधिकरणारम्भः संगत एव, द्वितीयविशेषनियमात्।

( २ ) "मुक्तोपसृप्यव्यपदेशात्" ( १।३।२ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात्।

( ३ ) "नानुमानमतच्छब्दात्" ( १।३।३ ) इत्यत्र "अनुमानम्" इति प्रथमान्तपदसत्त्वेऽपि नैकस्मिन्नपि मते अधिकरणारम्भ, अत 'प्राणभृच्च' इति परसूत्रस्थ-चकारेण हेतुबोधकप्रवाहपातित्वात्, सापेक्षार्थकत्वकल्पनेन, सप्तदशविशेषनियमेन नाधिकरणारम्भकत्वम् ।

( ४ ) 'प्राणभृच्च' ( १।३।४ ) इत्यत्र 'प्राणभृत्' इति प्रथमान्तपदसत्त्वेऽपि चकारयोगेन सापेक्षत्वसिद्धौ नास्य अधिकरणारम्भकत्वम्। षष्ठविशेषनियमात्। रामानुज-श्रीकण्ठभाष्यानुसारतः एतत्सूत्रं पूर्वसूत्रान्तर्गतमेव कृत्वा पठितम्। अत्र संशयस्य कोटित्रयं यत् प्रधानं जीवः ब्रह्म च इति, तदन्तर्गतप्रधानं विहाय प्राणभृत्-शब्देन जीवस्य वोधकत्वात् विधेयभेदः कल्पनीय । अतः सूत्रभेदः समर्थनीय । चतुर्थविशेषनियमात् ।

( ५ ) 'भेदव्यपदेशात्' ( १।३।५ ) इत्यत्र प्रथमान्तपदाभावात्, अध्याहृतेऽपि तस्य साकाङ्क्षत्वात् हेतुबोधकत्वाच्च नास्य अधिकरणारम्भकत्वं समुचितम्, चतुर्थसामान्यनियमात्।

( ६ ) 'प्रकरणात्' ( १।३।६ ) इत्यत्रापि पूर्ववत् बोद्धव्यम्, चतुर्थसामान्यनियमात्।

( ७ ) 'स्थित्यदनाभ्यां च' ( १।३।७ ) इत्यत्रापि पूर्ववत् बोद्धव्यम्। अध्याहृतेऽपि चकारात् बाध, षष्ठविशेषनियमात् चतुर्थसामान्यनियमाच्च। परसूत्रे अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति संगता। अधिकरणरचनाविषये नात्र कस्यापि कोऽपि दोष परिलक्ष्यते।

## द्वितीय भूमाधिकरणम्।

अत्र "भूमा सम्प्रसादादध्युपदेशात्" ( १।३।८ ) इति सूत्रस्य "भूमा"-पदम् आश्रित्य अस्य "भूमाधिकरणं" नाम। सर्वैः भाष्यकारैः अत्र सूत्रद्वयेन अधिकरणं रचितम्। तच्च सूत्रद्वयम्—

१। भूमा सम्प्रसादादध्युपदेशात् ( १।३।८ ) ( ७१ )

२। धर्मोपपत्तेश्च ( १।३।९ ) ( ७२ )

अत्र ( १ ) "भूमा सम्प्रसादादध्युपदेशात्" ( १।३।८ ) इति सूत्रस्य "भूमा" इति प्रथमान्तपदात् अत्र अधिकरणारम्भ सर्वसम्मत, चतुर्थसामान्यनियमानुगतश्च।

( २ ) "धर्मोपपत्तेश्च" ( १।३।९ ) अत्र प्रथमान्तपदाभावात् ततश्च चकारयोगात् नास्य अधिकरणारम्भकत्वम्, षष्ठविशेषनियमात्। परसूत्रेण सर्वमतेन अधिकरणारम्भात् एतदेव एतदधिकरणस्य अन्तिमसूत्रम् इत्यपि संगतमेव। तेन अत्र न कस्यापि अधिकरणरचनाविषये कोऽपि दोष।

## तृतीयम् अक्षराधिकरणम्।

अत्र "अक्षरमम्बरान्तधृते" ( १।३।१० ) इति सूत्रस्य "अक्षर"-शब्दात् अस्य "अक्षराधिकरणं" नाम। अत्र सर्वैः भाष्यकारैः सूत्रत्रयं गृहीतम् एतदधिकरणार्थम्। तच्च सूत्रत्रयं यथा—

१। अक्षरमम्बरान्तधृते १।३।१० ( ७३ )

२। सा च प्रशासनात् १।३।११ ( ७४ )

३। अन्यभावव्यावृत्तेश्च १।३।१२ ( ७५ )

अत्र ( १ ) "अक्षरमम्बरान्तधृते" ( १।३।१० ) इति सूत्रे "अक्षरम्" इति प्रथमान्तपदसत्त्वात् अनेन अधिकरणारम्भ संगत, नियमानुगत एव, चतुर्थसामान्यनियमात्।

( २ ) 'सा च प्रशासनात्' ( १।३।११ ) इति सूत्रे 'सा' इति प्रथमान्तपदसत्त्वेऽपि नास्य अधिकरणारम्भकत्वम्, चकारयोगात्, षष्ठविशेषनियमात्।

( ३ ) 'अन्यभावव्यावृत्तेश्च' ( १।३।१२ ) इत्यत्र प्रथमान्तपदाभावात् चकारयोगाच्च नास्यापि अधिकरणारम्भकत्वम्, षष्ठविशेषनियमात्। परसूत्रे सर्वसम्मत्या अधिकरणारम्भात् अत्रैव

अधिकरणसमाप्तिश्च सुसंगता। तेन अत्र न कस्यापि कोऽपि दोषः अधिकरणरचनाविषये सञ्जातः इति बोद्धव्यम्।

## चतुर्थम् ईक्षतिकर्माधिकरणम्।

अत्र 'ईक्षतिकर्म्मव्यपदेशात् स' (१।३।१३) इति सूत्रस्य 'ईक्षतिकर्म्म'—पदात् अस्य 'ईक्षतिकर्म्माधिकरणं" नाम। सर्वमतेन अत्र अनेन एकेन सूत्रेण एतदधिकरणं रचितम्। तच्च सूत्रम्

'ईक्षतिकर्म्मव्यपदेशात् स.' (१।३।१३) अत्र 'स' इति प्रथमान्तपदात् अत्र अधिकरणारम्भः सगत एव। परसूत्रे पृथगधिकरणारम्भात् अत्रैव अधिकरणशेषोऽपि संगत एव। तेन नात्र कस्यापि अधिकरणरचनाया कोऽपि दोषः।

## पञ्चमं दहराधिकरणम्।

अत्र 'दहर उत्तरेभ्यः' (१।३।१४) इति सूत्रस्य 'दहर'-पदात् अस्य "दहराधिकरणं' नाम। शङ्कर-भास्कर-मध्व-श्रीपति-वल्लभाख्येषु पञ्चसु भाष्येषु अत्र अष्ट सूत्राणि गृहीतानि। रामानुज-निम्बार्क-श्रीकण्ठभाष्येषु तु परवर्त्तिसूत्रद्वयमपि गृहीत्वा दशभिः सूत्रैः अधिकरणमिदं रचितम्। एतेन परवर्त्तिसूत्रद्वयेन पृथक् एकम् अधिकरणं भवति प्रागुक्तशङ्करादिभाष्यकाराणां पञ्चानां मतेभ्य। तानि च अष्ट सूत्राणि यथा

| | |
|---|---|
| १। 'दहर उत्तरेभ्य' १।३।१४ (७७) | ५। 'इतरपरामर्शात् स इति चेन्नासम्भवात्' १।३।१८ (८१) |
| २। 'गतिशब्दाभ्यां तथाहि दृष्टं लिंगं च १।३।१५ (७८) | ६। 'उत्तराच्चेदाविर्भूतस्वरूपस्तु १।३।१९ (८२) |
| ३। 'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः' १।३।१६ (७९) | ७। 'अन्यार्थश्च परामर्शः १।३।२० (८३) |
| ४। 'प्रसिद्धेश्च' १।३।१७ (८०) | ८। "अल्पश्रुतेरिति चेत् तदुक्तम् १।३।२१ (८४) |

अत्र (१) "दहर उत्तरेभ्य" (१।३।१४) इति सूत्रस्य "दहर" इति प्रथमान्तपदसत्त्वात् अस्यैव अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात्।

(२) "गतिशब्दाभ्या तथाहि दृष्टं लिंगं च" (१।३।१५) इत्यत्र "दृष्टं" "लिंगं" इति प्रथमान्तपदद्वयसत्त्वेऽपि नास्य पृथगधिकरणत्वम्। चकारयोगेन साकाङ्क्षत्वात्। "तथाहि"- पदेनापि अस्य सापेक्षत्व सूचयत्येव। चतुर्थसामान्यनियमात्, चतुर्थषष्ठविशेषनियमाभ्या च। नास्य अधिकरणारम्भाकत्वं संगतम्।

(३) "धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धे" (१।३।१६) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। चकारस्य हेतुसमुच्चायकार्थत्वात् चतुर्थसामान्यनियमात्, तथा षष्ठविशेषनियमाच्च।

( ४ ) 'प्रमितेश्च' ( १।३।१७ ) अत्रापि प्रथमा तपदाभावात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात्, चतुर्थषष्ठविशेषनियमाभ्यां च ।

( ५ ) "इतरपरामर्शात् स इति चेन्नासम्भवात्" ( १।३।१८ ) इत्येत्र 'स' इति प्रथमान्तपदसत्त्वेऽपि 'इति चेन्न' इति पदसत्त्वात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात् तथा पञ्चमविशेषनियमात् । तथापि पञ्चम्य तपदात् प्रथमान्तपदसत्त्वम अधिकरणारम्भबोधकमिति चतुर्दशविशेषनियमात् अधिकरणारम्भ उचित, परन्तु इतरशब्देन साकाङ्क्षत्वविधानात् अत्र अधिकरणं न आरब्धमिति द्रष्टव्यम् । सप्तमविशेषनियमात्, हेतुबोधकपदवाह्यपतितत्वात् चकाराध्याहारेऽपि सप्तदशविशेषनियमेन तस्य निषेध ।

( ६ ) "उत्तराच्चेदाविर्भूतस्वरूपस्तु" ( १।३।१९ ) इत्यत्र 'आविर्भूतस्वरूप' इति प्रथमान्तपदसत्त्वेऽपि अनिषेधार्थक-'तु' शब्दयोगात् अस्य सापेक्षत्व सिध्यति, तेन अस्य नाधिकरणारम्भकत्वम्, नवमविशेषनियमात् । 'चेत्'-योगाच्च पञ्चमविशेषनियमात नास्य अधिकरणारम्भकत्वम् । अत्र भारतीतीर्थमतेन तथा भामतीमतेन तु पृथगधिकरणं स्वीकृतम्, परन्तु तन्नियमविरुद्धमेवेति प्रतिभाति ।

( ७ ) अन्यार्थश्च परामर्शः ( १।३।२० ) इत्यत्र 'अन्यार्थ' तथा 'परामर्श' इति प्रथमान्तपदद्वयसत्त्वेऽपि चशब्दयोगात् नास्य अधिकरणारम्भकत्वम्, षष्ठविशेषनियमात् ।

( ८ ) "अल्पश्रुतेरिति चेत्तदुक्तम्" ( १।३।२१ ) इत्यत्र 'तदुक्तम्' इति प्रथमान्तपदसत्त्वेऽपि 'इति चेत्' इति पदसत्त्वात् नास्य अधिकरणारम्भकत्वम् । तदुक्त'-पदेनापि अस्य सापेक्षत्वम् अवगम्यते च । एतदर्थं पञ्चमविशेषनियमो द्रष्टव्य । परसूत्रे अधिकसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति युक्ता एवेति बोध्यव्यम् । अत्र अधिकरणसमाप्ति तु रामानुज-निम्बार्क-श्रीकण्ठ-मतविरोधिनी । तेन शङ्कर-भास्कर-मध्व-श्रीपति-वल्लभ-सम्मता एव इयं समाप्तिरिति बोद्धव्या ।

## षष्ठम् अनुकृत्यधिकरणम् ।

अत्र 'अनुकृतेस्तस्य च' ( २।३।२२ ) इति सूत्रस्थात् अनुकृति-इति-शब्दात् अस्य 'अनुकृत्यधिकरणं' नाम । अत्र रामानुजनिम्बार्कश्रीकण्ठ-भिन्नै पञ्चभि आचार्यैः सूत्रद्वयेनैव अधिकरणं रचितम् । तच्च सूत्रद्वयं यथा—

१। अनुकृतेस्तस्य च १।३।२२ ( ८५ )

२। अपि च स्मर्यते १।३।२३ ( ८६ )

अत्र ( १ ) 'अनुकृतेस्तस्य च' ( १।३।२२ ) इति सूत्रे प्रथमान्तपदाभावात् चतुर्थसामान्यनियमात् । प्रथमान्तपदस्य आध्याहारेऽपि चकारयोगात् नास्य अधिकरणारम्भकत्वम्, षष्ठविशेषनियमात् । तथापि पञ्चभि भाष्यकारैः एतत्सूत्रद्वयेन अधिकरणस्य रचितत्वात् त्रयाणां

मतेन तु अस्य पूर्वाधिकरणान्तर्गतत्वात्, तथा च एतदधिकरणोपजीव्यविषयवाक्यस्य पूर्वाधिकरण-विषयवाक्यत भिन्नत्वात् कश्चिद् विशेषनियमं विरच्य एतत्सूत्रद्वयस्य पृथगधिकरणत्वं समर्थनीयम् इति युक्तम् । स च नियमो यथा

'प्रथमान्तपदाभावेऽपि उद्देश्यविधेयान्यतरासमुच्चायक-चकारादिशब्दयोगेऽपि एवं च अधिकरणनिषेधेऽपि विषयश्रुतिभेदात् अधिकरणभेद करणीय" इति एकादश नियम' ।

अत्र अधिकसम्मत्या विषयश्रुतिस्तु मुण्डकवचनं 'न तत्र सूर्य्यो भाति' इत्यादि, पूर्वाधिकरणे तु विषयश्रुतिस्तावत् छान्दोग्यवचनम् 'यदिदम् अस्मिन् ब्रह्मपुरे दहरम्' इत्यादि । एवं च श्रुतिभेद तथैव विषयभेदश्च अत्र अतीव स्पष्ट, विभिन्नश्रुत्यर्थमूलकत्वात् । तेन 'अनुकृतेस्तस्य च' इति सूत्रे प्रथमान्तपदाभावेऽपि चकारवशात् अध्याहृतप्रथमान्तपदस्य अधिकरणारम्भकत्वनिषेधेऽपि विषयश्रुतिभेदनिबन्धनः अधिकरणभेदः संगच्छते । अतः अत्र रामानुज-निम्बार्क-श्रीकन्ठभाष्याणां दुष्टत्वम् अनिवार्य्यम् ।

( २ ) 'अपि च स्मर्य्यते ( १।३।२३ ) इत्यत्र प्रथमान्तपदाभावात् चकारसत्त्वाच्च नास्य पृथगधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात्, षष्ठ विशेषनियमात् च । तथाच अत्रैव अधिकरणसमाप्ति बोद्धव्या, परसूत्रे सर्वसम्मत्या अधिकरणारम्भात् ।

## सप्तम प्रमिताधिकरणम् ।

अत्र "शब्दादेव प्रमित." ( १।३।२४ ) इति सूत्रस्य 'प्रमितः'-पदानुसारेण अस्य "प्रमिताधिकरणं" नाम । सर्वै भाष्यकारै' अत्र सूत्रद्वयेन अधिकरणं रचितम् । तच्च सूत्रद्वयम्

१। शब्दादेव प्रमित. १।३।२४ ( ८७ )

२। हृद्यपेक्षया तु मनुष्याधिकारत्वात् १।३।२५ ( ८८ )

( १ ) अत्र "शब्दादेव प्रमित" ( १।३।२४ ) इत्यत्र 'प्रमित.' इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं सगतं नियमानुगतं च । चतुर्थसामान्यनियमात् ।

( २ ) "हृद्यपेक्षया तु मनुष्याधिकारत्वात्" ( १।३।२५ ) अत्र प्रथमान्तपदाभावात् चतुर्थसामान्यनियमात् नास्य अधिकरणारम्भकत्वम्, अष्टादशविशेषनियमो नात्र प्रयोक्तव्य, प्रथमान्तपदाभावात् । परसूत्रे सर्वसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति सगता एव । अत नात्र कस्यापि भाष्यस्य कोऽपि दोष ।

## अष्टमं देवताधिकरणम् ।

अस्मिन् अधिकरणे सूत्रपदानुसारेण न नामकरण, १।१।११ प्रतर्दनाधिकरणवत् । परन्तु अधिकरणप्रतिपाद्यानुसारेणैव तत् । अत्र रामनुजभाष्यं विहाय सर्वेषु भाष्येषु एतदधिकरणार्थम् अष्ट सूत्राणि गृहीतानि । रामानुजभाष्ये तु प्रथमादिभि पञ्चभि सूत्रै एकम् अधिकरणम्, अन्तिमसूत्रत्रयेण अन्यदधिकरणं कृतम् । तानि च अष्ट सूत्राणि यथा —

१। तदुपर्य्यपि बादरायण सम्भवात् १।३।२६ (८९)
२। विरोध कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् १।३।२७ (९०)
३। शब्द इति चेन्नात प्रभवात् प्रत्यक्षानुमानाभ्याम् १।३।२८ (९१)
४। अतएव च नित्यत्वम् १।३।२९ (९२)
५। समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च १।३।३० (९३)
६। मध्वादिष्वसम्भवादनधिकारं जैमिनि १।३।३१ (९४)
७। ज्योतिषि भावाच्च १।३।३२ (९५)
८। भावं तु बादरायणोऽस्ति हि १।३।३३ (९६)

अत्र (१) 'तदुपर्य्यपि बादरायण सम्भवात्' (१।३।२६) इत्यत्र 'बादरायण' इति प्रथमान्तपदेन स्वमतवर्णनात् विषयान्तरस्य सूचनात् च अधिकरणारम्भ संगत एव, चतुर्थ सामान्यनियमात् दशमविरोधनियमाच्च।

(२) 'विरोध कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्' (१।३।२७) अत्र 'विरोध' इति प्रथमान्तपदसत्त्वेऽपि "इति चेन्न" पदात् नास्य अधिकरणारम्भकत्वम्। पञ्चमविरोधनियमात्।

(३) 'शब्द इति चेन्नात प्रभवात् प्रत्यक्षानुमानाभ्याम्' (१।३।२८) इत्यत्र 'शब्द' इति प्रथमान्तपदसत्त्वेऽपि "इति चेन्न" पदात् नास्य अधिकरणारम्भकत्वम्, पञ्चमविरोधनियमात्।

(४) "अतएव च नित्यत्वम्" (१।३।२९) इत्यत्र "नित्यत्वम्" इति प्रथमान्तपद सत्त्वेऽपि च शब्दात् नास्य अधिकरणारम्भकत्वम्। षष्ठविरोधनियमात।

(५) 'समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च" (१।३।३०) इत्यत्र "अविरोध" इति प्रथमान्तपदसत्त्वेऽपि च शब्दयोगात् हेतुबोधकत्वाच्च नास्य अधिकरणारम्भकत्वम्, षष्ठविरोधनियमात्।

६। "मध्वादिष्वसम्भवादनधिकारं जैमिनि" (१।३।३१) इत्यत्र "जैमिनि" इति प्रथमान्त पदसत्त्वेऽपि पूर्वपक्षरूपेण मतान्तरज्ञापनात् विषयान्तरस्य असूचनात् च नास्य अधिकरणारम्भकत्वम्। विशविरोधनियमात्। रामानुजमतेन अधिकरणारम्भात् तद्भाष्यस्य दोष एव।

(७) 'ज्योतिषि भावाच्च' (१।३।३२) अत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। अध्याहृतेऽपि चकारसत्त्वम् अधिकरणवारकमेव।

(८) "भावं तु बादरायणोऽस्ति हि" (१।३।३३) अत्र 'बादरायण' इति प्रथमान्त पदसत्त्वेऽपि तु शब्दयोगात् नास्य अधिकरणारम्भकत्वम्, अत विषयान्तरस्य असूचनात् दशम विरोधनियमं बाधित्वा नवमविरोधनियमस्य प्रवृत्ति। परसूत्रे सर्वसम्मत्या पृथगधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति समुचितैव।

नवमम् अपशूद्राधिकरणम्।

अत्र 'शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि" (१।३।३४) इति अधि

करणारम्भकसूत्रपदात् नास्य नामकरणम्, किन्तु अधिकरणतात्पर्यम् अवलम्ब्य तत् । शूद्राणां वेदपूर्वकं ब्रह्मविद्यायाम् अधिकाराभावबोधनाय अस्य अपशूद्राधिकरण नाम । प्रतर्दनाधिकरण-देवताधिकरणद्वयवत् । रामानुज-निम्बार्क-श्रीकण्ठ-बलदेव-भिन्नानां सर्वेषां मतेन अस्मिन् अधिकरणे पञ्च सूत्राणि गृहीतानि । रामानुज-श्रीकण्ठ-मते तु सप्त सूत्राणि, द्वितीयं-पञ्चमसूत्रयोः प्रत्येकं द्विधा विभागात्, निम्बार्कमते बलदेव-मते च षट् सूत्राणि, केवलं पञ्चमसूत्रस्य द्विधाकरणात् । तानि च पञ्च सूत्राणि

१। "शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि" १।३।३४ ( ९७ )

२। "क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्' १।३।३५ ( ९८ )

३। "संस्कारपरामर्शात् तदभावाभिलापाच्च" १।३।३६ ( ९९ )

४। "तदभावनिर्द्धारणे च प्रवृत्तेः" १।३।३७ ( १०० )

५। "श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च" ( १।३।३८ ) ( १०१ )

अत्र ( १ ) "शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि" ( १।३।३४ ) इति सूत्रस्य शुक् इति प्रथमान्त-पदात् अनेन अधिकरणारम्भ, चतुर्थसामान्यनियमानुगत एव ।

( २ ) "क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिंगात् ( १।३।३५ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात् । अध्याहृतेऽपि चकारः तस्य बाधकः । षष्ठविशेषनियमात् । रामानुज-श्रीकण्ठ-मताभ्याम् एतत् न एकं सूत्रं, किन्तु सूत्रद्वयं, यथा—"क्षत्रियत्वगतेश्च" इति एकम्, "उत्तरत्र-चैत्ररथेन लिंगात्" इति अन्यत् । परन्तु तत्र न प्राचीन प्रमाणं किमपि प्रदर्शितम्; अतः नैतत् समर्थनीयम् । प्राचीनपाठखण्डने प्राचीनतरस्यैव योग्यत्वात् । केवलं युक्त्या वक्तुः अभिप्रायाविष्करणं न सर्वत्र सम्भवति । आकाङ्क्षायाः प्राबल्यात् अस्य एकसूत्रत्वमेव युक्तम् । चतुर्थविशेषनियमात् ।

( ३ ) "संस्कारपरामर्शात् तदभिलापाच्च' ( १।३।३६ ) इत्यत्र प्रथमान्त-पदाभावात् नास्य अधिकरणारम्भकत्वम् । चकारात् साकाङ्क्षत्वमपि । चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च ।

( ४ ) "तदभावनिर्द्धारणे च प्रवृत्तेः ( १।३।३७ ) एतदपि तथा । चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च ।

( ५ ) श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ( १।३।३८ ) इत्यत्रापि पूर्ववत् । चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च ।

परसूत्रे अधिकरणारम्भस्य सर्वसम्मतत्वात् अत्रैव अधिकरणसमाप्तिः सगतैव । रामानुज-निम्बार्क-श्रीकण्ठ-बलदेव-मतेन "श्रवणाध्ययनार्थप्रतिषेधात्" इति एकं सूत्रम् "स्मृतेश्च" इति अपरं सूत्रम् । अत्रापि विभागे न किमपि प्राचीन प्रमाणं प्रदर्शितम् । अत्रापि चतुर्थसामान्यनियमः चिन्तनीयः । एवं च पाठान्तरं विहाय एतदधिकरणरचनायां न कस्यापि दोषः सञ्जातः इति ।

दशमम्–कम्पनाधिकरणम् ।

अत्र "कम्पनात्" ( १।३।३९ ) इति सूत्रात् अस्य "कम्पनाधिकरणं" नाम । रामानुज निम्बार्क-भिन्नै सर्वै भाष्यकारै अनेन एकेनैव सूत्रेण एतदधिकरण रचितम् । रामानुज-निम्बार्क मतेन तु "ज्योतिर्दर्शनात्" इति परवर्तिसूत्रमपि एतदधिकरणान्तर्गतं कृतम् । तन्न सम्यक्, यत तत्र अधिकसंख्यकशिष्टभाष्यकारै पृथगधिकरण कृतम् । तच्च पुन नियमानुगतमेव ।

अत्र 'कम्पनात् ( १।३।३९ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वं समुचितमिति आपातत प्रतिभाति । परन्तु पादसंगतिबलेन तथा अध्याहृतप्रथमान्तपदसामर्थ्याच्च अत्र अधिकरणारम्भ कर्त्तुं शक्यते । पञ्चमसामान्यनियमात, एकान्यविरोधनियमाच्च ।

विज्ञानभिक्षुसम्मतपाठे तु "प्राण" इति एक अतिरिक्त शब्द अत्र परिगृहीत दृश्यते । तेन अस्य अधिकरणारम्भकत्वं संगतमेव भवति । तथापि तत्र प्राणशब्दग्रहण प्राचीनतर प्रमाणं विनैव, तेन तत्र न सम्यक् प्रामाण्यबुद्धि उदेति । तथापि सप्तमसंख्यके प्रमिताधिकरणे कठवल्लीश्रुत्युक्तस्य अङ्गुष्ठमात्रपुरुषस्य जीवत्वसंशयं निवार्य ब्रह्मत्वप्रतिपादनात्, एतदधिकरणप्रतिपाद्यमाणकम्पनस्य तादृशसंशयनिवार्यत्वात् च अत्र प्राणशब्दस्य अनुपक्ष न असंगतो भवति । अष्टमदेवताधिकरणेन तथा नवमापशूद्राधिकरणेन व्यवहितमपि एतदधिकरणम् अर्थत प्रमिताधिकरणसम्पर्कितमेव । प्रसंगसंगत्या अष्टमाधिकरणस्य तथा तस्य दृष्टान्त संगत्या नवमाधिकरणस्य च अवतारणात् । प्रमिताधिकरणोपजीव्य-कठवल्लीश्रुतेरपि अस्य उपजीव्यत्वाच्च । अत प्रथमान्तप्राणपदस्य अध्याहारेण अत्र अधिकरणारम्भ संगत एव । तथैव परसूत्रे अधिकसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिश्च समुचितैव ।

एकादश ज्योतिरधिकरणम् ।

अत्र "ज्योतिर्दर्शनात्" ( १।३।४० ) इति सूत्रस्य ज्योति " इति पदात् अस्य "ज्योतिरधिकरणं" नाम । रामानुज निम्बार्कभिन्नै सर्वै भाष्यकारै अनेन एकेन सूत्रेण एतत् अधिकरणं रचितम् । तयोर्मते एतत् सूत्र, दशमकम्पनाधिकरणस्य अन्तिमसूत्रम् । परन्तु तत् असंगतम् । "ज्योति" इति प्रथमान्तपदस्य सत्त्वात्, चतुर्थसामान्यनियमात् । तेन अत्र रामानुजनिम्बार्कास्य भाष्यद्वयमेव दूषणीयम् । परसूत्रे सर्वसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति सगच्छते ।

द्वादश–अर्थान्तरत्वादिव्यपदेशाधिकरणम् ।

अत्र "आकाशोऽर्थान्तरत्वादिव्यपदेशात्" ( १।३।४१ ) इति सूत्रस्य "अर्थान्तरत्वादिव्यपदेश" इति शब्दात् अस्य "अर्थान्तरत्वादिव्यपदेशाधिकरणं" नाम । आकाशाधिकरणस्य पूर्वम् उक्तत्वात् अत्र "आकाश"-पदेन न नामकरणम् अस्य अधिकरणस्य । अत्र रामानुज-निम्बार्क–श्रीकण्ठभिन्नै शिष्टै पञ्चभि भाष्यकारै अनेन एकेन सूत्रेण एतदधिकरणं रचितम् । रामानुज-निम्बार्क–श्रीकण्ठभाष्येषु तु परवर्तिसूत्रद्वयमपि एतदधिकरणान्तर्गतमेव दृश्यते ।

अत्र "आकाश" इति प्रथमान्तपदसत्त्वात् अत्र अधिकरणारम्भ समुचित एव । चतुर्थसामान्य-नियमात् । सर्वेषु भाष्येषु नात्र मतान्तरम् । परसूत्रे पञ्चभि भाष्ये अधिकरणारम्भात् अत्रैव अधिकरण-समाप्ति सगता एव ।

## त्रयोदश सुषुप्त्युत्क्रान्त्यधिकरणम् ।

अत्र "सुषुप्त्युत्क्रान्त्योर्भेदेन" इति (१।३।४२) सूत्रस्य "सुषुप्त्युत्क्रान्ति"—शब्दात् अस्य "सुषुप्त्युत्क्रान्त्यधिकरण" नाम । रामानुज-निम्बार्क-श्रीकण्ठभिन्नै पञ्चभि भाष्यकारै अत्र अधिकरण रचितम् । रामानुजादीना मतेन एतत् सूत्र तथा परवर्त्ति सूत्रमपि पूर्वाधिकरणान्त-र्गतमेव । तदेतत् सूत्रद्वयं

१। सुषुप्त्युत्क्रान्त्योर्भेदेन (१।३।४२) (१०५) २। पत्यादिशब्देभ्य (१।३।४३) (१०६)

अत्र (१) "सुषुप्त्युत्क्रान्त्योर्भेदेन" (१।३।४२) इति सूत्रे प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्व सगतम् । तेन रामानुज-निम्बार्क-श्रीकण्ठ-मतान्येव अत्र सम्यक् । परन्तु यत पञ्चभि आचार्यै, एतस्य अन्यथाकृतम् इति दृश्यते, तेन केनचित् प्रथमान्तपदाध्या-हारेण अस्य अधिकरणारम्भकत्व समर्थनीयम्, पञ्चमसामान्यनियमात् इति युक्त कल्पनम् । ततश्च अन्यदपि एकं कारणम् अस्ति अधिकरणभेदाय । पूर्वाधिकरणविषयवाक्यात् अस्य विषयवाक्यस्य भेदात् "अनुकृत्यधिकरण"वत् एकादशविशेषनियमानुसारेण अस्य पृथगधि-करणत्व सगतमेव । पूर्वाधिकरणे छान्दोग्यवाक्यस्य विषयवाक्यत्वम् आसीत्, अत्र तु बृह-दारण्यकवाक्यमेव विषयवाक्यम् । एतदपि पुन रामानुज-निम्बार्क-श्रीकण्ठभाष्य-सम्मतमेव । अत आपातदृष्ट्या रामानुजादीना भाष्याणा साधुत्वेऽपि न क्षोदक्षमत्व तेषाम्, विषय-भेदात । तेन रामानुज-निम्बार्क-श्रीकण्ठभाष्याणामेव दोष सिद्ध्यति ।

(२) "पत्यादिशब्देभ्य" (१।३।४३) इत्यत्र प्रथमान्तपदाभावात् नास्य अधि-करणारम्भकत्वम् । चतुर्थसामान्यनियमात । पादशेषात अत्रैव अधिकरणसमाप्तिश्च सुसगतैव । भाष्यान्तरेन तु अत्र पृथगधिकरण कृतम, तन्न सगतम, प्रथमान्तपदघटितत्व-नियमविरोधात । अत अत्र भाष्यान्तरेषु दोष कल्पनीय ।

## तृतीयपादसमालोचनम

कति कीदृशाश्च नियमा अत्र सङ्कलिता ।

अत्रापि प्रतिपादनसम्बन्धक एक एव नियमः सङ्कलितः । स तु "अनुकृतेस्तस्य च" (१।३।२२) इति सूत्रे रचितः । स च यथा—"प्रथमान्तपदाभावेऽपि उद्देश्यविधेयान्यतरसमुच्चायक-हेतुसमुच्चायक—चकारादि योगेऽपि एवं च अधिकरणनिर्देशेऽपि विषयश्रुतिभेदात् अधिकरणभेदः करणीयः' इति । इदानीं द्रष्टव्यम्—

( २ ) कति दोषाः कस्य भाष्यस्य कुत्र सन्ति ?

१।३।६ अधिकरणे रामानुज-निम्बार्क-श्रीकण्ठ-भाष्येषु "अनुकृतेस्तस्य च" इति (१।३।२२) सूत्रे अधिकरणस्य अरचनायां दोषः ।

१।३।८ अधिकरणे रामानुजभाष्ये "मध्वादिष्वसम्भवादनधिकारं जैमिनिः" इति (१।३।३१) सूत्रे अधिकरणरचनायां दोषः ।

१।३।११ अधिकरणे रामानुज निम्बार्क-भाष्ययोः "ज्योतिर्दर्शनात्" इति (१।३।४०) सूत्रे अधिकरणस्य अरचनायां दोषः ।

१।३।१२ अधिकरणे रामानुज-निम्बार्क-श्रीकण्ठ-भाष्येषु 'सुषुप्त्युत्क्रान्त्योर्भेदेन" इति १।३।४२ सूत्रे अधिकरणस्य अरचनायां दोषः ।

१।३।१३ अधिकरणे माध्वभाष्ये "पत्यादिशब्देभ्यः" इति (१।३।४३) सूत्रे अधिकरण रचनायां दोषः ।

तेन अधिकरणरचनायां रामानुजभाष्ये एकः दोषः, माध्वेऽपि एकः दोषः, ततः अधिकरणस्य अरचनायां रामानुजभाष्ये दोषत्रयं, निम्बार्के दोषत्रयं, तथा श्रीकण्ठभाष्ये दोषद्वयम् । एवं च—

| भाष्यनाम | अधिकरणस्य अरचनायाम् | अधिकरणस्य रचनायाम् |
|---|---|---|
| रामानुजभाष्ये | ३ दोषाः | १ दोषः |
| निम्बार्कभाष्ये | ३ दोषाः | ० |
| श्रीकण्ठभाष्ये | २ दोषौ | ० |
| माध्वभाष्ये | ० | १ दोषः |

अधुना द्रष्टव्यम्—

( ३ ) काश्च श्रुतयः कैश्च सूत्रैः उपजीव्यत्वेन गृहीताः ।

तत्र प्रथमाधिकरणे—

प्रथमसूत्रे—'द्युभ्वाद्यायतनं स्वशब्दात्' १।३।१ इत्यत्र "यस्मिन् द्यौः पृथिवी चान्तरिक्षम् ओतम्" (मु २।२।५)

द्वितीयसूत्रे—"मुक्तोपसृप्यव्यपदेशात्" १।३।२ इत्यत्र 'तथा विद्वान् नामरूपाद् विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मु ३।२।८)

तृतीयसूत्रे "नानुमानमतच्छब्दात्" ( १।३।३ ) इत्यत्र "यः सर्वज्ञः स सर्ववित् यस्य ज्ञानमयं तप" ( मुः १।१।९ )

चतुर्थसूत्रे "प्राणभृच्च" ( १।३।४ ) इत्यत्र श्रुतिः नोद्धृता ।

पञ्चमसूत्रे "भेदव्यपदेशात्" ( १।३।५ ) इत्यत्र "तमेवैकं जानथ" ( मुः २।२।५ )

षष्ठसूत्रे "प्रकरणात्" ( १।३।६ ) इत्यत्र "कस्मिन् नु भगवो विज्ञाते सर्वमिदं विज्ञातम् भवति" ( मुः १।१।३ )

सप्तमसूत्रे "स्थित्यदनाभ्यां च" ( १।३।७ ) इत्यत्र "द्वा सुपर्णा सयुजा.. " ( मुः ३।१।१ )

द्वितीयाधिकरणे

प्रथमसूत्रे "भूमा सम्प्रसादादध्युपदेशात्" ( १।३।८ ) इत्यत्र "तरति शोकम् आत्मवित्" ( छाः ७।१।३ ) "भूमा त्वेव विजिज्ञासितव्यः इति भूमानं भगवो विजिज्ञास इति" ( छाः ७।२३।१ )। "यत्र नान्यत् पश्यति" ( छाः ७।२४।१ ) "एषः तु वा अतिवदति यः सत्येन अतिवदति" । ( ७।१६।१ )

द्वितीयसूत्रे "धर्मोपपत्तेश्च" ( १।३।९ ) इत्यत्र "यत्र नान्यत् पश्यति" ( छाः ७।२४।१ )

तृतीयाधिकरणे

प्रथमसूत्रे "अक्षरमम्बरान्तधृतेः" ( १।३।१० ) इत्यत्र "एतद् वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलम् " ( बृ ३।८।७–८ ) "एतस्मिन् नु खलु अक्षरे गार्गि आकाश ओतश्च प्रोतश्च" ( बृ ३।८।११ )

द्वितीयसूत्रे "सा च प्रशासनात्" ( १।३।११ ) इत्यत्र "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः" ( बृ. ३।८।९ )

तृतीयसूत्रे "अन्यभावव्यावृत्तेश्च" ( १।३।१२ ) इत्यत्र "तद् वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ ( बृ ३।८।११ )

चतुर्थाधिकरणे

प्रथमसूत्रे "ईक्षतिकर्म्मव्यपदेशात् सः" ( १।३।१३ ) इत्यत्र "यः पुनः एतं त्रिमात्रेण ओमिति एतेन एव अक्षरेण परं पुरुषम् अभिध्यायीत" ( प्रश्नः ५।२।५ ) "परात् परं पुरिशय पुरुषम् ईक्षते" ( प्रश्न ५।५ )

पञ्चमाधिकरणे

प्रथमसूत्रे "दहर उत्तरेभ्यः" ( १।३।१४ ) इत्यत्र "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन् अन्तराकाशः" ( छाः ८।१।१ ) "यावान् वा अयमाकाशः तावान् एषोऽन्तर्हृदय आकाशः उभेऽस्मिन् द्यावापृथिवी अन्तरेव समाहिते एष आत्मा अपहतपाप्मा" ( छाः ८।१।३ )

द्वितीयसूत्रे—"गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च" ( १।३।१५ ) इत्यत्र—"इमा सर्वा प्रजा अहरहः गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" ( छा ८।३।२ )' सता सोम्य तदा सम्पन्नो भवति" ( छा ६।८।१ )

तृतीयसूत्रे—"धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः' ( १।३।१६ ) इत्यत्र "अथ य आत्मा स सेतु विधृति एषां लोकानाम् असम्भेदाय" ( छा ८।४।१ ) "एष भूतपाल एष सेतु विधरण" ( बृ ४।४।२२ )

चतुर्थसूत्रे—"प्रसिद्धेश्च" ( १।३।१७ ) इत्यत्र "आकाशो वै नाम नामरूपयो निर्वहिता" ( छा ८।१४।१ )

पञ्चमसूत्रे—'इतरपरामर्शात् स इति चेन्नासम्भवात्" ( १।३।१८ ) इत्यत्र "एष सम्प्रसाद '( छा ८।३।४ )

षष्ठसूत्रे—"उत्तराच्चेदाविर्भूतस्वरूपस्तु' ( १।३।१९ ) इत्यत्र "य एष अक्षिणि पुरुषो दृश्यते" ( छा ८।७।४ ) "परं ज्योति उपसंपद्य स्वेन रूपेण अभिनिष्पद्यते" ( छा ८।३।४ )

सप्तमसूत्रे—"अन्यार्थश्च परामर्शः" ( १।३।२० ) इत्यत्र 'सम्प्रसाद" "अभिनिष्पद्यते" ( छा ८।३।४ )

अष्टमसूत्रे—"अल्पश्रुतेरिति चेत् तदुक्तम्" ( १।३।२१ ) इत्यत्र 'दहरोऽस्मिन्न तराकाश" ( छा ८।१।१ )

षष्ठाधिकरणे—

प्रथमसूत्रे—"अनुकृतेस्तस्य च" ( १।३।२२ ) इत्यत्र "परं ज्योतिरुपसंपद्य" ( छा ८।३।४ ) "तद्देवा ज्योतिषां ज्योति" ( कठ २।५।२५ ) "आयुर्ह उपासतेऽमृतम्" ( बृ ४।४।१६ ) "न तत्र सूर्यो भाति न चन्द्रतारकम्" ( मु २।२।१० ) "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" । ( मु २।२।१० )

द्वितीयसूत्रे—"अपि च स्मर्यते" ( १।३।२३ ) इत्यत्र "न तद् भासयते सूर्यो न शशाङ्को न पावक ( गी १५।६ ) यदादित्यगतं तेजो जगद्भासयतेऽखिलम्" ( गीता १५।१२ )

सप्तमाधिकरणे—

प्रथमसूत्रे—"शब्दादेव प्रमित" ( १।३।२४ ) इत्यत्र "अङ्गुष्ठमात्र पुरुष ज्योतिरिवाधूमक." ( कठ २।४।१३ )" ईशानो भूतभव्यस्य" ( कठ २।४।१३ )

द्वितीयसूत्रे—'हृद्यपेक्षया तु मनुष्याधिकारात्" ( १।३।२५ ) इत्यत्र श्रुति नोद्धृता ।

अष्टमाधिकरणे—

प्रथमसूत्रे "तदुपर्य्यपि बादरायण सम्भवात्" ( १।३।२६ ) इत्यत्र "तत् यो यो देवाना प्रत्यबुध्यत स एव तदभवत् ( बृ १।४।१० )

द्वितीयसूत्रे "विरोध कर्म्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्" ( १।३।२७ ) इत्यत्र "स एकधा भवति त्रिधा भवति" । ( छा ७।२६।२ )

तृतीयसूत्रे "शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्" ( १।३।२८ ) इत्यत्र "एत इति वै प्रजापतिर्देवानसृजत" ( अथर्ववेद ? ) "वेदशब्देभ्य एवादौ" ( महा' शा मो २३१।५६ )

चतुर्थसूत्रे "अतएव च नित्यत्वम्" ( १।३।२९ ) इत्यत्र श्रुति· नोदधृता ।

पञ्चमसूत्रे "समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च" ( १।३।३० ) इत्यत्र-"धाता यथा पूर्वमकल्पयत्" ( नारायणोपनिषत् २३, ऋग्वेदः १०।१९०।३) "यथर्तुष्वृतुलिगानि नाना रूपाणि पर्य्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ ( स्मृति ? )

षष्ठसूत्रे "मध्वादिष्वसम्भवादनधिकार जैमिनि." ( १।३।३१ ) इत्यत्र "असौ वा आदित्यो देवमधु" (छा. ३।१।१) "आदित्यो ब्रह्म इत्यादेश" ( छा ३।१९।१ )

सप्तमसूत्रे "जोतिषि भावाच्च" ( १।३।३२ ) इत्यत्र श्रुति नोदधृता।

अष्टमसूत्रे "भाव तु बादरायणोऽस्ति हि" ( १।३।३३ ) इत्यत्र श्रुति' नोदधृता ।

नवमाधिकरणे

प्रथमसूत्रे "शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि" ( १।३।३४ ) इत्यत्र— "अहहारे त्वा शूद्र तवैव सह गोभिरस्तु" ( छा ४।२।३ )

द्वितीयसूत्रे "क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिगात्" ( १।३।३५ ) इत्यत्र ( ताण्ड्य' ब्रा० २०।१२।५, छा. ४।३।५ वचनानि )

तृतीयसूत्रे "संस्कारपरामर्शात् तदभावाभिलापाच्च" ( १।३।३६ ) "तं होपनिन्ये" ( शतपथ ब्रा ११।५।३।१३ ) "अधीहि भगव इति होपससाद" ( छा ७।१।१ ) "न शूद्रे पातकं किञ्चित् न च संस्कारमर्हति" ( मनु १०।१२।६ )

चतुर्थसूत्रे "तदभावनिर्द्धारणे च प्रवृत्ते" ( १।३।३७ ) इत्यत्र ( छा ४।४।५ )

पञ्चमसूत्रे "श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च" ( १।३।३८ ) इत्यत्र "अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्या श्रोत्रप्रतिपूरणम्" ( गौतमसंहिता २२ अ ) "तस्माच्छूद्रसमीपे नाध्येतव्यम्" ( तै स ७।१।१।६ ) "न शूद्राय मतिं दद्यात्" ( मनु ४।८० ) "द्विजातीनामध्ययनमिज्यादानम्" ( मनु १।८९ ) "पद्यु ह वा एतच्छ्मशानं यच्छूद्र" ( तै सं ७।१।१।६ )

दशमाधिकरणे—

प्रथमसूत्रे—"कम्पनात्" ( १।३।३९ ) इत्यत्र—"यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतम्" ( कठ २।३।२ ) "प्राणस्य प्राण" ( बृ ४।४।१८ ) "न प्राणेन नापानेन" ( कठ २।२।५ )

एकादशाधिकरणे—

प्रथमसूत्रे—"ज्योतिर्दर्शनात्" (१।३।४०) इत्यत्र "य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य" ( छा ८।१२।३ ) "य आत्मा अपहतपाप्मा" ( छा ८।७।१ )

द्वादशाधिकरणे—

प्रथमसूत्रे—"आकाशोऽर्थान्तरत्वादिव्यपदेशात्" ( १।३।४१ ) इत्यत्र "आकाशो वै नाम नामरूपयोर्निर्वहिता" ( छा ८।१४।१ ) "ते यदन्तरा" ( छा ८।१४।१ ) तद् ब्रह्म तदमृतं स आत्मा ( छा ८।१४।१ )

त्रयोदशाधिकरणे—

प्रथमसूत्रे—"सुषुप्त्युत्क्रान्त्योर्भेदेन" ( १।३।४२ ) इत्यत्र "प्राज्ञेन आत्मना सम्परिष्वक्त" ( बृ ४।३।२१ ) "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" ( बृ ४।३।७ )" "प्राज्ञेनात्मनान्वारूढ उत्सर्जन् याति" ( ४।३।३५ )"

द्वितीयसूत्रे "पत्यादिशब्देभ्य" ( १।३।४३ ) इत्यत्र 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः" ( बृ ४।४।२२ ) " स न साधुना कर्म्मणाभूयान्" ( कौ ३।८ )

इदानीं द्रष्टव्यम् एतादृशसूत्रोपजीव्यश्रुतिबलेन—

## ( ४ ) कीदृशी अस्य पादसङ्गतिः

अस्मिन् पादे याश्च श्रुतयः गृहीता ता सर्वा शाङ्करभाष्यानुसारेण इति बोद्धव्यम् । भाष्यान्तरे तु किञ्चिद् वैषम्यं दृश्यते । नात्र सर्वे ऐकमत्यं भजन्ते । तत्र हेतुश्च तत्त्वांशे मतवैषम्यमेव, न तु प्राचीनभाष्यादिमूलकत्वं तस्य । तथापि मतभेदेन पादप्रतिपाद्यम् अत्र प्रदर्श्यते—

शाङ्करमते ज्ञेयब्रह्मप्रतिपादकास्पष्टश्रुतिवाक्यानां समन्वय ।

भास्करमते—प्रायेण शाङ्करमतानुरूपम् ।

रामानुजमते स्पष्टलिङ्गानि वाक्यानि विचारितानि ।

माध्वमते अन्यत्रप्रसिद्धानां शब्दानां विष्णौ समन्वय ।

निम्बार्कमते—अस्पष्टस्पष्टजीवादिलिङ्गकवाक्यानां समन्वय ।

श्रीकण्ठमते स्पष्टास्पष्टलिङ्गवाक्यविचार ।

श्रीकरमते स्पष्टास्पष्टश्रुतिवाक्यसन्देहशङ्कानिर्मूलकतया स्पष्टार्थकथनम् ।

तथा च एतेषां सम्यक् पर्य्यालोचने कृते तत्त्वतः न महान् मतभेदः परिलक्ष्यते। अतः अत्र शाङ्कर-भास्कर-सम्मत-पदार्थ एव अत्र पादसंगतित्वेन ग्रहणीय इति युक्तम्। तयोः प्राचीनत्वात्। एवं च एतादृशपादसंगत्या एतत्पादीयसूत्राणि व्याख्येयानि। तेन एतत्पादीयसूत्रबलेन जीव-जगद्-ब्रह्म-स्वरूपनिरूपणादिकं प्रासंगिकमित्येव बोद्धव्यम्, ब्रह्मबोधकास्पष्ट-श्रुतीनां ब्रह्मणि समन्वयः एव मुख्य तात्पर्य्यम्।

इति प्रथमाध्याये तृतीयपादोपसंहारः।

## अथ प्रथमाध्याये चतुर्थपादः।

### प्रथमम् आनुमानिकाधिकरणम्।

अत्र "आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च" (१।४।१) इति सूत्रस्य "आनुमानिकम्" इति पदम् अवलम्ब्य अस्य "आनुमानिकाधिकरणं" नाम। तत्र माध्व-भाष्य-भिन्नेषु सर्वेषु भाष्येषु सप्त सूत्राणि गृहीतानि। माध्वभाष्ये तु परवर्त्त्यधिकरणस्य प्रथमं सूत्रम् अत्र गृहीतम्, तथा पञ्चमं सूत्रं द्विधा विभज्य अस्मिन् अधिकरणे नव सूत्राणि संगृहीतानि। तानि च सप्त सूत्राणि यथा

१। "आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च" १।४।१ (१०७)
२। "सूक्ष्मं तु तदर्हत्वात्" १।४।२ (१०८)
३। "तदधीनत्वादर्थवत्" १।४।३ (१०९)
४। "ज्ञेयत्वावचनाच्च" १।४।४ (११०)
५। "वदतीति चेन्न प्राज्ञो हि प्रकरणात्" १।४।५ (१११)
६। "त्रयाणामेव चैवमुपन्यासः प्रश्नश्च" १।४।६ (११२)
७। "महद्वच्च" १।४।७ (११३)

( ५ ) 'वदतीति चेन्न प्राज्ञो हि प्रकरणात्" ( १।४।५ ) अत्र "प्राज्ञ" इति प्रथमान्तपदसत्त्वेऽपि "इति चेन्न" पदात् नास्य अधिकरणारम्भकत्वम् । पञ्चमविरोधनियमात् । माध्वभाष्ये तु "एतत्सूत्रं द्विधा कृतम् । अधिकसमर्थनाभावात् तत् न सगतम् । चतुर्थविरोध नियमश्चात्र चिन्तनीय ।

( ६ ) "त्रयाणामेव चैवमुपन्यास प्रश्नश्च" ( १।४।६ ) अत्र "उपन्यास" तथा "प्रश्न" इति प्रथमान्तपदद्वयसत्त्वेऽपि चकारयोगात् नास्य अधिकरणारम्भकत्वम् । षष्ठविरोधनियमात् ।

( ७ ) "महद्वच्च" ( १।४।७ ) अत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । महद्वत् इत्यस्य प्रथमान्तत्वकल्पनेऽपि चकारयोगात् नाधिकरणारम्भ, षष्ठविरोधनियमात् । परसूत्रे बहुसम्मताधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति सगतैव । अत्र माध्वमतेन न समाप्ति, परन्तु परसूत्रे एव तथा ।

## द्वितीय चमसाधिकरणम् ।

अत्र "चमसवदविरोधात्" ( १।४।८ ) इति सूत्रस्य 'चमस"-शब्दात् अस्य 'चमसाधिकरणं" नाम । माध्वभिन्नेषु सर्वेषु भाष्येषु अत्र सूत्रत्रय गृहीतम् । माध्वमतेन तु 'चमसवदविरोधात्" इति सूत्रम् पूर्वाधिकरणान्तर्गतं कृतम् । शिष्टसूत्रद्वयेन द्वितीयाधिकरणं रचितम् । तच्च सूत्रत्रय यथा—

१। चमसवदविरोधात्" १।४।८ ( ११४ )

२। "ज्योतिरुपक्रमा तु तथा ह्यधीयत एके" १।४।९ ( ११५ )

३। 'कल्पनोपदेशाच्च मध्वादिवदविरोध" १।४।१० ( ११६ )

( १ ) अत्र 'चमसवदविरोधात्" ( १।४।८ ) इति सूत्रे प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् समुचितम्, तथापि माध्वभाष्यभिन्नेषु सर्वेषु भाष्येषु तथा एव कृतत्वात् प्रथमान्तोद्देश्यपदमेकम् अध्याहृत्य अथवा चमसवत् शब्दस्य प्रथमान्तत्वाभ्युपगमेऽपि अधिकरणारम्भ कर्तुं शक्यते । यत सर्वै भाष्यकारै अत्र "अजा"-शब्दस्य प्रधानबोधकत्व वर्णितम् । एव च उपजीव्य श्रुतिभेदात्, पूर्वाधिकरणात् विषयभेदाच्च अस्य पृथगधिकरणत्वमपि समर्थयितु शक्यम् । एतदर्थम् एकादशविरोधनियमो द्रष्टव्य । सूत्राक्षरमात्रावलम्बनेन अस्य पूर्वाधिकरणाङ्गत्व सगच्छते । तथा च माध्वभाष्यस्य युक्ततरत्वं तत्र कल्पनीयम् । परन्तु अधिकविरोधात् तन्न ग्रहणीयम् । अत अस्मिन् सूत्रे अधिकरणस्य अरचनायां माध्वभाष्यस्यैव दोष सञ्जात इति बोद्धव्यम् ।

( २ ) ज्योतिरुपक्रमा तु तथा ह्यधीयत एके" १।४।९ अत्र "ज्योतिरुपक्रमा" तथा 'एके" इति प्रथमान्तपदद्वयसत्त्वात् अत्र पृथगधिकरण सम्भाव्यते, परन्तु अनिषेधार्थक-"तु"-शब्दात् तस्य बाधात सञ्जात, नवमविरोधनियमात् इति । माध्वभाष्ये तु अत्र पृथगधिकरण कृतम् । तेन अत्र अधिकरणरचनायां पुनस्तस्यैव दोष ।

( ३ ) कल्पनोपदेशाच्च मध्वादिवदविरोधः" इति १।४।१० सूत्रे प्रथमान्तपदात् अस्य पृथगधिकरणारम्भकत्वं संगतम्, तथापि च-शब्द-योगेन सापेक्षत्वसाधनात् तस्य व्याघात सञ्जात, षष्ठ-विशेषनियमादिति । अतः परं सर्वसम्मत्या पृथगधिकरणारम्भात् अत्रैव एतदधिकरणसमाप्तिः ।

## तृतीयं सङ्ख्योपसंग्रहाधिकरणम् ।

अत्र 'न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च" इति ( १।४।११ ) सूत्रस्य "सङ्ख्योपसंग्रह"-शब्दात् अस्य "संख्योपसंग्रहाधिकरणं" नाम । निम्बार्क-श्रीकण्ठभिन्नैः सर्वैः भाष्यकारैः अत्र सूत्रत्रय गृहीतम् । निम्बार्कभाष्ये सूत्रचतुष्टयं, तथा श्रीकण्ठभाष्ये सूत्रपञ्चकम् अत्र गृहीतं दृश्यते । तच्च सूत्रत्रयं यथा

१। "न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च" १।४।११ ( ११७ )

२। "प्राणादयो वाक्यशेषात्' १।४।१२ ( ११८ )

३। "ज्योतिषैकेषामसत्यन्ने' १।४।१३ ( ११९ )

अत्र ( १ ) "न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च" इति ( १।४।११ ) सूत्रे प्रथमान्तपदाभावात् नात्र अधिकरणारम्भः समुचितः । तथापि सर्वैः भाष्यकारैः तथैव कृतम् इति दृश्यते । प्रथमान्तपदाध्याहारेणापि तन्न सम्भवति, चकार-योगात् । अतः अत्र एको नियम सङ्कलनीयः, येन एतादृशस्थले नियमानुगतत्वं सम्भवेत् । स च नियमः इत्थं भवतु

"प्रथमान्तपदाभावेऽपि यत्र "अपि" "च" "वा"-प्रभृतिप्रसङ्गान्तरत्वबोधकशब्देन उद्देश्य-विधेयान्यतरभेद प्रसज्येत, तत्र पृथगधिकरणं युक्तम् ।" अत्र "अपि"-शब्देन पूर्वोक्तात् अन्य-विषयत्वं सूचयति । अतः एतत्सूत्रस्य पृथगधिकरणत्वं सगच्छते । यद् वा श्रुतिभेदेन विधेय-भेदात्, एकादशविशेषनियमानुसारेण, तथा द्वादशविशेषनियमानुसारेण अस्य पृथगधिकरणत्व युक्तम् ।

( २ ) "प्राणादयो वाक्यशेषात्" ( १।४।१२ ) इति सूत्रे "प्राणादयः" इति प्रथमान्त-पदसत्त्वात् अस्य अधिकरणारम्भकत्व समुचितमेव, परन्तु नैकस्मिन्नपि भाष्ये एतत् कृतं दृश्यते । तेन "वाक्यशेषात्" इति पदस्य "इतरादि" शब्दवत् स्वरूपतः सापेक्षार्थकत्वात् प्राणा-दयः इति प्रथमान्तपदसत्त्वेऽपि नास्य अधिकरणारम्भकत्वम्; सप्तमविशेषनियमात् ।

( ३ ) ज्योतिषैकेषामसत्यन्ने" ( १।४।१३ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधि-करणारम्भकत्वम्, चतुर्थसामान्यनियमात् । अपितु "एकेषाम्" इति पदेन प्रकृतत्वस्य बोधनता नास्य पृथगधिकरणत्वसूचकत्वम् । परसूत्रेण निम्बार्क-श्रीकण्ठ-भिन्न-सर्वैः भाष्यकारैः अधि-करणस्य रचितत्वात् एतेनैव अधिकरणसमाप्तिः सुसंगता ।

## चतुर्थं कारणत्वाधिकरणम् ।

अत्र "कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः" इति ( १।४।१४ ) सूत्रस्य

कारणत्व"-शब्दात् अस्य 'कारणत्वाधिकरण" नाम। अत्र निम्बार्क-मध्व-श्रीकण्ठमितेषु सर्वेषु भाष्येषु सूत्रद्वय गृहीतम्। तच्च सूत्रद्वयम्—

१। "कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्ते" १।४।१४ (१२०)

२। 'समाकर्षात्" १।४।१५ (१२१)

अत्र (१) 'कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्ते" इति (१।४।१४) सूत्रे प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्व युक्तम्। निम्बार्क-श्रीकण्ठभाष्यद्वये न तथा कृतम्। निम्बार्कमतेन अत्रैव तृतीयाधिकरणस्य समाप्ति, माध्वमते तु अनेन एकेन सूत्रेण एतदधिकरणं रचितम्, तेन तन्मतेऽपि अत्रैव अधिकरणस्य समाप्ति दृश्यते। श्रीकण्ठमतेन तु इतोऽपि परस्मिन् सूत्रे तस्यैव तृतीयाधिकरणस्य समाप्ति परिलक्ष्यते। तथापि षण्णां भाष्याणां मतेन अनेनैव अधिकरणारम्भात् प्रथमान्तपदाध्याहारेणैव तथा करणीयम्। तेन अधिकरणस्य अरचनायां निम्बार्क-श्रीकण्ठभाष्यद्वयमेव दोषभाग् भवति, पञ्चमसामान्यनियमात्। च शब्देन प्रसगभेदात् च द्वादशविशेषनियमात्।

(२) "समाकर्षात्" (१।४।१५) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्व युक्तम् चतुर्थसामान्यनियमात्। निम्बार्क-मध्व-वल्लभमतेषु तु अनेन पृथक् एकम् अधिकरणाम् आरब्धम्। तेन अधिकसंख्यकमतविरोधात् तेषामेव दोष। तथा च अधिकसम्मत्या अत्रैव अधिकरणसमाप्ति समुचिता।

पञ्चम वालाक्यधिकरणम्।

अत्र प्रथमं सूत्रं "जगद्वाचित्वात् (१।४।१६)। अत्र सूत्रपदानुसारेण नास्य नामकरणम्, किन्तु उपजीव्यश्रुत्यनुसारेणेति। मध्वाचार्य्यभिन्नै सर्वै भाष्यकारै 'जगद्वाचित्वात्" इति सूत्रेण अधिकरणारम्भ कृत। मध्वमतेन तु "समाकर्षात्" इति पूर्वस्मात् सूत्रात् अधिकरणम् आरब्धम्। तच्च अधिकरणम् अष्टभि सूत्रै रचितम्। "अवस्थितेरिति काशकृत्स्न" (१।४।२२) इत्येव तत्र अन्तिमसूत्रम्। निम्बार्कमतेन 'जगद्वाचित्वात्" इति सूत्रात् त्रयोदशभि सूत्रै एतदधिकरण रचितम्। तन्मते अस्य अन्तिम सूत्रं "एतेन सर्वे व्याख्याता व्याख्याता" इति पादशेषसूत्रम्। तेन अत्र 'जगद्वाचित्वात्" इति सूत्रात् एतत्पादशेषपर्य्यन्त शङ्कर-भास्कर-रामानुज-श्रीकण्ठ-श्रीपतिमतेषु अधिकरणचतुष्टयम्। निम्बार्कमतेन एकमेव अधिकरणं, मध्व-वल्लभमतद्वयेन अधिकरणत्रयमिति दृश्यते। विस्तरस्तु ग्रन्थस्य अस्य द्वितीयपादे प्रथमसरणिमध्ये द्रष्टव्य। तथा च शङ्करादिषण्णां मतेषु तत्र सूत्रत्रयम्—

१। 'जगद्वाचित्वात्" १।४।१६ (१२२)

२। 'जीवमुख्यप्राणलिंगान्नेति चेत् तद् व्याख्यातम्" १।४।१७ (१२३)

३। "अन्यार्थं तु जैमिनि प्रश्नव्याख्यानाभ्यामपि चैवमेके" १।१।१८ (१२४)

अत्र( १ ) "जगद्वाचित्वात्" ( १।४।१६ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वं समुचितमिति । तथापि अधिकसंख्यकैः भाष्यकारैः तथैव कृतम्, अतः पञ्चमसामान्यनियमानुसारेण प्रथमान्तपदाध्याहारेण एतत्सम्पादनीयम् इति बोद्धव्यम् । विषयश्रुतिभेदाच्च, एकादशविशेषनियमात् । माध्वभाष्ये एतस्य अन्यथाकरणात् तथाच अत्र अधिकरणस्य अनारम्भात् तस्य दोष एव सञ्जातः इति ।

( २ ) "जीवमुख्यप्राणलिङ्गान्नेति चेत् तद् व्याख्यातम्" ( १।४।१७ ) अत्र "तद्-व्याख्यातम्" इति प्रथमान्तपदसत्त्वेऽपि "इति चेत्" इति पदात् नास्य अधिकरणारम्भकत्वम्, पञ्चमविशेषनियमात् । भास्करमते तु परसूत्रेण सह मिलित्वा एतत् एकं सूत्रम् इति दृश्यते । तत तु अधिकमतविरुद्धम्, दर्शित च एतत् सूत्रद्वयैकीकरण-प्रसंगे ।

( ३ ) अन्यार्थं तु जैमिनि प्रश्नव्याख्यानाभ्यामपि चैवमेके" ( १।४।१८ ) इत्यत्र "जैमिनि" तथा "एके" इति प्रथमान्तपदद्वयसत्त्वेऽपि नामपदेन स्वसिद्धान्तानुकूलमतान्तरज्ञापनात् विषयान्तरस्य असूचनाच्च, दशमविशेषनियमात्, तथा "तु"-शब्दयोगात् अर्थतश्च सापेक्षत्वबोधकत्वात् नवमविशेषनियमात् नास्यापि अधिकरणारम्भकत्वम् । परसूत्रेण अधिकरणारम्भे षण्णां सम्मतत्वात् अत्रैव अधिकरणसमाप्ति संगच्छते ।

## षष्ठं वाक्यान्वयाधिकरणम्

अत्र "वाक्यान्वायात्" इति ( १।४।१९ ) सूत्रात् अस्य "वाक्यान्वयाधिकरण" नाम । तत्र निम्बार्क-माध्व-भिन्नेषु सर्वेषु भाष्येषु सूत्रचतुष्टयं गृहीतम् । निम्बार्कमतेन एतत् सूत्र "वाक्यधिकरण"नामपूर्वाधिकरणस्य चतुर्थं सूत्रम्, माध्वमतेन तु पूर्वं "समाकर्षा"-ख्याधिकरणस्य पञ्चम सूत्र भवति । तच्च सूत्रचतुष्टयं

१। "वाक्यान्वयात्" १।४।१९ ( १२५ )

२। "प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्य" १।४।२० ( १२६ )

३। "उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः" १।४।२१ ( १२७ )

४। "अवस्थितेरिति काशकृत्स्न" १।४।२२ ( १२८ )

अत्र (१) "वाक्यान्वयात्" इति ( १।४।१९ ) सूत्रे प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्व सगतम् । तथापि विषयश्रुतिभेदात् अधिकरणारम्भस्य बहुसम्मतत्वात् प्रथमान्तपदाध्याहारेण तत्सङ्गतत्वम् कल्पनीयम् . पञ्चमसामान्यनियमात् एकादशविशेषनियमाच्च । निम्बार्क-माध्वमतद्वयेन तु अधिकरणस्य अनारम्भात् तयोः दुष्टत्वम् ।

( २ ) "प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्य" (१।४।२०)इत्यत्र "लिंगम्" तथा "आश्मरथ्य" इति प्रथमान्त-पदद्वयसत्त्वेऽपि पूर्वपक्षरूपेण परमतवर्णनात् विषयान्तरस्य असूचनाच्च न अस्य अधिकरणारम्भकत्वम् । एतदर्थं दशम विशेषनियम स्मर्त्तव्य ।

( ४ ) "आत्मकृते परिणामात्" ( १।४।२६ ) इत्यत्रापि प्रथमान्तपदाभावात् तथैव; चतुर्थसामान्यनियमात् । अत्र रामानुज-श्रीकण्ठ-भाष्यद्वयमध्ये सूत्रद्वयं पठितम् । "आत्मकृते" इति एक सूत्र, "परिणामात्" इति अपरं सूत्रम् इति । तत् तु अधिकसम्मत्या असगतमेव इति वक्तव्यम् । च-काराभावात् हेतुद्वयस्य साकाक्षत्वात् च पृथक्करणं न युक्तम् । चतुर्थनियमश्च अत्र चिन्तनीय ।

( ५ ) "योनिश्च हि गीयते" ( १।४।२७ ) इत्यत्र "योनिः" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तम्, चतुर्थसामान्यनियमात् । परन्तु च-शब्दयोगात् षष्ठविशेषनियमात् तस्य निषेध इति बोद्धव्यम्, त्रयोदशविशेषनियमबोधितातिरिक्तविषयस्य असूचनात् । हि-शब्देन एतत्सूत्रार्थस्य हेतुबोधकत्वमपि सूचयति, षष्ठविशेनियमात् । हेतोः समुच्चायकत्वे चकारस्य हेतुबोधक-प्रथमान्तपदस्यापि नाधिकरणारम्भकत्वम् । परसूत्रे प्रायेण सर्वे अधिकरणस्य आरब्धत्वात् अत्रैव अधिकरणसमाप्ति समुचिता एवेति कल्प्यते ।

## अष्टमं सर्वव्याख्यानाधिकरणम् ।

अत्र "एतेन सर्वे व्याख्याता व्याख्याताः" (१।४।२८) इति सूत्रस्य "सर्वे" तथा 'व्याख्याता' इति पदद्वयात् अस्य "सर्वव्याख्यानाधिकरण" नाम । अत्र निम्बार्क-वल्लभभिन्नैः सर्वैः भाष्यकारैः अनेन एकनैव सूत्रेण एतदधिकरणं रचितम् । निम्बार्कमतेन एतत् सूत्रं "वाक्यान्वय"-पञ्चमाधि-करणस्य त्रयोदशसूत्रम्, वल्लभमतेन तु "प्रकृत्यधिकरण" नाम अष्टमाधिकरणस्य षष्ठं सूत्रम् ।

अत्र "सर्वे व्याख्याताः" इति प्रथमान्तपदद्वयात् अधिकरणारम्भः युक्त । चतुर्थ-सामान्य-नियमात् । निम्बार्क-वल्लभ-भाष्यद्वये तस्य अन्यथाकरणात् तद्भाष्यद्वयमेव दोषभाग् भवति । सूत्र-पदस्य अभ्यासात् अत्रैव यथा अध्यायसमाप्ति तथा पादसमाप्तिः, तथैव अधिकरणसमाप्तिश्च ।

## चतुर्थपाद-समालोचनम् ।

इदानीं एतत्पादोपसंहारे अस्माकं प्रागुक्तरीत्या प्रथमादिपादोपसंहारवत् चत्वारो विषया आलोचनीया, ते च

१। कति कीदृशाश्च नियमाः अत्र सङ्कलिता ।

२। कति दोषाः कस्य भाष्यस्य कथं संवृत्ता ।

३। काश्च श्रुतय कैश्च सूत्रैः उपजीव्यत्वेन गृहीताः ।

४। उपजीव्यश्रुतिबलेन कीदृशी च पादसंगतिः उचिता इति ।

तत्र तावत् प्रथमं आलोच्यम्

### ( १ ) कति कीदृशाश्च नियमाः अत्र संकलिताः ।

अस्मिन् पादे अतिरिक्तनियमद्वयं सङ्कलितम् । तत्र तावत् प्रथम "न संख्योपसंग्रहात्" (१।४।११ ) इत्यादि सूत्रे द्वादशविशेषनियम सङ्कलित । स च "यत्र" "अपि" प्रभृति-प्रसंगान्तर-

बोधकत्वेनोद्देश्य विधेयान्यतरस्मात् भेद सम्भवेत्, तत्र पृथगधिकरणं मन्तव्यमिति।"

द्वितीयस्तु "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" ( १।४।२३ ) इति सूत्रे ययोद्देश्यविशेष नियमरूपेण मद्वलितं। स च—"चकारेण प्रागुक्तोद्देश्यविधेयातिरिक्तविषयस्य उद्देश्यविधेय निरूपणरूपेण मनिवेशे। हेतौ समुच्चये वा नास्य अधिकरणारम्भबाधकत्वम्" इति।

इदानीं द्रष्टव्यम्—

( २ ) कति दोषाः कस्य भाष्यस्य कथं सम्भूता

तत्र १।४।२ अधिकरणे माध्वभाष्ये "नमसवर्णविशेषात्" इति ( १।४।८ ) सूत्र अधिकरणस्य अरचनायां दोष।

पुन तत्रैव १।४।२ अधिकरणे माध्वभाष्ये "ज्योतिरुपक्रमा तु" इति ( १।४।९ ) सूत्र अधिकरणस्य रचनायां दोष।

तत १।४।४ अधिकरणे निम्बार्क-श्रीकण्ठभाष्ययो 'कारणत्वेन चाकाशादिषु' इति ( १।४।१४ ) सूत्र अधिकरणस्य अरचनायां दोष।

पुन तत्रैव १।४।४ अधिकरणे निम्बार्क-माध्व-वल्लभ-भाष्येषु 'समाकर्षात्" इति (१।४।१५) सूत्र अधिकरणस्य रचनायां दोष।

तत १।४।५ अधिकरणे माध्वभाष्ये "जगद्वाचित्वात्" इति ( १।४।१६ ) सूत्रे अधिकरणस्य अरचनायां दोष।

तत १।४।६ अधिकरणे निम्बार्क-माध्वभाष्ययो 'वाक्यान्वयात्" इति ( १।४।१९ ) सूत्र अधिकरणस्य अरचनायां दोष।

तत १।४।७ अधिकरणे निम्बार्कभाष्ये "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति ( १।४।२३ ) सूत्रे अधिकरणस्य अरचनायां दोष।

तत १।४।८ अधिकरणे निम्बार्क-वल्लभभाष्ययो "एतेन सर्वे व्याख्याता व्याख्याता" इति ( १।४।२८ ) सूत्रे अधिकरणस्य अरचनायां दोष।

तेन अधिकरणरचनायां माध्वभाष्ये दोषद्वयम्, तथा निम्बार्कवल्लभभाष्ययो प्रत्येकम् एकैक दोष। तथैव अधिकरणस्य अरचनायां माध्वभाष्ये दोषत्रयम्, निम्बार्कभाष्ये दोषचतुष्टयम्, श्रीकण्ठभाष्ये एको दोष, वल्लभभाष्ये च एको दोष इति परिलक्ष्यते। एवं च—

| भाष्यनाम | अधिकरणस्य अरचनायां | अधिकरणस्य रचनायां |
|---|---|---|
| माध्वभाष्ये | २ दोषौ | ३ दोषा |
| निम्बार्कभाष्ये | ४ दोषा | १ दोष |
| वल्लभभाष्ये | १ दोष | १ दोष |
| श्रीकण्ठभाष्ये | १ दोष | ०। इति। |

अधुना द्रष्टव्यम्

### ३। काश्च श्रुतयः कैश्च सूत्रैः उपजीव्यत्वेन गृहीता

तत्र प्रथमाधिकरणे

प्रथमसूत्रे "आनुमानिकमप्येकेषाम् " (१।४।१) सूत्रे "महत. परमव्यक्तमव्यक्तात् पुरुष परः" (कठ १।३।१०), "आत्मानं रथिनं विद्धि शरीरं रथमेव तु" (कठ १।३।३)

द्वितीयसूत्रे "सूक्ष्मं तु तदर्हत्वात्" ( १।४।२ ) सूत्रे "गोभि श्रीणीत मत्सरम्" ( ऋ सं ९।४६।४ )

तृतीयसूत्रे "तदधीनत्वादर्थवत्" ( १।४।३ ) सूत्रे "माया तु प्रकृतिं विद्धि मायिनं तु महेश्वरम्" ( श्वे: ४।१० )

चतुर्थसूत्रे "ज्ञेयत्वावचनाच्च" ( १।४।४ ) सूत्रे श्रुति नोद्धृता

पञ्चमसूत्रे "वदतीति चेन्न प्राज्ञो हि प्रकरणात्" ( १।४।५ ) इत्यत्र "महत· परं ध्रुवं निचाय्य" ( कठ १।३।११ ), "पुरुषान्न पर किञ्चित्" ( कठ १।३।११ )

षष्ठसूत्रे· "त्रयाणामेव चैवमुपन्यास· प्रश्नश्च" ( १।४।६ ) इत्यत्र "स त्वमग्निम्" ( कठ १।१।१३), "येयं प्रेते विचिकित्सा" ( कठ १।१।१० ), "अन्यत्र धर्म्मात्" ( कठ १।२।१४ )

सप्तमसूत्रे "महद्वच्च" ( १।४।६ ) इत्यत्र "बुद्धेरात्मा महान् पर" ( कठ १।३।१० )

द्वितीयाधिकरणे

प्रथमसूत्रे "चमसवदविशेषात्" ( १।४।८ ) इत्यत्र "अजामेकां लोहितशुक्लकृष्णा" ( श्वे: ४।५ )

द्वितीयसूत्रे "ज्योतिरुपक्रमा तु तथा ह्यधीयत एके" ( १।४।९ ) इत्यत्र "यदग्ने रोहितं रूपम्" ( छा· ६।४।१ )

तृतीयसूत्रे "कल्पनोपदेशाच्च मध्वादिवदविरोध." ( १।४।१० ) इत्यत्र "असौ वा आदित्यो देवमधु" ( छा· ३।१।१ )

तृतीयाधिकरणे

प्रथमसूत्रे "न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च" ( १।१।११ ) इत्यत्र "यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः" ( बृः ४।४।१७ )

द्वितीयसूत्रे "प्राणादयो वाक्यशेषात्" (१।१।१२) इत्यत्र "प्राणस्य प्राणम् उत चक्षुषश्चक्षु" ( बृः ४।४।२८ )

तृतीयसूत्रे "ज्योतिषैकेषामसत्यन्ने" ( १।१।१३ )इत्यत्र "तद्देवा ज्योतिषा ज्योति·" ( बृः ४।४।१६ )

चतुर्थाधिकरणे—

प्रथमसूत्रे— कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्ते" (१।१।१४) इत्यत्र 'आत्मन आकाश सम्भूत" ( तै २।१ ) "तत् तेजोऽसृजत" ( छा ६।२।३ )

द्वितीयसूत्रे—'समाकर्षात" ( १।१।१५ ) इत्यत्र "असदेवेदमग्र आसीत" ( छा ३।१०।१, ६।२।१, तै २।७ )

पञ्चमाधिकरणे—

प्रथमसूत्रे—"जगद्वाचित्वात" ( १।१।१६) इत्यत्र "ब्रह्म ते ब्रवाणि" ( कौ ४।१८), यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वै तत कर्म्म स वै वेदितव्य" (कौ ४।१८), "एवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते" ( कौ ४।१९ )

द्वितीयसूत्रे—'जीवमुख्यप्राणलिङ्गान्नेति चेत्र तद्व्याख्यातम्" ( १।४।१७ ) इत्यत्र 'प्राणबन्धनं हि सोम्य मन ( छा ६।८।२ )

तृतीयसूत्रे—'अन्यार्थं तु जैमिनि" (१।४।१७) इत्यत्र "क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्" ( कौ ४।१९ ), "यदा सुप्त स्वप्नं न कश्चन पश्यति अथ अस्मिन् प्राण एवैकधा भवति" (कौ ४।१० ), "य एष विज्ञानमय पुरुष क्वैष तदाभूत् कुत एतदागात्" ( बृ २।१।१६ ), "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते" ( बृ २।१।१७)

षष्ठाधिकरणे—

प्रथमसूत्रे—'वाक्यान्वयात्" (१।४।१९) इत्यत्र "आत्मा वा अरे द्रष्टव्य श्रोतव्यो मन्तव्य" ( बृ २।४।५, ४।५।६ )

द्वितीयसूत्रे—'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्य" (१।४।२०) इत्यत्र "आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति" ( बृ ४।५।६ ), "इदं सर्वं यदयमात्मा" ( बृ ४।५।७ )

तृतीयसूत्रे— उत्क्रमिष्यत एवंभावादित्यौडुलोमि" (१।४।२१) इत्यत्र "एष सम्प्रसादो ऽस्माच्छरीरात् समुत्थाय" ( छा ८।१२।३ )

चतुर्थसूत्रे—"अवस्थितेरिति काशकृत्स्न" ( १।४।२२ ) इत्यत्र "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" ( छा ६।३।२ ), "धीरो नामानि कृत्वा अभिवदन् यदास्ते" ( तै आ ३।१२।७ )

सप्तमाधिकरणे—

प्रथमसूत्रे—'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" ( १।४।२३ ) इत्यत्र 'तदैक्षत अहं बहु स्याम्" ( छा ६।२।३ ), "येनाश्रुतं श्रुतं भवति" ( छा ६।१।३ ), "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" ( छा ६।१।४ )

द्वितीयसूत्रे "अभिध्योपदेशाच्च" ( १।४।२४ ) इत्यत्र "सोऽकामयत बहु स्याम् इति" ( तै २।६ ) "तदैक्षत बहु स्या प्रजायेय ( छा ६।२।३ )

तृतीयसूत्रे 'साक्षाच्चोभयाम्नानात्" ( १।४।२५ ) इत्यत्र "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते" ( छा १।९।१ )

चतुर्थसूत्रे "आत्मकृते. परिणामात्" ( १।४।२६ ) इत्यत्र "तदात्मान स्वयमकुरुत" ( तै २।७ ), "सच्च त्यच्चाभवत" ( तै. २।६ )

पञ्चमसूत्रे "योनिश्च हि गीयते" ( १।४।२७ ) इत्यत्र "यद्भूतयोनि परिपश्यन्ति"। ( मु १।१।६ ), "यथोर्णनाभि सृजते गृह्णते च" ( मु १।१।७ )

अष्टमाधिकरणे

प्रथमसूत्रे "एतेन सर्वे व्याख्याता व्याख्याता" (१।४।२८) इत्यत्र "अण्व्य इवेमा धाना" ( छाः ६।१२।१-३ ), "असदेवेदमग्र आसीत" ( छा ३।१९।१ ), "स्वभावमेके" ( श्वे १।२ ) इति।

इदानीं द्रष्टव्यम् एतादृशसूत्रोपजीव्यश्रुतिबलेन

### ( ४ ) कीदृशी अस्य पादसगति ।

अत्र याश्च श्रुतय. सूत्रोपजीव्यत्वेन प्रदर्शिताः ता. सर्वा शाङ्करभाष्यानुमता । भाष्यान्तरे अत्र सर्वथा न ऐक्यं दृश्यते । तथापि मतान्तरीयभाष्यभेदेन यथा पादप्रतिपाद्यरूपा· पादसंगतय कल्पयन्ते, ताश्च अत्र प्रदश्यन्ते

शाङ्करमते अव्यक्तादिसन्दिग्धपदमात्राणामेव समन्वय· ।

भास्करमते शाङ्करमतानुरूपम् ।

रामानुजमते स्पष्टतरजीवादिलिंगकानि वाक्यानि विचारितानि।

निम्बार्कमते कापिलतन्त्रसिद्धाब्रह्मात्मकप्रधानादिप्रतिपादकवाक्याना ब्रह्मणि समन्वय· ।

माध्वमते अन्यत्रैव प्रसिद्धानां शब्दाना विष्णौ समन्वय· ।

श्रीकण्ठमते अस्पष्टलिंगवाक्यविचार. ।

श्रीपतिमते क्वचित् शाखासु प्रधानजगत्कारणत्वप्रतिपादकशब्दाना- स्पष्टार्थकथनम् ।

एतेषा पादप्रतिपाद्याना पर्य्यालोचने कृते तत्त्वत नास्ति महान् मतभेद इत्येव प्रतीयते । तत्त्वविषये साम्प्रदायिकसिद्धान्त एव अत्र मतभेदहेतु । अन्यथा नूनम् अत्र एतादृश स्वल्पोऽपि मतभेद न स्यात् । तथापि पादोऽय ब्रह्मणि श्रुतीना समन्वयप्रदर्शनार्थं प्रधानमल्ल-निबर्हणन्यायेन श्रुतिसाहाय्येन प्रधानस्य अश्रौतत्वप्रतिपादनेन जगत्कारणत्वखण्डनपर एवेति बोद्धव्यम् । अत्र न कस्यापि मतविरोध वर्त्तते । एव च एतत्पादप्रतिपाद्यरूपपादसगत्यनुसारेण सर्वाणि एतत्पादीयाधिकरणानि व्याख्येयानि । परन्तु तथापि अधिकरणसंख्यायाम.

अधिकरणारम्भसूत्रनिर्णये, अधिकरणान्तर्गतसूत्रसंख्यायां च, अस्मिन् पादे यादृशमत भेदबाहुल्यं दृश्यते, तादृक् न प्रथमान्पादत्रये दृश्यते। विचित्रं बुद्धिकौशलं भाष्यकाराणां, यत ते श्रुतिनामाध्यायपादसंगतिचतुष्टयमपि अनुसृत्यैव एतादृशव्याख्यानमेतत् कृतवन्तः। तेषां सर्वेषां सूत्रार्थवर्णने विचारनैपुण्यस्य अखण्डनीयमिव प्रतिभाति। तथापि अधिकरणरचना विषये यथासम्भवं कौशलम् अत्र अवलम्ब्य सूत्रार्थविचारं विनैव सूत्रकृत्सम्मतभाष्य निर्णयप्रयासमात्रम् अत्र कृतम् इति।

## प्रथमाध्यायसमालोचनम्।

एवं च यदि एतदध्यायान्तर्गतपादचतुष्टयस्य समालोचनफलम् अत्र समाह्रियते, तदा तत् इत्थमेव भवति—

| भाष्यनाम | प्रथमपादे | | द्वितीयपादे | | तृतीयपादे | | चतुर्थपादे | | समष्टिदोषा |
|---|---|---|---|---|---|---|---|---|---|
| | अधिकरणरचनायां दोषा | अधिकरणारचनायां दोषा | अधिकरणरचनायां दोषा | अधिकरणारचनायां दोषा | अधिकरणरचनायां दोषा | अधिकरणारचनायां दोषा | अधिकरणरचनायां दोषा | अधिकरणारचनायां दोषा | |
| शङ्कर | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| भास्करः | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| रामानुज | ० | ० | ० | १ | १ | ३ | ० | ० | [illegible] |
| निम्बार्क | ० | १ | ० | ० | ० | ३ | १ | ४ | ९ |
| मध्व | १ | ० | ० | ० | १ | ० | २ | ३ | ७ |
| श्रीकण्ठ | १ | ० | २ | ० | ० | २ | ० | १ | ६ |
| श्रीपति | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| वल्लभ | ० | १ | १ | ० | ० | ० | १ | १ | ४ |
| समष्टि | २ | २ | ३ | १ | २ | ८ | ४ | ९ | ३१ |

एव च एकत्रिशत्‌दोषाणा संक्षिप्तविभाग

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| रामानुजभाष्ये | ५ | दोषा | तत्र | अधिकरणस्य रचनाया | १ | अधिकरणस्य अरचनाया | ४ |
| निम्बार्कभाष्ये | ९ | ,, | ,, | ,, | १ | ,, | ८ |
| माध्वभाष्ये | ७ | ,, | ,, | ,, | ४ | ,, | ३ |
| श्रीकण्ठभाष्ये | ६ | ,, | ,, | ,, | ३ | ,, | ३ |
| वल्लभभाष्ये | ४ | ,, | ,, | ,, | २ | ,, | २ |

अत्र केवल शङ्कर-भास्कर-श्रीपतिभाष्येषु दोषाभाव इति ।

ये च त्रयोदश नियमा. अत्र सङ्कलिता तेषाम् अयं संक्षेप. । तत्र

**प्रथमनियमः** "अथातो ब्रह्मजिज्ञासा" इति १।१।१ सूत्रे सङ्कलित, यथा—सूत्रपदद्वारा अधिकरणनामकरणम् ।

**द्वितीयनियमः** "अथातो ब्रह्मजिज्ञासा" इति १।१।१ सूत्रे सङ्कलित, यथा "अध्याय-पादारम्भे अधिकरणारम्भ करणीय ।"

**तृतीयनियमः** "अथातो ब्रह्मजिज्ञासा" इति १।१।१ सूत्रे सङ्कलित, यथा पुन तादृशप्रथमान्तपदप्राप्तिपर्यन्तम् अधिकरणस्थिति ।"

**चतुर्थनियमः** "शास्त्रयोनित्वात्" इति १।१।३ सूत्रे संकलित, यथा "चकारादिपदेन अन्यथा वा उद्देश्यविधेयान्यतरभेदात् सूत्राधिकरणभेदौ" ।

**पञ्चमनियमः** "गौणश्चेन्नात्मशब्दात्" इति १।१।६ सूत्रे संकलित, यथा "चेत्, चेन्न" इत्यादि पदात् सूत्रस्य नाधिकरणारम्भकत्वम्" ।

**षष्ठनियमः** "मान्त्रवर्णिकमेव च गीयते" इति १।१।१५ सूत्रे संकलित., यथा "चकार-योगात् प्रथमान्तपदस्य साकाङ्क्षत्वे नाधिकरणारम्भकत्वम्" ।

**सप्तमनियमः** "नेतरोऽनुपपत्ते." इति १।१।१७ सूत्रे सकलित, यथा "इतरादि-शब्देन साकाङ्क्षत्वे नाधिकरणारम्भकत्वम्" ।

**अष्टमनियमः** "प्राणस्तथानुगमात" इति १।१।२८ सूत्रे संकलित, यथा "विरोधे सति प्रतिपाद्यानुसारेण अधिकरणनाम साधनीयम्" ।

**नवमनियम** "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति १।१।३० सूत्रे संकलित, यथा "अनिषेधार्थक-तु-शब्दयोगेन प्रथमान्तपदस्य नाधिकरणारम्भकत्वम् ।

**दशमनियम** "साक्षादप्यविरोध जैमिनि ' इति १।२।२८ सूत्रे सकलित, यथा "प्रथमान्तनामपदेन मतान्तरज्ञापने नाधिकरणारम्भकत्वम् ।

**एकादशनियमः** "अनुकृतेस्तस्य च इति १।३।२२ सूत्रे संकलित, यथा "नियमान्तरेण अधिकरणनिषेधेऽपि विषयश्रुतिभेदात् अधिकरणभेद " ।

द्वादशनियम "न संख्योपसंग्रहादपि" इति १।४।११ सूत्रे संकलित यथा—"अपि च" प्रभृति शब्देन प्रसंगान्तरत्वे अधिकरणारम्भकत्वम् ।

त्रयोदशनियम "प्रकृतिश्च प्रतिज्ञा " इति १।४।२३ सूत्रे संकलित, यथा—चकारेण उद्देश्यविधेयान्यतरविशेषणस्य हेतुसमुच्चये वा नाधिकरणारम्भकत्वम् ।

एते एव प्रथमाध्याये संकलिता नियमा । विस्तरस्तु यथास्थानं द्रष्टव्य ।

इदानीं द्रष्टव्यम्—केषु सूत्रेषु कस्य भाष्यस्य कियत्-संख्यक दोष संजात इति—

| | | | | | |
|---|---|---|---|---|---|
| शास्त्रयोनित्वात् १।१।३ सूत्रे वल्लभभाष्यस्य | अधिकरणस्य | अरचनायां | दोष । | १ |
| तत्तु समन्वयात १।१।४ सूत्रे निम्बार्कभाष्यस्य | ,, | ,, | ,, | १ |
| नेतरोऽनुपपत्ते १।१।१६ सूत्रे श्रीकण्ठभाष्यस्य | अधिकरणस्य | रचनायां | दोष | १ |
| छन्दोभिधानात् इत्यादि १।१।२५ सूत्रे माध्वभाष्यस्य | ,, | ,, | ,, | १ |
| अनुपपत्तेस्तु न शारीर १।२।३ सूत्रे श्रीकण्ठभाष्यस्य | ,, | ,, | ,, | १ |
| शब्दविशेषात् १।२।५ सूत्रे वल्लभभाष्यस्य | ,, | ,, | ,, | १ |
| गुहां प्रविष्टावात्मानौ १।२।११ सूत्रे रामानुजभाष्यस्य | अधिकरणस्य | अरचनायां | दोष | १ |
| अनवस्थितेरसम्भवाच्च नेतर १।२।१७ श्रीकण्ठभाष्यस्य | अधिकरणस्य | रचनायां | दोष | १ |
| अनुकृतेस्तस्य च १।३।२२ सूत्रे रा, नि, श्री-भाष्याणां | अधिकरणस्य | अरचनायां | दोषा | ३ |
| मध्वादिष्वसम्भवादनधिकारं जैमिनि १।३।३१ रा-भाष्यस्य | अधिकरणस्य | रचनायां | दोष | १ |
| ज्योतिर्दर्शनात् १।३।४० सूत्रे रा, नि-भाष्ययो | अधिकरणस्य | अरचनायां | दोषौ | २ |
| सुषुप्त्युत्क्रान्त्योर्भेदेन १।३।४२ सूत्रे रा, नि, श्री-भाष्याणां | अधिकरणस्य | अरचनायां | दोषा | ३ |
| पत्यादिशब्देभ्य १।३।४३ सूत्रे म-भाष्यस्य | ,, | रचनायां | दोष | १ |
| चमसवदविशेषात् १।४।८ सूत्रे म-भाष्यस्य | ,, | अरचनायां | ,, | १ |
| ज्योतिरुपक्रमा तु तथा ह्यधीयते १।४।१० सूत्रे म-भाष्यस्य | ,, | रचनायां | ,, | १ |
| कारणत्वेन चाकाशादिषु १।४।१४ नि, श्री-भाष्ययो | ,, | अरचनायां | दोषौ | २ |
| समाकर्षात् १।४।१५ सूत्रे नि, म, व भाष्याणां | ,, | रचनायां | दोषा | ३ |
| जगद्वाचित्वात् १।४।१६ सूत्रे म-भाष्यस्य | ,, | अरचनायां | दोष | १ |
| वाक्यान्वयात् १।४।१९ सूत्रे नि, म-भाष्ययो | ,, | ,, | दोषौ | २ |
| प्रकृतिश्च प्रतिज्ञादृष्टान्ता १।४।२३ सूत्रे नि भाष्यस्य | ,, | ,, | दोष | १ |
| एतेन सर्वे व्याख्याता १।२।४८ सूत्रे नि, व, भाष्ययो | ,, | ,, | दोषौ | २ |
| | | | समष्टि | ३१ |

तथा च प्रथमाध्यायस्य १३४ सूत्राणां मध्ये एकविंशतिसूत्रेषु पञ्चानां भाष्याणां एकत्रिंशत् दोषा सञ्जाता ।

एवं च येषु सूत्रेषु प्रत्येकं भाष्यस्य दोषा तानि सूत्राणि यथा

| | | | | | |
|---|---|---|---|---|---|
| वल्लभस्य दोषाय | शास्त्रयोनित्वात् | १।१।३ | | अनुकृतेस्तस्य च | १।३।२२ |
| | शब्दविशेषात् | १।२।५ | | सुषुप्त्युत्क्रान्तोर्भेदेन | १।३।४२ |
| | समाकर्षात् | १।४।१५ | | कारणत्वेन चाकाशा | १।४।१४ |
| | एतेन सर्वे व्याख्याता | १।४।२८ | मध्वस्य दोषाय | छन्दोभिधानात् | १।१।२५ |
| निम्बार्कस्य दोषाय— | तत् तु समन्वयात् | १।१।४ | | पत्यादिशब्देभ्य | १।३।४३ |
| | अनुकृतेस्तस्य च | १।३।२२ | | चमसवदविशेषात् | १।४।८ |
| | ज्योतिर्दर्शनात् | १।३।४० | | ज्योतिरुपक्रमा तु | १।४।९ |
| | सुषुप्त्युत्क्रान्तो | १।३।४२ | | समाकर्षात् | १।४।१५ |
| | कारणत्वेन चाकाशा | १।४।१४ | | जगद्वाचित्वात | १।४।१६ |
| | समाकर्षात | १।४।१५ | | वाक्यान्वियात् | १।४।१९ |
| | वाक्यान्वयात् | १।४।१९ | रामानुजस्य दोषाय | गुहा प्रविष्टावात्मानौ | १।२।११ |
| | प्रकृतिश्च प्रतिज्ञा | १।४।२३ | | अनुकृतेस्तस्य च | १।३।२२ |
| | एतेन सर्वे व्याख्याता | १।४।२८ | | मध्वादिष्वसम्भवात् | १।३।३१ |
| श्रीकण्ठस्य दोषाय | नेतरेऽनुपपत्ते | १।१।१६ | | ज्योतिर्दर्शनात् | १।३।४० |
| | अनुपपत्तेस्तु न शारीर | १।२।३ | | सुषुप्त्युत्क्रान्तोर्भेदेन | १।३।४२ |
| | अनवस्थितेरसम्भवाच्च | १।२।१७ | | समष्टिः | ३१ |

एवं च अधिकरणरचनानियामानुसारेण विभिन्नभाष्याणां पर्य्यालोचने कृते शाङ्कर-भास्कर-श्रीपति-भाष्याणामेव व्यासमतसन्निकृष्टत्वम् उपलभ्यते। रामानुज-निम्बार्क-मध्व-श्रीकण्ठ-वल्लभ-भाष्याणां दोषसद्भावात् व्यासमतविप्रकृष्टत्व कल्पनीयम् इति। अधिकरणरचनानियम-निरपेक्ष-दोषविचारस्तु द्वितीयपादे कृत।

॥ इति श्रीचिद्घनानन्दपुरीविरचिते व्याससम्मतब्रह्मसूत्रभाष्यनिर्णये

प्रथमाध्याय ॥

## अथ अविरोधनाम द्वितीयाध्याये प्रथमपादे
## प्रथम स्मृत्यधिकरणम्

अत्र "स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात्" इति (२।१।१) सूत्रस्य स्मृतिपदम् अवलम्ब्य अस्य "स्मृत्यधिकरणं" नाम। माध्व-वल्लभभाष्यभिन्नेषु सर्वेषु भाष्येषु अत्र सूत्रद्वयं गृहीतम्। माध्वमते तु सूत्रत्रयम्, वल्लभमते च एकमेव। तच्च सूत्रद्वयम्—

१। स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात् २।१।१। (१३५)

२। "इतरेषां चानुपलब्धे" २।१।२ (१३६)

अत्र (१) "स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात्" इति (२।१।१) सूत्रे स्मृत्यनवकाशदोषप्रसंग इति प्रथमान्तपदम्। तत्सत्त्वेऽपि "इति चेन्न" इति पदात् नास्य अधिकरणारम्भकत्वं युक्तं, पञ्चमविरोधनियमात्। तथापि सर्वमतेनैव अध्यायारम्भात् द्वितीयविरोधनियमेन अस्य अधिकरणारम्भकत्वं समुचितमेव।

(२) "इतरेषां चानुपलब्धे" २।१।२ (१३६) इति सूत्रे प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात्। हेतुबोधक चकारयोगात् च तथा। परसूत्रे अधिकसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति संगता। वल्लभमतेन तु अनेनैव एकस्य अधिकरणस्य रचनायां सर्वमतविरोधात् नियमविरोधाच्च तस्यैव दोष गणनीय।

### द्वितीय योगप्रत्युक्त्यधिकरणम्।

अत्र "एतेन योग प्रत्युक्त" २।१।३ (१३७) सूत्रस्य 'योग" तथा "प्रत्युक्त" इति पदाभ्यां अस्य "योगप्रत्युक्त्यधिकरणं" नाम। मध्वाचार्यभिन्नै सर्वै भाष्यकारै अनेन एकेन सूत्रेण एतद् द्वितीयम् अधिकरणं रचितम्। माध्वभाष्ये तु एतत् सूत्रं प्रथमाधिकरणस्य अन्तिमं सूत्रम्।

अत्र "योग' तथा "प्रत्युक्त" एतत्प्रथमान्तपदद्वयसद्भावात् अनेन पृथगधिकरणरचनं समुचितमेव, चतुर्थसामान्यनियमात्। पूर्वस्मिन् सूत्रे 'इतरेषां" पदेन योगमतस्य ग्रहणेऽपि पुन ग्रहणात् अस्य विषयान्तरत्वं सूचित भवति। अत अस्य पृथगधिकरणत्व युक्तमेव। तेन अधिकसम्मतत्वात् नियमविरुद्धत्वाच्च माध्वभाष्यस्यैव अत्र अधिकरणस्य अरचनाया दोष।

### तृतीय विलक्षणत्वाधिकरणम्।

अत्र "न विलक्षणत्वादस्य तथात्वं च शब्दात्" २।१।४ (१३८) इति सूत्रस्य "विलक्षणत्व" शब्दात्, अस्य "विलक्षणत्वाधिकरणं" नाम। अत्र शङ्कर-भास्कर-निम्बार्क-श्रीपति-भाष्येषु अष्ट सूत्राणि गृहीतानि। रामानुजभाष्ये "तर्काप्रतिष्ठानात्" इत्यादिसूत्रस्य द्विधाकरणात् नवभि सूत्रैरेव एतदधिकरणं सङ्कलितम्। माध्वभाष्ये सूत्रद्वयेन, श्रीकण्ठभाष्ये सूत्रचतुष्टयेन, तथा वल्लभभाष्ये सूत्रत्रयेण एतदधिकरणं रचितम्। तच्च सूत्राष्टकम्—

अत्र ( १ ) "न विलक्षणत्वादस्य तथात्वं च शब्दात्" २।१।४ ( १३८ ) इति सूत्रस्य "तथात्वम्" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं संगच्छते, चतुर्थसामान्य-नियमात् । "तथात्वं" पदस्य स्वरूपत. साकाक्षत्वं कल्पयितुं शक्यम्, "तत्" शब्दस्य पूर्वप्रकृता-पेक्षत्वात् । अतः सप्तमविशेषनियमात् अधिकरणारम्भः न युज्यते इति चेत् ? न, अव्यवहित-पूर्वाधिकरणे योगमतस्य प्रत्युक्तत्वात्, "तथात्वं" पदेन ततपूर्वप्रकृतसाख्यमतखण्डन पुन. प्रस्तूयते । साख्यमतस्य योगप्रत्युक्त्यधिकरणेन व्यवहितत्वेऽपि साख्यमतेन सह साकाक्षत्वं न व्याहतम् । अत. अत्र पृथगधिकरणारम्भः सगच्छते । माध्वमते तु एतदनन्तरं तृतीयं "दृश्यते तु" इति एकं सूत्रं पठ्यते । तच्च सर्वमतविरुद्धं प्राचीनतरप्रमाणविरहितं च । तत्रैव तन्मतेन एतदधिकरणस्य समाप्तिरपि ज्ञाप्यते ।

( २ ) "अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्" २।१।५ (१३९) अत्र "अभिमानि-व्यपदेश." इति प्रथमान्तपदस.त्वेऽपि "तु"-शब्दयोगात् अस्य अधिकरणारम्भकत्वं वाधितम् । नवमविशेषनियमात् । माध्वमते अत्र तृतीयाधिकरणस्य आरम्भात् दोष', सर्वमतविरोधात् ।

( ३ ) "दृश्यते तु" २।१।६ ( १४० ) अत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भ-कत्वम् । चतुर्थसामान्य-नवमविशेषनियमाभ्याम् । माध्वमते तु अत्र "दृश्यते च" इत्येकं सूत्रं पठ्यते । तत्रैव तन्मतेन द्वितीयाधिकरणसमाप्तिः । तदपि सर्वमतविरोधि ।

( ४ ) "असदिति चेन्न प्रतिषेधमात्रत्वात्" २।१।७ ( १४१ ) अत्र "असत्" इति-प्रथमान्तपदसत्त्वेऽपि "इति चेन्न" पदयोगात् नास्य अधिकरणारम्भकत्वम् । पञ्चमविशेष-नियमात् । माध्वमतेन अत्र चतुर्थाधिकरणस्य रचनाया तथा बल्लभेन पञ्चमाधिकरणस्य रचनात् द्वावेव अत्र दोषभाजौ भवत' ।

( ५ ) "अपितौ तद्वत्प्रसंगादसमञ्जम्" २।१।८ ( १४२ ) अत्र "असमञ्जसम्" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्वम् युक्तम् । श्रीकण्ठभाष्ये तथैव कृतम् । परन्तु "तद्-वत्प्रसगात्" इत्यत्र तत्-पदात् साकाक्षत्वविधानात् सप्तमविशेषनियमेन एतस्य अधिकरणारम्भकत्वं व्याहतम् । एव च सर्वमतविरोधादपि अत्र श्रीकण्ठभाष्यस्यैव अधिकरणरचनाया दोष' प्रसज्यते ।

( ६ ) "न तु दृष्टान्ताभावात्" २।१।९ ( १४३ ) अत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वं संगतम्, चतुर्थसामान्यनियमात् ।

( ७ ) "स्वपक्षदोषाच्च" २।१।१० ( १४४ ) अत्रापि पूर्ववत् बोध्यव्यम्, चतुर्थसामान्य नियमात्, पञ्चविरोधनियमाच्च ।

( ८ ) "तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेद् एवमप्यनिर्मोक्षप्रसंग" २।१।११ ( १४५ ) अत्र "अनिर्मोक्षप्रसग" इति प्रथमान्तपदसत्त्वेऽपि "इति चेत्"-पदयोगात् नास्य अधिकरणारम्भकत्वम् युक्तम् । पञ्चमविरोधनियमात् । रामानुजभाष्ये तथा श्रीकण्ठभाष्ये च एतत्सूत्रं द्विधा विभक्त कृत दृश्यते, तन्न युक्तम्, अतिरिक्तविषयस्य असूचनात् । चतुर्थविरोधनियमश्चिन्तनीय । परसूत्रे प्रायेण सर्वसम्मत्या पृथगधिकरणारम्भात् अत्रैव अधिकरणस्य समाप्ति ससुचितैव । एवम् अत्र शङ्करादीनां मते तृतीयाधिकरणं समाप्तम् । माध्वमते परसूत्रे चतुर्थाधिकरणं समाप्तम् । श्रीकण्ठमतेन चतुर्थाधिकरणं, तथा वल्लभमतेन पञ्चमाधिकरणं समाप्तम् इति बोद्धव्यम् ।

## चतुर्थं शिष्टापरिग्रहाधिकरणम् ।

अत्र "एतेन शिष्टापरिग्रहा अपि व्याख्याता" २।१।१२ ( १४६ ) इति सूत्रस्य "शिष्टापरिग्रहा" इति पदात् अस्य 'शिष्टापरिग्रहाधिकरणं" नाम । अत्र माध्वभाष्यभिन्नेषु सर्वेषु भाष्येषु एतेन एकेनैव सूत्रेण एतदधिकरणं रचितम् । माध्वभाष्ये तु एतत् सूत्रं चतुर्थाधिकरणस्य षष्ठं तथा अन्तिमं सूत्रम् ।

अत्र "शिष्टापरिग्रहा" तथा 'व्याख्याता इति प्रथमान्तपदद्वयात् अस्य अधिकरणारम्भकत्व संगतमेव, चतुर्थसामान्यनियमात् । परसूत्रे सर्वे अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिश्च सुसंगता एव । तेन अत्र अधिकरणस्य अरचनायां माध्वभाष्यस्यैव दोष ।

## पञ्चम मोक्त्रापत्त्यधिकरणम् ।

अत्र "भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्" २।१।१३ ( १४७ ) इति सूत्रस्य 'भोक्त्रापत्ति" इति पदात्" अस्य "भोक्त्रापत्त्यधिकरणं" नाम । अत्र सर्वे भाष्यकारै अनेन एकेनैव सूत्रेण एतद् अधिकरणं रचितम् ।

अत्र "अविभाग" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्वं संगतम्, किन्तु 'चेत्"-शब्दयोगात् तस्य बाध, पञ्चमविरोधनियमात् । तथापि सर्वै अत्र अधिकरणं रचितम्, अतोऽत्र एक नियम सङ्कल्पनीय येन एतस्य नियमानुगत्यं संरक्षितं स्यात । स च इत्थं भवतु । "चेत्, इति चेन्न" प्रभृति पदसत्त्वेऽपि यत्र शङ्काभागे पञ्चम्यन्तप्रथमान्तपदद्वयसत्त्वम्, तत्र अधिकरणारम्भ युक्तः इति चतुर्दसविरोधनियम ।

"अत्र भोक्त्रापत्ते" इति पञ्चम्यन्तपदात् "अविभाग" इति प्रथमान्तपदस्य सत्त्वात् अत्र अधिकरणरचना संगच्छते एव । ततश्च "भोक्त्रापत्ते" इति पदात् प्रसगान्तरत्वं सूचितमेव इति

स्पष्टम्। परवर्त्तिसूत्रे सर्वसम्मत्या पृथगधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिः। पूर्वसूत्रे "व्याख्यातम्"-पदेन अधिकरणसमाप्तिसूचनादपि अत्र अधिकरणारम्भः संगच्छते। पञ्चदश-विशेषनियमात्। नात्र ऊनविंशविशेषनियमस्य प्रयोगसम्भावना, तस्य विशेषरूपत्वात्।

## षष्ठम् आरम्भणाधिकरणम्।

अत्र "तदनन्यत्वमारम्भणशब्दादिभ्यः" २।१।१४ ( १४८ ) इति सूत्रस्य आरम्भण-शब्दात् अस्य "आरम्भणाधिकरण" नाम। तत्र श्रीकण्ठ-वल्लभभिन्नैः सर्वैः अत्र सप्त सूत्राणि गृहीतानि। तत्रापि रामानुज-निम्बार्कभाष्ययोः चतुर्थं पञ्चमं च सूत्रं एकीकृत्य सप्त सूत्राणि षट्सु सूत्रेषु परिणमितानि। श्रीकण्ठभाष्ये परवर्त्तिनः अधिकरणस्य सूत्रत्रयं गृहीत्वा नव सूत्राणि तथा वल्लभभाष्ये प्रथमत्रीणि सूत्राणि गृहीतानि इत्ययमेव अत्र विशेषः। तेन श्रीकण्ठभाष्ये अत्र अधिकरणद्वयम् एकीकृतम्। वल्लभभाष्ये तु एकम् अधिकरणं द्विधा कृतम् इति फलम्। तानि च सप्त सूत्राणि

१। "तदनन्यत्वमारम्भणशब्दादिभ्यः" २।१।१४ ( १४८ )
२। "भावे चोपलब्धेः" २।१।१५ ( १४९ )
३। "सत्त्वाच्चावरस्य" २।१।१६ ( १५० )
४। "असद्व्यपदेशान्नेति चेन्न धर्म्मान्तरेण वाक्यशेषात्" २।१।१७ ( १५१ )
५। "युक्तेः शब्दान्तराच्च" २।१।१८ ( १५२ )
६। "पटवच्च" २।१।१९ ( १५३ )
७। "यथा च प्राणादि" २।१।२० ( १५४ )

अत्र ( १ ) "तदनन्यत्वमारम्भणशब्दादिभ्यः" २।१।१४ ( १४८ ) इति सूत्रे "तद-नन्यत्वम्" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्वं संगच्छते। चतुर्थसामान्यनियमात्।

( २ ) "भावे चोपलब्धेः" २।१।१५ ( १४९ ) अत्र प्रथमान्तपदाभावात् नास्य अधि-करणारम्भकत्वं युक्तम्। चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च।

( ३ ) "सत्त्वाच्चावरस्य" २।१।१६ ( १५० ) इत्यपि पूर्ववत् अगसूत्रम्, चतुर्थ-सामान्यनियमात्।

( ४ ) "असद्व्यपदेशान्नेति चेन्न धर्म्मान्तरेण वाक्यशेषात्" २।१।१७ ( १५१ ) इति अत्रापि प्रथमान्तपदाभावः। ततश्च "इति चेन्न" पदानां सत्त्वम्। अतः अस्य अंगसूत्रत्व-मेव सगतम्। चतुर्थसामान्य-पञ्चमविशेषनियमाभ्याम्। रा-नि-श्री-भाष्येषु परसूत्रेण सह एतत् सूत्रं पठ्यते, तन्न युक्तम्, पृथक्तया अतिरिक्तविषयस्य सूचनात्। चतुर्थविशेषनियमः द्रष्टव्यः। तथापि तेषां मते षड्भिः सूत्रैः एतदधिकरणं रचितम्। वल्लभमते तु अत्र नवमम् अधिकरणम् आरब्धम्। तदपि नियमविरुद्धम्। तेन अत्र अधिकरणरचनायां तस्य अयं एकः दोषः सञ्जातः।

( ५ ) "युक्तेः शब्दान्तराच्च" २।१।१८ ( १५२ ) अत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात् तथा षष्ठविशेषनियमाच्च। रा, नि, श्री मतेषु एतत् सूत्रं पूर्वसूत्रेण सह पठितं दृश्यते।

( ६ ) 'पटवच्च" २।१।१९ ( १५३ ) एतस्यापि पूर्ववत् अगसूत्रत्वम्। चतुर्थ सामान्यनियमात्, षष्ठविरोषनियमाच्च।

( ७ ) "यथा च प्राणादि" २।१।२० ( १५४ ) अत्र 'प्राणादि" इति प्रथमान्तपद-सत्त्वेऽपि चकारयोगात 'यथा" शब्देन साकांक्षत्वविधानाच्च नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात् तथा षष्ठविरोषनियमात च। परसूत्रे अधिकसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति। श्रीकण्ठभाष्ये परवर्तिसूत्रद्वयमपि एतदधिकरणान्तर्गत कृत दृश्यते।

सप्तमम् इतरव्यपदेशाधिकरणम्।

अत्र "इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्ति" २।१।२१ ( १५५ ) इति सूत्रस्य "इतरव्यपदेश" शब्दात अस्य "इतरव्यपदेशाधिकरण' नाम। तत्र मध्व-श्रीकण्ठ-भिन्नै सर्वै भाष्यकारै सूत्रत्रय गृहीतम्। माध्वमतेन तत्र षट् सूत्राणि, श्रीकण्ठमतेन च एतदधिकरण पूर्वाधिकरणान्तर्गतमेव कृतम्। तच्च सूत्रत्रयम्—

( १ ) इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्ति २।१।२१ ( १५५ )

( २ ) अधिकं तु भेदनिर्देशात २।१।२२ ( १५६ )

( ३ ) अश्मादिवच्च तदनुपपत्ति २।१।२३ ( १५७ )

अत्र ( १ ) 'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्ति" २।१।२१ ( १५५ ) इत्यत्र "हिताकरणादिदोषप्रसक्ति" इति प्रथमान्तपदात अस्य अधिकरणारम्भकत्वं संगतमेव। चतुर्थ-सामान्यनियमात्। श्रीकण्ठभाष्ये तु तन्न कृतम अत तस्यैव दोष।

( २ ) "अधिकं तु भेदनिर्देशात्" २।१।२२ ( १५६ ) इत्यत्र "अधिकम्" इति प्रथमान्तपदसत्त्वेऽपि "तु" शब्दयोगात् नास्य अधिकरणारम्भकत्वम्, नवमविरोषनियमात्।

( ३ ) "अश्मादिवच्च तदनुपपत्ति" २।१।२३ ( १५७ ) इत्यत्र "अनुपपत्ति" इति प्रथमान्तपदसत्त्वेऽपि "च" शब्दयोगात् नास्य अधिकरणारम्भकत्वम्। षष्ठविरोषनियमात्। परसूत्रे सर्वसम्मत्या पृथगधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति।

अष्टमम् उपसंहारदर्शनाधिकरणम्।

अत्र "उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" २।१।२४ ( १५८ ) इति सूत्रस्य 'उपसंहारदर्शनाधिकरणं" नाम। मध्व-वल्लभभिन्नै सर्वै भाष्यकारै अत्र सूत्रद्वय गृहीतम्। मध्वेन तु अत्र अधिकरणं न आरब्धम। तन्मतेन एतत् सूत्रं पूर्वाधिकरणस्य सूत्रषट्कान्तर्गत चतुर्थं सूत्रम्। वल्लभभाष्ये तु अत्र षट् सूत्राणि गृहीतानि। तच्च सूत्रद्वयम्—

( १ ) 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" २।१।२४ ( १५८ ) --

( २ ) "देवादिवदपि लोके" २।१।२५ ( १५९ ) - - -

अत्र ( १ ) "उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" २।१।२४ ( १५८ ) इत्यत्र

"उपसंहारदर्शनात्" इति पञ्चम्यन्तपदात् प्रथमान्तपदस्य अन्वयानुरोधात् अध्याहर्तव्यत्वे अधिकरणारम्भः समुचितः, चतुर्दशविशेषनियमात् , पञ्चमविशेषनियमात् च "इति चेन्न" इति पदसत्त्वस्य न तद्बाधकत्वम्, पञ्चमविशेषनियमात् । तेन च अत्र अधिकरणारम्भः संगच्छते । माध्वभाष्ये अनेन सूत्रेण अधिकरणस्य अनारम्भात् तस्य दोषप्रसंगः ।

( २ ) "देवादिवदपि लोके" २।१।२५ ( १५९ ) इत्यत्र "देवादिवद्"इति प्रथमान्तपदसत्त्वेऽपि नास्य अधिकरणारम्भकत्वम् । "अपि"-शब्देन तस्य साकांक्षत्वविधानात् । निरपेक्षप्रथमान्तपदस्य एव अधिकरणारम्भकत्वम् । परसूत्रे सर्वैः अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिरिति ।

## नवमम् कृत्स्नप्रसक्त्यधिकरणम् ।

अत्र "कृत्स्नप्रसक्तिर्निरवयत्वशब्दकोपो वा" २।१।२६ ( १६० ) इति सूत्रस्य "कृत्स्नप्रसक्ति"-पदात् अस्य "कृत्स्नप्रसक्त्यधिकरणं" नाम । अत्र शङ्करभाष्ये तथा भास्कर-भाष्ये सूत्रचतुष्टयं गृहीतम् । रामानुज-निम्बार्क-श्रीकण्ठ-भाष्येषु षट् सूत्राणि, तथैव श्रीपतिभाष्ये अष्ट सूत्राणि गृहीतानि । माध्वभाष्ये एतत् सूत्रं षट्सूत्रात्मकपूर्वाधिकरणस्य अन्तिमं सूत्रम् । वल्लभभाष्ये तु एतत् सूत्रम् षट्सूत्रात्मकपूर्वाधिकरणस्य तृतीय सूत्रम् इति बोद्धव्यम् । तत्र शङ्कर-भास्करभाष्यसम्मतं सूत्रचतुष्टयं यथा

१। "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" २।१।२६ ( १६० )

२। श्रुतेस्तु शब्दमूलत्वात् २।१।२७ ( १६१ )

३। आत्मनि चैवं विचित्राश्च हि २।१।२८ ( १६२ )

४। स्वपक्षदोषाच्च २।१।२९ ( १६३ )

अत्र ( १ ) "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" २।१।२६ ( १६० ) इति सूत्रस्य "कृत्स्नप्रसक्ति" तथा "शब्दकोप" इतिप्रथमान्तपदद्वयात् अस्य अधिकरणारम्भकत्वं संगतमेव । वा-शब्देन नात्र तस्य प्रथमान्तपदद्वयस्य साकांक्षत्वविधानं शङ्कनीयम् । अर्थानुरोधात् । चतुर्थ-सामान्यनियमात् । माध्व-वल्लभभाष्यद्वयमध्ये अधिकरणस्य अनारम्भात् तयोरेव दोषभाक्त्वम् ।

( २ ) "श्रुतेस्तु शब्दमूलत्वात्" २।१।२७ ( १६१ ) अत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वं संगतम्, चतुर्थसामान्यनियमात् । केवलं माध्वभाष्ये अधिकरणारम्भात् तस्यैव दुष्टत्वम् । तु-शब्देनापि व्याघातात् नवमविशेषनियमात् च ।

( ३ ) "आत्मनि चैवं विचित्राश्च हि" २।१।२८ ( १६२ ) अत्र "विचित्राः" इति प्रथमान्तपदसत्त्वेऽपि च-शब्दयोगात् अस्य अधिकरणारम्भकत्वं सर्वसम्मत्या निषिध्यते । चतुर्थ-सामान्यनियमात् तथा षष्ठविशेषनियमात् ।

( ४ ) "स्वपक्षदोषाच्च" २।१।२९ ( १६३ ) अत्र प्रथमान्तपदाभावात् पूर्ववत्

नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात्, पञ्चविशेषनियमाच्च। परसूत्रे भाष्यत्रयेण पृथगधिकरणारम्भात् अत्र अधिकरणसमाप्तिकल्पनं न समुचितम्, भाष्यपञ्चकविरोधात्। तथापि प्राचीनसम्मतत्वात् न उपेक्षणीयं तत् इति। किंच परसूत्रे विषयान्तरसूचनात् तस्य पृथगधिकरणारम्भकत्वं संगतमेव।

## दशम सर्वोपेताधिकरणम्।

अत्र "सर्वोपेता च तद्दर्शनात्" २।१।३० (१६४) इति सूत्रस्य 'सर्वोपेता"-पदात् अस्य "सर्वोपेताधिकरणं" नाम। अत्र शङ्कर-भास्कर-भाष्यद्वयमध्ये सूत्रद्वयं गृहीतम्। वल्लभ भाष्ये तु अष्ट सूत्राणि गृहीतानि। रामानुज-निम्बार्क-माध्व-श्रीकण्ठ-श्रीपतिभाष्येषु नात्र अधिकरणं रचितम्। अत्र एतत्सूत्रद्वयं पूर्वाधिकरणान्तर्गतमेव इति दृश्यते। तच्च सूत्रद्वयम्—

(१) 'सर्वोपेता च तद्दर्शनात्" २।१।३० (१६४)

(२) "विकरणत्वान्नेति चेत् तदुक्तम्" २।१।३१ (१६५)

अत्र (१) सर्वोपेता च तद्दर्शनात्" २।१।३० (१६४) इति सूत्रे "सर्वोपेता" इति प्रथमान्तपदसत्त्वात्, चतुर्थसामान्यनियमात्, अस्य अधिकरणारम्भकत्वं युक्तम्। पञ्चविशेष नियमानुसारेण चकारस्य तद्बाधकत्वेऽपि त्रयोदशविशेषनियमात् तस्य निषेध। तेन रा, नि, म, श्री, श्रीप-भाष्येषु अधिकरणस्य अनारम्भात् तेषामेव दुष्टत्वम्, संख्याविरोधादपि नियमविरोधस्य भावत्वात्। किंच विषयान्तरस्य सूचनात् अत्र अधिकरणारम्भ सगच्छते एव।

(२) "विकरणत्वान्नेति चेत् तदुक्तम्" २।१।३१ (१६५) इत्यत्र "तदुक्तम्" इति प्रथमान्तपदसत्त्वेऽपि चतुर्थसामान्यनियमात् अधिकरणारम्भ संगत, तथापि "नेति चेत्" इति पदस्य सत्त्वात् नास्य अधिकरणारम्भकत्वम्, पञ्चमविशेषनियमात्। परसूत्रे अधिकत्यागत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति संगच्छते। श्रीपति-भाष्ये तथा वल्लभ-भाष्ये नात्र अधिकरणसमाप्ति कृता। अत्र "तदुक्तम्" इति पदमपि अधिकरणसमाप्तिज्ञापकम् इत्यादि कल्पयितुं शक्यते।

## एकादश प्रयोजनवत्त्वाधिकरणम्।

अत्र "न प्रयोजनवत्त्वात्" २।१।३२ (१६६) इति सूत्रस्य "प्रयोजनवत्त्व" इति शब्दात् अस्य 'प्रयोजनवत्त्वाधिकरण" नाम। अत्र शङ्कर-भास्कर-माध्व-श्रीकण्ठभाष्येषु सूत्रद्वयं गृहीतम्, रामानुज-निम्बार्क-भाष्यद्वये तु सूत्रपञ्चक गृहीतम्। श्रीपति-वल्लभ-भाष्ययो अत्र न अधिकरणं रचितम्। तच्च सूत्रद्वयम्—

(१) "न प्रयोजनवत्त्वात्" २।१।३२ (१६६)

(२) "लोकवत्तु लीलाकैवल्यम्" २।१।३३ (१६७)

अत्र (१) "न प्रयोजनवत्त्वात्" २।१।३२ (१६६) इति सूत्रे प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वं युक्तम्, चतुर्थसामान्यनियमात्। तथापि षण्णां भाष्याणां तथाकरणात्

केनचित् नियमसङ्कलनेन एतस्य नियमानुगतत्वं साधनीयम् । स च नियम एवं भवतु

"यत्र पूर्वसूत्रे व्याख्यातम्" "तदुक्तम्" एवंविध प्रसंगसमाप्तिसूचकं पद, तत्र निरपेक्षत्वबोधकत्वे सति अधिकरणारम्भ. करणीय । इति पञ्चदशविशेषनियम ।

अत्र पूर्वसूत्रे "तदुक्तम्" इति पद दृश्यते, अतोऽत्र अधिकरणारम्भ समुचित एव । न च "जीवमुख्यप्राणलिगान्नेति चेत् तद्व्याख्यातम्" १।४।१७ ( १२३ ) इत्यत्र परसूत्रेण अधिकरणारम्भप्रसग इति वाच्यम्, तत्र "अन्यार्थस्तु जैमिनि" इत्यादि परसूत्रस्य तु-शब्देन निरपेक्षत्वबोधकत्वाभावात् । अत अत्र श्रीपति-वल्लभ-भाष्ययो. दोष., ताभ्या अधिकरणस्य अरचितत्वात् ।

( २ ) "लोकवत्तु लीलाकैवल्यम्" २।१।३३ (१६७) इत्यत्र "कैवल्यम्" इति प्रथमान्तपदसत्त्वेऽपि नास्य अधिकरणारम्भकत्वम्, अनिषेधार्थक तु-शब्दयोगात् । नवमविशेषनियमात् । परसूत्रे अधिकसम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्ति· समुचिता ।

## द्वादश वैषम्यनैर्घृण्याधिकरणम् ।

अत्र "वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति" २।१।३४ (१६८) इति सूत्रस्य "वैषम्यनैर्घृण्ये"-इति शब्दात् अस्य "वैषम्यनैर्घृण्याधिकरण"नाम । अत्र शाङ्कर-भास्कर-माध्व-श्रीकण्ठ-भाष्येषु सूत्रत्रय गृहीतम् । श्रीपतिभाष्ये तु सूत्रद्वयम् । रामानुज-निम्बार्क-वल्लभ-भाष्येषु नात्र अधिकरणं रचितम् । तत्र रामानुज-निम्बार्क-भाष्ययो एतत् सूत्र पञ्चसूत्रात्मक-दशमाधिकरणस्य तृतीयं सूत्रम् । वल्लभभाष्ये तु अष्टसूत्रात्मक-द्वादशाधिकरणस्य पञ्चमं सूत्रम् इति दृश्यते । तच्च सूत्रत्रयम्

( १ ) 'वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति" २।१।३४ ( १६८ )

( २ ) "न कर्माविभागादिति चेन्नानादित्वात्" २।१।३५ ( १६९ )

( ३ ) "उपपद्यते चाप्युपलभ्यते च" २।१।३६ ( १७० )

अत्र ( १ ) "वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति"२।१।३४ (१६८) इति सूत्रे "वैषम्यनैर्घृण्ये" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्वम् सगतम् । चतुर्थसामान्यनियमात् । रामानुज-निम्बार्क-वल्लभ-भाष्येषु अधिकरणस्य अनारम्भात् तेषा दोषेण भवितव्यम् ।

( २ ) "न कर्माविभागादिति चेन्नानादित्वात्" २।१३५ ( १६९ ) अत्र प्रथमान्तपदाभावात, चतुर्थसामान्यनियमात "इति चेन्न" पदसत्त्वाच्च नात्र अधिकरणारम्भः समुचितः । पञ्चमविशेषनियमात् । रा-नि-श्री-श्रीप-भाष्येषु एतत् सूत्र परसूत्रेण सह पठ्यते । तन्न सम्यक्, विषयबाहुल्यात् । चतुर्थविशेषनियमाच्च ।

( ३ ) "उपपद्यते चाप्युपलभ्यते च" २।१।३६ (१७०) अत्र प्रथमान्तपदाभावात् "च"-योगात् तत. "अपि" योगात् च न अधिकरणारम्भः युक्त । चतुर्थसामान्यनियमात् षष्ठविशेषनियमाच्च । श्रीपतिमतेन एतत्सूत्रस्य पूर्वसूत्रशेषत्वं, चतुर्थविशेषनियमात् तन्न सगतम्, परसूत्रे चतुर्षु भाष्येषु पृथगधिकरणारम्भात् अधिकरणस्य समाप्ति. कल्पयितुं शक्यते ।

त्रयोदश सर्वधर्म्मोपपत्त्यधिकरणम् ।

अत्र "सर्वधर्म्मोपपत्तेश्च" २।१।३७ ( १७१ ) इति सूत्रस्य 'सर्वधर्म्मोपपत्ति"-पदात् अस्य 'सर्वधर्म्मोपपत्त्यधिकरणं" नाम। अत्र शाङ्कर-भास्कर-माध्व-श्रीपति-भाष्येषु अनेन एकेन सूत्रेण एतद् अधिकरणं रचितम्। रामानुज निम्बार्क-श्रीकण्ठ-वल्लभ भाष्येषु अस्य पूर्वाधिकरणान्तर्गतत्वात् नात्र अधिकरणं रचितम्।

अत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वं युक्तम्। चतुर्थसामान्यनियमात्। तस्य अध्याहारे कृतेऽपि चकारयोगात् षष्ठविशेषनियमेन तस्य बाधा भवति। तेन श-भा म-श्रीप-भाष्याणां दोषेण भवितव्यम्। तथापि यद्यपि अत्र सूत्रार्थं अपि अवलम्ब्येत तदा तेषां समर्थनं कर्त्तुं शक्यते। किञ्च यत् पूर्वं सूत्रम् "उपपद्यते चापि उपलभ्यते च" इति, तत्र "चकार" तत "अपि"-शब्द, तत समुच्चयार्थक "चकार"—एवं पदत्रयं दृश्यते, अत एतेन वक्तव्य-परिसमाप्ति सूच्यते। यत लोके त्रिरुक्तवर्णनं वक्तव्यसमाप्तिसूचकम् इति प्रसिद्धम्। अत पूर्वसूत्रे एव अधिकरणसमाप्ति कल्प्यते। अत षोडशविशेषनियमात् अधिकरणारम्भ युक्त। ततश्च सूत्रार्थावलम्बने कृते "सर्वधर्म" इति पदेन प्रागुक्तविचाराणाम् उपसंहार अत्र क्रियते इत्यपि बुध्यते। तेन उपसंहाररूप-पृथग्विषयस्य सूचनात् अत्र पृथगधिकरणं भवितुं उचितम्। एवं च अत्र एक नियमोऽपि भवितुम् अर्हति। स च यथा—

"यत्र हेतुत्रयं चकारादिपदेन समाह्रियते तत्र अधिकरणसमाप्तिकल्पनम् उचितम्।" इति षोडश विशेषनियम।

तथा सति अत्र रा-नि-श्री-व-भाष्याणि अधिकरणस्य अरचनायां दोषग्रस्तानि भवन्ति।

पञ्चमपादसमालोचनम्।

इदानीं द्रष्टव्यम् अनेन नियमेन अस्मिन् पादे अधिकरणरचनायां—

( १ ) कति कीदृशाश्च नियमा अत्र सङ्कलिता।

( २ ) कति दोषा कस्य भाष्यस्य कथं संवृत्ता।

( ३ ) काश्च श्रुतय कैश्च सूत्रै उपजीव्यत्वेन गृहीता

( ४ ) उपजीव्यश्रुतिबलेन कीदृशी च पादसंगति, इति।

एते चत्वार विषया अधस्तात् क्रमेण पूर्ववत् प्रदर्शनीया। तत्र प्रथमं तावत्—

**( १ ) कति कीदृशाश्च नियमाः अत्र सङ्कलिताः**

इति द्रष्टव्यम्। तथा सति अस्मिन् पादे अतिरिक्त यत् नियमत्रयं संकलितम्, ते च नियमा यथा—

चतुर्दशनियम —"चेत्" "इति चेन्न" प्रभृतिशब्दसत्त्वेऽपि यत्र उत्तरभागे, निराकाङ्क्ष-प्रथमान्तपदसत्त्वम् अथवा तादृशपदाध्याहारप्रयोजनं, तत्र अधिकरणारम्भ युक्त।" एतदर्थं—"भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्" इति २।१।१३ ( १४७ ) सूत्रं द्रष्टव्यम्।

पञ्चदशनियम "यत्र पूर्वसूत्रे "व्याख्यातम्" "तदुक्तम्" एवंविध प्रसंग-समाप्तिसूचकं पद, तत्र निरपेक्षत्वबोधकत्वे सति अधिकरणारम्भः करणीय." । एतदर्थं "न प्रयोजनवत्त्वात्" २।१।३२ ( १६६ ) इति सूत्रं द्रष्टव्यम् ।

षोडशनियमः "यत्र हेतुत्रयं चकारादिपदेन समाह्रियते तत्र अधिकरणसमाप्तिकल्पनम् उचितम्" । एतदर्थं "सर्वधर्म्मोपपत्तेश्च" २।१।३७(१७१) इति सूत्र द्रष्टव्यम् । इदानीं द्रष्टव्यम्—

**( २ ) कति दोषाः कस्य भाष्यस्य कथं संवृत्ताः**

तत्र २।१।१ अधिकरणे वल्लभभाष्ये "इतरेषा चानुपलब्धेः" २।१।२ सूत्रेण अधिकरणस्य रचनाया दोष. ।

२।१।२ अधिकरणे माध्वभाष्ये "एतेन योगः प्रत्युक्त." २।१।३ सूत्रेण अधिकरणस्य अरचनाया दोष. ।

२।१।३ अधिकरणे माध्वभाष्ये "अभिमानिव्यपदेशस्तु विशेषानुगतिभ्या" २।१।५ सूत्रेण अधिकरणस्य रचनाया दोष. ।

२।१।३ अधिकरणे मध्व-वल्लभ-भाष्ययोः "असदिति चेन्न प्रतिषेधमात्रत्वात्" २।१।७ सूत्रेण अधिकरणस्य रचनाया दोष. ।

२।१।३ अधिकरणे श्रीकण्ठभाष्ये "अपितौ तद्वत्प्रसंगादसमञ्जसम्" २।१।८ सूत्रेण अधिकरणस्य रचनायां दोष ।

२।१।४ अधिकरणे माध्वभाष्ये "एतेन शिष्टापरिग्रहा अपि व्याख्याता." २।१।१२ सूत्रेण अधिकरणस्य अरचनाया दोष ।

१।१।६ अधिकरणे वल्लभभाष्ये "असद्व्यपदेशान्नेति चेन्न धर्म्मान्तरेण वाक्यशेषात्" २।१।१७ सूत्रेण अधिकरणस्य रचनाया दोषः ।

२।१।७ अधिकरणे श्रीकण्ठभाष्ये 'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्ति." २।१।२१ सूत्रेण अधिकरणस्य अरचनाया दोष ।

२।१।८ अधिकरणे माध्वभाष्ये "उपसहारदर्शनान्नेति चेन्न क्षीरवद्धि" २।१।२४ सूत्रेण अधिकरणस्य अरचनाया दोष ।

२।१।०. अधिकरणे मध्व-वल्लभ-भाष्ययो "कृत्स्नप्रसक्ति निरवयवत्वशब्दकोपो वा" २।१।२६ सूत्रेण अधिकरणस्य अरचनाया दोष ।

२।१।०. अधिकरणे माध्वभाष्ये "श्रुतेस्तु शब्दमूलत्वात्" २।१।२७ सूत्रेण अधिकरणस्य रचनाया दोष ।

२।१।१० अधिकरणे "रा-म-नि-श्री-श्रीप-भाष्येषु "सर्वोपिता च तद्दर्शनात्" २।१।३० सूत्रेण अधिकरणस्य अरचनायां दोष ।

२।१।११ अधिकरणे श्रीपति-वल्लभ-भाष्ययो "न प्रयोजनवत्त्वात्" २।१।३२ सूत्रेण अधिकरणस्य अरचनायां दोष ।

२।१।१२ अधिकरणे रा-नि-म-भाष्येषु "वैषम्यनैर्घृण्ये न सापेक्षत्वात्-तथाहि दर्शयति" २।१।३४ सूत्रेण अधिकरणस्य अरचनायां दोष ।

२।१।१३ अधिकरणे रा-नि-श्री-व-भाष्येषु "सर्वधर्मोपपत्तेश्च" २।१।३७ सूत्रेण अधिकरणस्य अरचनायां दोष । एव च—

| भाष्यनाम | अधिकरणस्य अरचनायां | अधिकरणस्य रचनायां |
|---|---|---|
| वल्लभभाष्ये | ४ दोषा | ३ दोषा |
| माध्वभाष्ये | ५ „ | ३ „ |
| श्रीकण्ठभाष्ये | ३ „ | १ दोष |
| रामानुजभाष्ये | ३ „ | ० |
| निम्बार्कभाष्ये | ३ „ | ० |
| श्रीपतिभाष्ये | २ दोषौ | ० |

इति वक्तुं शक्यते । तेन शङ्कर-भास्कर-भाष्ययो दोषाभाव । इदानीं द्रष्टव्यम्—

**( १ ) कानि श्रुतयः कैश्च सूत्रैः उपजीव्यत्वेन गृहीता**

तत्र प्रथमाधिकरणे—

प्रथमसूत्रे—"स्मृत्यनवकाशदोषप्रसङ्ग " (२।१।१) इत्यादौ स्मृतिवाक्यं "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" इति ( महाभा शा मो ३३५।३१ ), "ऋषिं प्रसूतं कपिलं" (श्वे ५।२), "यद् वै किंच मनुरवदत् तद् भेषजम्" (तै सं २।२।१०।२) "सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि" ( मनु १२।९१ )

द्वितीयसूत्रे—"इतरेषां चानुपलब्धे" ( २।१।२ ) इत्यत्र सांख्यस्मृतिप्रसिद्धमहदादिबोधकवाक्यानि । "प्रकृतेर्महान् ततोऽहंकार" (सां का २२ )

द्वितीयाधिकरणे—

प्रथमसूत्रे—"एतेन योग प्रत्युक्त" (२।१।३) इत्यत्र योगस्मृतिप्रसिद्धप्रधानतात्पर्यकवाक्यानि । "अथ तत्त्वदर्शनोपायो योग" (योगशास्त्र)" "नावेदविन्मनुते त बृहन्तम् ( तै ब्रा ३।१२।९।७ )

तृतीयाधिकरणे—

प्रथमसूत्रे—"न विलक्षणत्वादस्य तथात्वं च शब्दात्" (२।१।४) इत्यत्र "विज्ञानं चाविज्ञानं चाभवत्" ( तै २।६ )

द्वितीयसूत्रे—"अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यां" (२।१।५) इत्यत्र "ते हेमे प्राणाः

अहंश्रेयसे विवदमानाः" ( बृः ६।१।७ ), "अग्निर्वाग् भूत्वा मुखं प्राविशत्" ( तैः आ २।४।२।४ )

तृतीयसूत्रे "दृश्यते तु" (२।१।६) इत्यत्र "को अद्धा वेद क इह प्रवोचत्" । "इयं विसृष्टिर्यत आबभूव" ( ऋः संः १।३०।६ ), "अचिन्त्याः खलु ये भावाः" ( महाभाः वनपर्व ) "अव्यक्तोऽयम्" ( गीता २।२५ )

चतुर्थसूत्रे "असदिति चेन्न प्रतिषेधमात्रत्वात्" (२।१।७) इत्यत्र "तस्मात् असतः सत् जायेत" ( छाः ६।२।१ ) "कुतस्तु खलु सौम्य एवं स्यात् इति होवाच कथम् असत. सत् जायेत" ( छाः ६।२।२ )

पञ्चमसूत्रे "अपितौ तद्वत्प्रसगादसमञ्जसम्" (२।१।८) इत्यत्र युक्तिमात्रप्रदर्शनम् ।

षष्ठसूत्रे "न तु दृष्टान्तभावात्" (२।१।९) इत्यत्र "अनादिमायया सुप्तो यदा जीव. प्रबुध्यते" ( गौडपाः काः १।१६ ) "इमा. सर्वाः प्रजाः सति सम्पद्य" ( छाः ६।९।२-३ )

सप्तमसूत्रे "सपक्षदोषाच्च" (२।१।१०) इत्यत्र युक्तिमात्रप्रदर्शनम् ।

अष्टमसूत्रे "तर्काप्रतिष्ठानात् " (२।१।११) इत्यादौ "प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्" ( मनु १२।१०५ ), "आर्षं धर्मोपदेशं च" (मनु १२।१०६)

चतुर्थाधिकरणे

प्रथमसूत्रे "एतेन शिष्टापरिग्रहा अपि व्याख्याताः" (२।१।१२) इत्यत्र युक्तिमात्रप्रदर्शनम् ।

पञ्चमाधिकरणे

प्रथमसूत्रे "भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्" (२।१।१३) इत्यत्र "तत् सृष्ट्वा तदेवानुप्राविशत्" ( तै. २।६ )

षष्ठाधिकरणे

प्रथमसूत्रे "तदनन्यत्वमारम्भणशब्दादिभ्य." (२।१।१४) इत्यत्र "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छाः ६।१।१) "ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा" (छाः६।८।७) "ब्रह्मैवेदं सर्वम्" ( मुण्डक २।२।११ )

द्वितीयसूत्रे "भावे चोपलब्धेः" (२।१।१५) इत्यत्र युक्तिमात्रप्रदर्शनम् ।

तृतीयसूत्रे "सत्त्वाच्चावरस्य" ( २।१।१६ ) इत्यत्र "सदेव सोम्येदमग्र आसीत्" ( छाः ६।२।१ ) "ब्रह्म वा इदमग्र आसीत्" ( बृः १।४।१०-११ )

चतुर्थसूत्रे "असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्" (२।१।१७) इत्यत्र "असद् वा इदमग्र आसीत्" ( छाः ३।१९।१ ) 'तत् सद् आसीत्" ( छाः ३।१९।१ )

पञ्चमसूत्रे "युक्ते. शब्दान्तराच्च" ( २।१।१८ ) इत्यत्र "सदेव सोम्येदमग्र आसीत्" ( छाः ६।२।१ ) "येनाश्रुतं श्रुतं भवति" ( छाः ६।१।३ )

षष्ठसूत्रे—'पटवच्च" ( २।१।१९ ) इत्यत्र युक्तिमात्रप्रदर्शनम् ।

सप्तमसूत्रे—"यथाच प्राणादि" (२।१।२०) इत्यत्र 'येनाश्रुतं श्रुतं" ( छ ६।१।३ )

सप्तमाधिकरणे—

प्रथमसूत्रे—"इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्ति" (२।१।२१) इत्यत्र "तत्त्वमसि" ( छा० ६।८।७ ), "अनेन जीवेन आत्मना अनुप्रविश्य" ( छा० ६।३।२ ) "तत् सृष्ट्वा तदेवानुप्राविशत्" ( तै २।६ )

द्वितीयसूत्रे—'अधिकन्तु भेदनिर्देशात्" (२।१।२२) इत्यत्र "आत्मा वारे द्रष्टव्य श्रोतव्यो मन्तव्य" ( बृ २।४।५ )

तृतीयसूत्रे—"अश्मादिवच्च तदनुपपत्ति" ( २।१।२३ ) इत्यत्र हेतुमात्रप्रदर्शनम् ।

अष्टमाधिकरणे—

प्रथमसूत्रे—'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" (२।१।२४) इत्यत्र—"न तस्य कार्य्यं करणं च विद्यते" ( श्वे ६।२ )

द्वितीयसूत्रे—'देवादिवदपि लोके" ( २।१।२५ ) इत्यत्र सैव श्रुतिः ।

नवमाधिकरणे—

प्रथमसूत्रे "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" ( २।१।२६ ) इत्यत्र "निष्कलम्" ( श्वे० ६।१० )

द्वितीयसूत्रे—"श्रुतेस्तु शब्दमूलत्वात्"(२।१।२७) इत्यत्र 'तावानस्य महिमा" (छा० ३।१२।६

तृतीयसूत्रे—"आत्मनि चैवं विचित्राश्च हि" (२।१।२८) इत्यत्र "न तत्र रथा न रथयोगा" ( बृ ४।३।१० )

चतुर्थसूत्रे—"स्वपक्षदोषाच्च" (२।१।२९) इत्यत्र हेतुमात्रप्रदर्शनम् ।

दशमाधिकरणे—

प्रथमसूत्रे—"सर्वोपेता च तद्दर्शनात्" (२।१।३०) इत्यत्र 'सर्वकर्म्मा सर्वकाम" (छा० ३।१४।४)

द्वितीयसूत्रे—'विकरणत्वान्नेति चेत् तदुक्तम्" (२।१।३१) इत्यत्र 'अचक्षुष्कम् अश्रोत्रम्" (बृ ३।८।८) "अपाणिपादो जवनो ग्रहीता" ( श्वे ३।१९ )

एकादशाधिकरणे—

प्रथमसूत्रे—"न प्रयोजनवत्त्वात्" ( २।१।३२ ) इत्यत्र हेतुमात्रप्रदर्शनम् ।

द्वितीयसूत्रे—"लोकवत्तु लीलाकैवल्यम्" ( २।१।३३ ) इत्यत्र हेतुमात्रप्रदर्शनम् ।

द्वादशाधिकरणे—

प्रथमसूत्रे— वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति" (२।१।३४) इत्यत्र "एषह्येव साधुकर्म्म कारयति" ( कौ ३।८ )

द्वितीयसूत्रे "न कर्म्मविभागादिति चेन्नानादित्वात्" (२।१।३५) इत्यत्र—"सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्" ( छ. ६।२।१ )

तृतीयसूत्रे—"उपपद्यते चाप्युपलभ्यते च" (२।१।३६) इत्यत्र "धाता यथापूर्वमकल्पयत्" (ऋक् स० १०।१९०।३), "न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा"। ( गीता १५।३ ), "अनेन जीवेन आत्मना अनुप्रविश्य नामरूपे व्याकरोत्।" ( छ. ६।३।२ )

त्रयोदशाधिकरणे

प्रथमसूत्रे "सर्वधर्म्मोपपत्तेश्च" (२।१।३७) इत्यत्र "निर्गुणम्" इत्यादि ( श्वे: ६।११ ) "सर्वज्ञं सर्वशक्ति महामायं च ब्रह्म" (?)

इदानीं द्रष्टव्यम् एतादृशसूत्रोपजीव्यश्रुतिबलेन

**( ४ ) कीदृशी अस्य पादसङ्गतिः**

अत्र याश्च श्रुतयः सूत्रोपजीव्यत्वेन प्रदर्शिताः ताः सर्वाः शाङ्करभाष्यानुसारतः। भाष्यान्तरे किञ्चित् वैलक्षण्यं वर्त्तते एव। एवं च मतान्तरीयभाष्यभेदेन यथा पादप्रतिपाद्यरूपाः पादसंगतयः कल्प्यन्ते ताश्च अत्र आदौ प्रदर्श्यन्ते—

शङ्करमते "साख्यादिस्मृतिप्रयुक्ततर्कैः वेदान्तसमन्वयस्य विरोधपरिहारः"।

भास्करमते—शङ्करमतानुरूपा।

रामानुजमते—"सांख्यादिस्मृतिभिः बाधस्य परिहारः"।

निम्बार्कमते—"परैः स्वसिद्धान्ते उद्भाविताः दोषाः निराक्रियन्ते"।

मध्वमते—"युक्त्यविरोधः"।

श्रीकण्ठमते—"साख्यादितर्कविरोधशङ्कापूर्वकस्वपक्षस्थापनम्"।

श्रीपतिमते—"वेदान्तविरुद्धस्मृतितर्कादिनिराकरणपूर्वकं जगज्जन्मादिकारणत्वं परब्रह्मशिवस्यैव इति प्रतिपादनम्।

एतेषां पर्य्यालोचने कृते नात्र कोऽपि मतभेदः परिलक्ष्यते; यदपि वैलक्षण्यं तत् तु भाषणवैचित्र्यमात्रम्। एवं च साख्यस्मृतिविचारमुखेन पादस्य प्रवर्त्तनात् सक्षेपतः अयं स्मृतिपादः इत्यभिधीयते। पादेऽस्मिन् श्रुतिस्मृत्यादयः ये च तत्र प्रदर्शिताः ते च युक्त्यनुकूल्येन परिगृहीताः इति बोद्धव्यम्। युक्तिश्च अनुभवाधीना, यादृशो यस्यानुभवः युक्तिरपि तादृशी तेन प्रदर्श्यते। तेन युक्तिप्रधानः पादोऽयं भवति। अतः द्वैत-द्वैताद्वैतविशिष्टाद्वैताद्वैतादिमतवादिभिः सर्वैः युक्तिबलेनैव स्व-स्व-मतानुकूल्यार्थं सूत्राणां योजना कृता। साऽपि एतादृशनैपुण्येन सम्पादिता यत् तासां तारतम्यनिर्णयः सुदुष्कर एव प्रतिभाति। एवं च अत्र सूत्रमात्रतः व्याससमतनिरूपणं न सुकरं भवति। द्वैतादिमतवादानां परस्परविरोधात्। तथापि शास्त्रसंगतिबलेन पादोऽयं

निर्विशेषाद्वैतप्रतिपादनपर इति वक्तु शक्यते। तादृशत्रह्मैव एतद्ग्रन्थस्य तात्पर्य्यत्वेन प्रागेव प्रतिपादितत्वात्। पादप्रतिपाद्यस्य शास्त्राध्यायप्रतिपाद्य-व्याप्यत्वाच्च।

अथ यदि एतत्पादीयसूत्रार्थबलेनैव शास्त्रतात्पर्य्यस्यापि सविशेषब्रह्मपरत्वं प्रतिपादयितुम् इष्यते, तदा एतत्पादस्य सूत्रार्थं एवात्र कथञ्चित् संक्षेपत आलोचनीय। तथाहि सूत्रमात्रपाठत, ब्रह्मण जगत्सृष्टौ अभिन्ननिमित्तोपादानकारणत्वं सूत्रार्थत्वेन प्रायेण सर्वसम्मत्या उपलभ्यते। तथाच ब्रह्मण तादृशकारणत्वस्वीकारे तस्य विकारित्वादिकम् अवश्यम्भाव्येव भवति। तद्वारणाय च बहूनि सूत्राणि प्रयुक्तानि सन्त्यपि दोषशङ्का न निर्मूलतां याति। लौकिकयुक्त्यादिभि तद्दोषोद्धारस्य असम्भावितत्वम् आशङ्क्य श्रुतिप्रमाणेनैव तदेव साधितम् "श्रुतेस्तु शब्दमूलत्वात्" इत्यत तथापि कार्य्यमिथ्यात्ववादते, कार्य्यस्य प्रातिभासिकत्वं प्रातीतिकत्वं वा विना कारणस्य सर्वथा अविकारित्वं न कस्यापि बुद्ध्यारूढं भवति। अतएव 'तदनन्यत्व"-सूत्रेण कार्य्यकारणयो भेदाभाव प्रतिपाद्य कारणरूपब्रह्मण अविकारित्वं जगत मिथ्यात्वं च सिद्धान्तितम्। अयमेव एतत्पदार्थत्वेन सूत्रकृतां आशय इत्येव कल्पनं समीचीनमिति प्रतिभाति। कार्य्यकालेऽपि कार्य्यकारणयोरभेदकल्पनं कार्य्यस्य कल्पितत्वं भ्रान्तिविजृम्भितत्वं विना कथमपि न सम्भवति। लोके तु कार्य्यकाले कार्य्यकारणयो कथञ्चित् भेद एव स्वीक्रियते। अन्यथा व्यवहारस्य अनुपपत्तिर्दुर्वारा। 'तदनन्यत्व"-सूत्रलक्षिता "मृत्तिकेत्येव सत्यम्" इति श्रुति एव करेण कार्य्यस्यैव मिथ्यात्वं प्रतिपादयति। तेन च निर्विशेषाद्वैतसिद्धान्त एव अत्र उपदिष्ट इत्येव अनुमीयते। अत सूत्रार्थमात्रालोचनेन एतत् पादस्य निर्विशेषब्रह्मप्रतिपादनपरत्वमेव सिद्ध्यति। ततश्च अस्य अविरोधाध्यायस्य प्रथमे पादे कीदृशोऽविरोध प्रदर्शित, कीदृक् च अविरोधप्रदर्शनकौशलम् अवलम्बित सूत्रकृद्भगवता व्यासेन एतदपि अवगन्तव्यम्। तत्र प्रथमं तावत् युक्तितर्काभ्यां परकृताक्षेपपरिहाररूपम्, द्वितीयं तु परमतेषु मतभेदप्रदर्शनरूपम्, तृतीयं तु परमतस्य अश्रौतत्वप्रतिपादनं, चतुर्थं दोषसाम्यप्रदर्शनम्' एतत्पादीयसूत्राणां विश्लेषणे कृते एतदेव कौशलचतुष्टयम् अविरोधप्रदर्शनार्थम् अवलम्बितम् इति दृश्यते। एतत् सर्वम् अस्मिन् पादे, अविरोधप्रदर्शनकौशलमिति अवगन्तव्यम्। तेन च स्वपक्षस्थापनपरोऽयं पाद इत्यपि अभिधीयते। द्वितीये तु पादे युक्तितर्काभ्यां एव परपक्षप्रत्याख्यानं कृतम्। यत बहव मतवादिन सन्ति, ये खलु श्रुतिसिद्धान्तपूर्वपक्षभूतमतादिक श्रुतित स्वमतवीनत्वेन अवगम्य श्रुतिमपि अवजानन्ति। तेषां मतनिरसनं युक्तितर्काभ्यामेव करणीयम्। अत, पादोऽसौ परपक्षखण्डनपर इत्युच्यते। एवम् अत्र अविरोधाध्याये प्रथमादिपादद्वयेन स्वपक्षस्थापनपरपक्षखण्डनद्वारा वेदान्त-सिद्धान्त एव प्रतिष्ठापित॥ 'श्रुतिनिरपेक्षविचारशीलानां जीवजगद्ब्रह्मस्वरूपादिविषये अयमेव अध्याय आश्रयणीय।

इति द्वितीयाध्याये प्रथमपादोपसंहार।

(३) 'पयोम्बुवच्चेत् तत्रापि" २।२।३ (१७४) इत्यत्र 'पयोम्बुवत्" इति पदात् तथा पञ्चमसामान्यनियमात् प्रथमान्तपदस्य अध्याहारे कर्तव्येऽपि "चेत्" शब्दयोगात् अधिकरणारम्भ बाधित। पञ्चमविशेषनियमात्।

(४) 'व्यतिरेकानवस्थितेश्चानपेक्षत्वात्" २।२।४ (१७५) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात् पञ्चविशेषनियमात् च।

(५) "अन्यत्राभावाच्च न तृणादिवत्" २।२।५ (१७६) इत्यत्र "तृणादिवत्" इति पदात् प्रथमान्तस्य अध्याहारे कर्तव्येऽपि चकारयोगात् अधिकरणारम्भ न संगच्छते, पञ्चमसामान्यनियम पञ्चविशेषनियमेन बाधित। भास्करभाष्ये अत्र अधिकरणस्य रचनायां दोष।

(६) "अभ्युपगमेऽप्यर्थाभावात्" २।२।६ (१७७) इत्यत्र प्रथमान्तपदाभावात् "अपि" शब्दयोगाच्च नास्य अधिकरणारम्भकत्वम्, पञ्चमसामान्यनियम पञ्चविशेषनियमेन बाधित। भास्करभाष्ये तु अधिकरणस्य रचनायां दोष। रामानुज-श्रीपति-मतेषु नवमसूत्रात् परम् इदं सूत्रं पठ्यते। एतत् तु सूत्रक्रमविपर्ययमात्रं प्रदर्शितम्।

(७) "पुरुषाश्मवदिति चेत् तथापि" २।२।७ (१७८) इत्यत्र 'पुरुषाश्मवत्" इति पदात् प्रथमान्तपदाध्याहारे कर्तव्येऽपि चेत् शब्दयोगात् नास्य अधिकरणारम्भकत्वं समुचितम्, पञ्चमसामान्यनियम पञ्चमविशेषनियमेन बाधित। भास्करभाष्ये तथा वल्लभभाष्ये तु अधिकरणारम्भात् तयोरेव दोष।

(८) "अङ्गित्वानुपपत्तेश्च" २।२।८ (१७९) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। चकारयोगाच्च। पञ्चमसामान्यनियम पञ्चविशेषनियमेन बाधित।

(९) "अन्यथानुमितौ च ज्ञशक्तिवियोगात्" २।२।९ (१८०) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। पञ्चमसामान्यनियम पञ्चविशेषनियमेन बाधित। भास्करभाष्ये अधिकरणारम्भात् तस्यैव दोष। इत पर रामानुज-श्रीपति-मतेषु "अभ्युपगमेऽप्यर्थाभावात्" इति एकं सूत्रं पठ्यते। परन्तु न किमपि प्राचीनतरप्रमाणं प्रदर्शितम्।

(१०) "विप्रतिषेधाच्चासमञ्जसम्" २।२।१० (१८१) इत्यत्र "असमञ्जसम्" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तं, किंतु च शब्दयोगात् तस्य निषेध। चतुर्थसामान्यनियम पञ्चविशेषनियमेन बाधित। परसूत्रे सर्वसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति संगता। एवं च भास्करभाष्यस्य चत्वार दोषा, वल्लभस्य तु एक एव इति अस्मिन् अधिकरणे दृश्यते।

## द्वितीय महद्दीर्घाधिकरणम्

अत्र "महद्दीर्घवद् वा ह्रस्वपरिमण्डलाभ्याम्" २।२।११ (१८२) इति सूत्रस्य 'महद् दीर्घ"-शब्दात् अस्य 'महद्दीर्घाधिकरणं" नाम। तत्र शङ्कर-भास्कर-श्रीपति-भाष्येषु एतेन

एकेन सूत्रेण एतद्द्वितीयम् अधिकरणं रचितम्। रामानुज-निम्बार्क-मध्व-श्रीकण्ठ-वल्लभ-भाष्येषु एतदारभ्य सप्त सूत्राणि अस्मिन् द्वितीयाधिकरणे गृहीतानि। तेन शङ्कर-भास्कर-श्रीपतिमतेषु अन्यैः षड्भिः सूत्रैः तृतीयम् अन्यत् एकम् अधिकरणं कृतम्।

अत्र "महद्दीर्घवत्" इति पदात् यत् प्रथमान्तपदम् अध्याहर्त्तव्यम् भवति, तद्बलेनैव अस्य अधिकरणारम्भकत्वं संगच्छते। पञ्चमसामान्यनियमात्। तथाच अत्रैव अधिकरणसमाप्तिरपि, "उभयथापि न कर्म्मातस्तदभावः" इति परसूत्रे "कर्म्म" तथा "तदभावः" इति प्रथमान्तपदद्वय-सत्त्वेन तत्रैव पृथगधिकरणारम्भस्य समुचितत्वात्, तृतीयविशेषनियमात्। अत्र शङ्करादीनां त्रयाणाम् अल्पसंख्यकगणान्तर्गतत्वात् रामानुजादीनां पञ्चानाञ्च अधिकसंख्यकगणान्तर्गतत्वात् शङ्करादीनां त्रयाणामेव दोषेण भवितव्यम्। सत्यम्। तथापि शङ्करादीनां त्रयाणां नियमानुसारित्वात् रामानुजादीनां पञ्चानां नियमविरुद्धत्वात् रामानुजादीनां पञ्चानामेव दुष्टत्वं कल्पनीयम्। दोषग्रस्तानां सख्याधिक्यं न दोषस्य गुणत्वाय भवति। अतः शङ्करादीनाम् व्यासमतसन्निकृष्टत्वं सिद्धयति।

ततश्च अत्र शङ्करादीनां मतेन एतत् सूत्रं स्वपक्षस्थापनपरत्वेन व्याख्यातम्, रामानुजादीनां मतेन तु परपक्षखण्डनपरत्वेन। तेन शङ्करादीनां मतेन एतस्य पूर्ववर्तिस्मृति-पादान्तर्गतत्वं समुचितं भवति, रामानुजादीनां मतेन तु एतस्य एतत्परपक्षखण्डनपरपादा-न्तर्गतत्वमेव युक्तम्। अतः शङ्करादीनां मतेन अत्र पादसंगतिः लघिता भवति, रामा-नुजादीनां मतेन तु न तथा। तथापि "महद्दीर्घवद् वा" इत्यादिसूत्राक्षरमात्रदर्शनेन एतस्य खण्डन-परत्वं न प्रतिभाति, परन्तु परपक्षाक्षेपवारकत्वरूप-स्वपक्षस्थापनपरत्वम् एव प्रतीयते। एतत्पादीय-विशेषत्वसूचकाधिकरणारम्भक-न-कारादि-निषेधबोधक-पदाभावात् वत्-कारस्य प्रयोगदर्शनाच्च। एतत्शङ्कावारणाय रामानुजादिमतेन "विप्रतिषेधाच्चासमञ्जसम्" इति सूत्रात् निषेधबोधकम् "असम-ञ्जसम्" इति पदस्य अनुषङ्गं कृत्वा एतत्सूत्रस्य निषेधार्थकत्वं विहितं, तदनुयायिसूत्रार्थं च कृतम्। तद् यथा "अतः ह्रस्वपरिमण्डलाभ्यां महद्दीर्घाणुह्रस्वोत्पत्तिवत् अन्यच्च तदभ्युपगतं सर्वम् असमञ्जसम् इत्येव सूत्रार्थः"। परन्तु तन्न संगतम्। अधिकरणारम्भे यत्र अनुषंगः प्रयोजनं भवति, तत्र पूर्वाधिकरणारम्भकसूत्रादेव तत् करणीयम्। अत्र तन्न कृतम्। ततश्च एतत्सूत्रस्य उप-संहारार्थबोधकत्वं रामानुजमतेन सिद्धयति। "अन्यच्च तदभ्युपगतं सर्वम्" इत्युक्तेः। तथा सति ततः न अन्या असमञ्जसप्रदर्शनप्रचेष्टा संगच्छते। किन्तु "उभयथापि" इत्यादिसूत्रव्याख्या-नावतरणिकायां "किमन्यद् असमञ्जसम्" इत्येवं उक्तम्। एवं च उपसंहारानन्तरम् अन्यासामञ्जस्य-वर्णनं कृतम्। एतत्तु नैव संगतम्। समाप्तपुनरात्तत्वदोषापत्तेः। अतः एतत्सूत्रस्य षड्भिः परव-र्त्तिसूत्रैः सह एकाधिकरणत्वं न संगतम्, न वा परपक्षखण्डनपरत्वेन व्याख्यानं न समीचीनम् इति प्रतिभाति। किंच अत्र अधिकसम्मतेषु सर्वेषु अधिकरणारम्भकसूत्रेषु क्वचित् "न"-कार, क्वचित् "असमञ्जसम्", क्वचित् "अभावः", क्वचित् "अप्राप्तिः" इत्यादिनिषेधबोधक-शब्दप्रयोगः दृश्यते।

अत्र तु न तथा किमपि दृश्यते। अत सूत्राक्षरमात्रत एव एतत "महद्दीर्घवत्" इत्यादिसूत्रं न परपक्षखण्डनपरम् इति स्पष्टम्। सूत्रकारस्यैव अयमेव अभिप्राय इति गम्यते।

रामानुजभाष्येऽपि अत्र पादसंगति अन्विता अपि अस्मिन पादान्तिमभागे पादसंगति लंघिता एव इति दृश्यते। यत उत्पत्त्यधिकरणे तत्र पाञ्चरात्रमत-स्थापनं कृतम्। परमत खण्डनपादे एतत् तु नैव युक्तं भवति। प्रायेण सर्वे भाष्यकारै एतेन पाञ्चरात्रमतस्य शाक्तमतस्य वा दुष्टत्व खण्डित एव। अत रामानुजमतपक्षपातिनाम् अत्र एतदर्थं शंकरमतदूषणं न शोभनम् इति। ततश्च एतत्सूत्रस्य शंकरमत-व्याख्याने या पुनरुक्तिदोषापत्ति प्रदर्शिता, "न विलक्षणत्वादि" सूत्रेण तथोक्त, सा अपि न संगता, यत तत्र न वैशेषिकमतम् अवलम्ब्य जगत चेतन कारणत्वे बाधा उपस्थापिता, कार्य्ये कारण-सजातीय गुणोत्पाद वैशेषिकै स्वीक्रियते, तदनुसारेण वैशेषिकमतखण्डनात् प्राक् जगत चेतनचेतोत्पादकत्वशंकानिवारणाय "शिष्टापरिग्रह"-सूत्रस्य प्रपञ्चरूपा एतत्सूत्रस्य अवतारणा अत्रैव आवश्यकी। आदौ आत्मरक्षणं तत परआक्रमणम् इति न्यायात्। अत रामानुजादीनां व्याख्यानं न अत्र समर्थयितुं शक्यते—इत्येवं मन्यते। तेन अत्र सप्तभि सूत्रैं अधिकरणद्वयरचनमेव संगतं भवति।

## तृतीय परमाणुजगदकारणत्वाधिकरणम्।

अत्र सूत्रपदानुसारेण नास्य अधिकरणस्य नाम। यत सूत्रम् अत्र "उभयथापि न कर्म्मा तस्तदभाव" इति। किन्तु अधिकरणप्रतिपाद्यानुसारेण अस्य नामकरणं जातम्, यथा १।१।११ गतसामान्याधिकरणं, १।३।९ अपशूद्राधिकरणं, १।४।६ वाक्यान्वयाधिकरणम् इति। अत्र शंकर-भास्कर-श्रीपति-भाष्येषु षट् सूत्राणि गृहीतानि, रामानुज निम्बार्क-मध्व-श्रीकण्ठ-वल्लभ-भाष्येषु पूर्वोक्त महद्दीर्घ-सूत्रेण सह सप्त सूत्राणि गृहीतानि। तेन तेषां मते एतानि षट् सूत्राणि महद्दीर्घाधिकरणान्तर्गतानि एव भवन्ति। शंकरादीनां त्रयाणां मते तु पृथगधिकरणम् इति। तानि च षट् सूत्राणि यथा—

| | |
|---|---|
| १ "उभयथापि न कर्म्मातस्तदभाव" २।२।१२ (१८३) | ४। "रूपादिमत्त्वाच्च विपर्य्ययो दर्शनात्" २।२।१५ (१८६) |
| २ "समवायाभ्युपगमाच्च साम्यादनवस्थिते" २।२।१३ (१८४) | ५। "उभयथा च दोषात्" २।२।१६ (१८७) |
| ३। "नित्यमेव च भावात्" २।२।१४ (१८५) | ६। "अपरिग्रहाच्चात्यन्तमनपेक्षा" २।२।१७ (१८८) |

अत्र (१) "उभयथापि न कर्म्मातस्तदभाव" १।२।१२ (१८३) इति सूत्रे 'कर्म्म" तथा "तदभाव"" इति प्रथमान्तपदद्वयसत्त्वात् चतुर्थसामान्यनियमात् अधिकरणारम्भ संगत एव। विशेषान्तरान् तथा अपि-शब्दात्। पञ्चविशेषनियमेन नास्य बाध। द्वादशविशेष नियमात्। रा-म-नि-श्री-व इति पञ्चसु भाष्येषु एतत् सूत्रं पूर्वाधिकरणान्तर्गतं कृतम्, नात्र

अधिकरणम् आरब्धम् । अत्र तेषा संख्याधिक्येऽपि नियमविरुद्धत्वात् तेषां दोषेण भवितव्यम् ।

( २ ) "समयाभ्युपगमाच्च साम्यादनवस्थिते." २।२।१३ ( १८४ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात् , षष्ठविशेषनियमाच्च ।

( ३ ) "नित्यमेव च भावात्" २।२।१४ ( १८५ ) इत्यत्र नित्यम् इति प्रथमान्तपदसत्त्वेऽपि चकारयोगात्, चतुर्थसामान्यनियमस्य षष्ठविशेषनियमेन बाधात् अस्यापि नाधिकरणारम्भकत्वम् ।

( ४ ) "रूपादिमत्वाच्च विपर्य्ययो दर्शनात्" २।२।१५ ( १८६ ) इत्यत्र "विपर्य्यय." इति प्रथमान्तपदसत्त्वेऽपि चकारयोगात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमस्य षष्ठविशेषनियमेन बाध ।

( ५ ) "उभयथा च दोषात्" २।२।१६ ( १८७ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमस्य षष्ठविशेषनियमेन बाधः ।

( ६ ) "अपरिग्रहाच्चात्यन्तमनपेक्षा" २।२।१७ ( १८८ ) इत्यत्र "अनपेक्षा" इति प्रथमान्तपदसत्त्वेऽपि चकारयोगात् षष्ठविशेषनियमेन चतुर्थसामान्यनियमस्य बाधात् नास्य अधिकरणारम्भकत्वम् । परसूत्रे सर्वसम्मत्या अधिकरणरचनात् अत्रैव अधिकरणसमाप्तिः संगतैव ।

### चतुर्थं समुदायाधिकरणम् ।

अत्र "समुदाय उभयहेतुकेऽपि तदप्राप्ति." २।२।१८ (१८९) इति सूत्रस्य "समुदाय"-पदात् अस्य समुदायाधिकरणं नाम । अत्र शंकर-रामानुज-श्रीपति-वल्लभ-भाष्येषु दश सूत्राणि, भास्करभाष्ये नव सूत्राणि, "उभयथा च दोषात्" इति शंकर-पठित-षष्ठसूत्रस्य वर्जनात्, माध्वभाष्ये अष्ट सूत्राणि, निम्बार्कभाष्ये पञ्चदश सूत्राणि शंकरानुमोदित-परवर्त्त्यधिकरणस्य अस्मिन्नेव अन्तर्भावात्; श्रीकण्ठभाष्ये माध्वभाष्यवत् अष्ट सूत्राणि गृहीतानि, शंकरोक्तस्य एतदधिकरणस्य अत्र द्विधाकृतत्वात् । तानि च दश सूत्राणि

१। "समुदाय उभयहेतुकेऽपि तदप्राप्ति." २।२।१८ ( १८९ )
२। "इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्" २।२।१९ ( १९० )
३। "उत्तरोत्पादे च पूर्वनिरोधात्" २।२।२० ( १९१ )
४। "असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा" २।२।२१ (१९२)
५। "प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्" २।२।२२ ( १९३ )
६। "उभयथा च दोषात्" २।२।२३ (१९४)
७। "आकाशे चाविशेषात्" २।२।२४ (१९५)
८। "अनुस्मृतेश्च" २।२।२५ ( १९६ )
९। "नासतोऽदृष्टत्वात्" २।२।२६ ( १९७ )
१०। "उदासीनानामपि चैवंसिद्धि." २।२।२७ ( १९८ )

अत्र ( १ ) "समुदाय उभयहेतुकेऽपि तदप्राप्ति" २।२।१८ ( १८९ ) इत्यत्र "तदप्राप्ति."

इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात् । 'अपि'-शब्द नात्र बाधक, प्रसगभेदात्, अत्र द्वाद विरोधनियम द्रष्टव्य ।

( २ ) "इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्" २।२।१० ( १९० ) इत्यत्र प्रथमान्तपदाभावात "चेन" शब्दस्य योगाच्च नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात्, पञ्चमविरोधनियमाच्च ।

( ३ ) "उत्तरोत्पादे च पूर्वनिरोधात्" २।२।२० ( १९१ ) इत्यत्रापि तथा, चतुर्थ सामान्यनियमात्, षष्ठविरोधनियमाच्च ।

( ४ ) "असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा" २।२।२१ ( १०२ ) इत्यत्र "प्रतिज्ञोपरोध" तथा "यौगपद्यम्" इति प्रथमान्तपदद्वयसत्त्वात् अस्य अधिकरणारम्भकत्वम् उचितम्, किन्तु एकस्मिन्नपि भाष्ये नैतद् दृश्यते । अत "अन्यथा" इति पदात् प्रथमान्तपदद्वयस्य निराकाङ्क्षत्वस्य व्याघात परिकल्पयित्वा नास्य अधिकरणारम्भकत्व समर्थनीयम् । चतुर्थसामान्यनियमात, सप्तमविरोधनियमाच्च ।

( ५ ) "प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्" २।२।२२। ( १९३ ) इत्यत्र "अप्राप्ति" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्व युक्तम्, किन्तु एकस्मिन्नपि भाष्ये नैतत दृष्टम्, अत "अप्राप्ति" इति पदेनैव साकाङ्क्षत्वं परिकल्पयित्वा नास्य अधिकरणारम्भकत्वं समर्थनीयम् । चतुर्थसामान्यनियमात, सप्तमविरोधनियमाच्च ।

( ६ ) "उभयथा च दोषात्" २।२।२३ ( १९४ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात, पञ्चविरोधनियमाच्च । भास्कर-भाष्ये सूत्रमेतत् न दृश्यते । तत्र प्राचीनं प्रमाण न किमपि प्रदर्शितम् ।

( ७ ) "आकाशे चाविशेषात्" २।२।२४ ( १९५ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात, पञ्चविरोधनियमाच्च ।

( ८ ) "अनुस्मृतेश्च" २।२।२५ ( १९६ ) इत्यत्रापि तथा । चतुर्थसामान्यनियमात्, पञ्चविरोधनियमाच्च ।

( ९ ) "नासतोऽदृष्टत्वात्" २।२।२६ ( १९७ ) इत्यत्रापि तथा । पूर्वापरसूत्रे चकार-सत्त्वात् साकाङ्क्षत्व सिद्धम् । चतुर्थसामान्यनियमात्, सप्तदशविरोधनियमाच्च । माध्वभाष्ये तथा श्रीकण्ठभाष्ये एतेन पृथगधिकरणस्य आरम्भात् तयोरेव दोष ।

(१०) 'उदासीनानामपि चैवंसिद्धि' २।२।२७(१९८) इत्यत्र 'सिद्धि' इति प्रथमान्तपदसत्त्वात् अधिकरणारम्भ समुचित, चतुर्थसामान्यनियमात् । तथापि अपि शब्दयोगात् तथा चकारयोगात् तस्य निषेध, पञ्चविरोधनियमात न परसूत्रे सर्वसम्मत्या अधिकरणारम्भात् अत्रैव-अधिकरणसमाप्ति संगता भवति ।

## पञ्चमम् अभावाधिकरणम् ।

अत्र "नाभाव उपलब्धेः" २।२।२८ ( १९९ ) इति सूत्रस्य अभावपदात् अस्य "अभावाधिकरण" नाम । अत्र शंकरभाष्ये तथा वल्लभभाष्ये पञ्च सूत्राणि गृहीतानि, भास्करभाष्ये तेषां मध्ये "क्षणिकत्वाच्च" तथा "सर्वथानुपपत्तेश्च" इति अन्तिमसूत्रद्वयवर्जनात् त्रीणि सूत्राणि, रामानुजभाष्येऽपि "क्षणिकत्वाच्च" इति चतुर्थसूत्रवर्जनात्- पञ्चमसूत्रेण पृथगधिकरणकरणात् त्रीणि सूत्राणि, निम्बार्कभाष्ये तथा माध्वभाष्ये अत्र अधिकरण न कृत, श्रीकण्ठभाष्ये तथा श्रीपतिभाष्ये रामानुजभाष्यवत् त्रीणि सूत्राणि एव गृहीतानि । तानि च पञ्च सूत्राणि

| | |
|---|---|
| १। "नाभाव उपलब्धे" २।२।२८ (१९९) | ४। "क्षणिकत्वाच्च" २।२।३१ (२०२) |
| २।'वैधर्म्याच्च न स्वप्नादिवत्' २।२।२९ (२००) | ५। "सर्वथाऽनुपपत्तेश्च" २।२।३२ (२०३) |
| ३। "न भावोऽनुपलब्धे" २।२।३० (२०१) | |

( १ ) अत्र "नाभाव उपलब्धे" २।२।२८ ( १९९ ) इति सूत्रे "अभाव." इति प्रथमान्तपदसत्त्वात् अत्र अधिकरणारम्भ. सगत एव। चतुर्थसामान्यनियमात् । अत्र मध्वनिम्बार्कभाष्ययो. अधिकरणस्य अनारम्भात् दोष ।

( २ ) "वैधर्म्याच्च न स्वप्नादिवत्" २।२।२९ ( २०० ) इत्यत्र "स्वप्नादिवत्" इति पदात् प्रथमान्तपदस्य अध्याहारस्य कर्तव्यत्वेऽपि चतुर्थसामान्यनियमात्, चकारात् नास्य अधिकरणारम्भकत्वम् , षष्ठविशेषनियमात् ।

( ३ ) "न भावोऽनुपलब्धे." २।२।३० (२०१) इत्यत्र "भाव:" इति प्रथमान्तपदसत्त्वेऽपि माध्वभाष्य विना कुत्रापि अधिकरण न रचितम् । अत. अस्य साकाङ्क्षत्वम् अनुमाय सप्ताना भाष्याणा समर्थन करणीयम् । माध्वभाष्ये अधिकरणरचनाया माध्वभाष्यस्यैव दोष. कल्पनीयः । एवं च अत्र एको नियम कर्तुं शक्यते, स यथा

"यत्र पूर्वापरसूत्रयोर्मध्ये चकारयोगो भवेत्, तत्र मध्यपतितसूत्रस्य साकांक्षत्वम् अनुमाय अङ्गसूत्रत्वं कल्पनीयम्" । इति सप्तदशविशेषनियम. ।

अत्र "वैधर्म्याच्च न स्वप्नादिवत्" तथा "क्षणिकत्वाच्च" इति अत्र अस्य पूर्वापरसूत्रद्वयम् । उभयत्र चकारात् तन्मध्यवर्ति "न भावोऽनुपलब्धे" इति सूत्रस्य न अधिकरणारम्भकत्वम् इति सिध्यति ।

( ४ ) "क्षणिकत्वाच्च" १।२।३१ ( २०२ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात्, षष्ठविशेषनियमात् । एतत् सूत्रं भा-रा-श्री-श्रीप-भाष्येषु परित्यक्तम् । अत तेषा मते सूत्रत्रयेणैव एतदधिकरणम् विरचितम् ।

( ५ ) "सर्वथानुपपत्तेश्च" २।२।३२ ( १०३ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात् षष्ठविशेषनियमाच्च । भास्करभाष्ये एतदपि परित्यक्तम् ।

रा-श्री-श्रीप-भाष्येषु अत्र पृथगधिकरणकरणात तेषां चतुर्णां मतेषु प्रथमान्तिसूत्रत्रयेण एतदधिकरण रचितम्। अत रा-श्री-श्रीप-भाष्याणामेव पृथगधिकरणात दोष, प्रथमान्तपदाभावात्। परसूत्रे सर्वसम्मत्या पृथगधिकरणरचनात् अत्रैव अधिकरणसमाप्ति ।

## पञ्चम् एकस्मिन्नसम्भवाधिकरणम्

अत्र "नैकस्मिन्नसंभवात" २।२।३३ (१०४) इति सूत्रस्य "एकस्मिन्नसमव" इति पदात् अस्य "एकस्मिन्नसम्भवाधिकरणं" नाम। तत्र श्रीपतिभिन्नेषु सर्वेषु भाष्येषु अस्मिन् अधिकरणे चत्वारि सूत्राणि गृहीतानि। श्रीपतिभाष्ये 'शरीराणामानवस्थितपरिमाणत्वात्" इति एकं सूत्रम अतिरिक्त पठित्वा पञ्चसूत्राणि धृतानि, यथा—

१। "नैकस्मिन्नसम्भवात" २।२।३३ (२०४)
२। "एवं चात्माऽकात्स्न्र्यम्" २।२।३४ (२०५)
३। "न च पर्य्यायादप्यविरोधो विकारादिभ्य" २।२।३५ (२०६)
४। "अन्त्यावस्थितेश्चोभयनित्यत्वादविशेष" २।२।३६ (२०७)

अत्र (१) "नैकस्मिन्नसम्भवात्' २।२।३३ (२०५) इत्यत्र प्रथमान्तपदाभावात नास्य अधिकरणारम्भकत्वमेव युक्तम्। चतुर्थसामान्यनियमात। तथापि सर्वै भाष्यकारै तथा धृतत्वात् परवर्त्तिसूत्रद्वये चकारयोगात अत्र षोडशविशेषनियमेन अधिकरणारम्भ समर्थनीय।

अत्र "न भावोऽनुपलब्धे" २।२।३० "क्षणिकत्वाच्च" २।२।३१ 'सर्वथानुपपत्तेश्च" २।२।३२ इति सूत्रेषु चकारद्वयेन हेतुत्रयस्य समुच्चयात् अस्य पूर्वसूत्रेण पूर्वाधिकरणसमाप्ते अस्य पृथगधिकरणारम्भकत्वं सङ्गच्छते। तेन अत्र भावाभावाविरूप विरुद्धधर्म्म अत्र प्रथमान्तपदत्वेन ग्रहणीय। एतौ च भावाभावौ पूर्वाधिकरणस्य 'नाभाव उपलब्धे" तथा "न भावोऽनुपलब्धे" इति सूत्रद्वयात् लभ्यौ। विरुद्धधर्म्मस्यैव एकस्मिन् असम्भाव्यता, अत अर्थतोऽपि तादृशप्रथमान्तपदस्यैव लाभ।

(२) "एवं चात्माऽकात्स्न्र्यम्" २।२।३४ (२०५) इत्यत्र "अकात्स्न्र्यम्" इति प्रथमान्तपदसत्त्वेऽपि चकारात् अधिकरणारम्भ निषिद्ध। चतुर्थसामान्यनियमात् पञ्चविशेषनियमाच्च।

(३) "न च पर्य्यायादप्यविरोधो विकारादिभ्य" २।२।३५ (२०६) इत्यत्र "अविरोध" इति प्रथमान्तपदसत्त्वेऽपि चकारात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात् तथा पञ्चविशेषनियमात्।

(४) "अन्त्यावस्थितेश्चोभयनित्यत्वादविशेष" २।२।३६ (२०७) इत्यत्र "अविशेष" इति प्रथमान्तपदसत्त्वेऽपि चकारयोगात् नास्य अधिकरणारम्भकत्वम्। पञ्चविशेषनियमात् तथा चतुर्थसामान्यनियमात्। परसूत्रे अधिकसम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्ति संगच्छते।

## सप्तमं पत्यधिकरणम् ।

अत्र "पत्युरसामञ्जस्यात्" २।२।३७ (२०८) इत्यस्य सूत्रस्य "पति"-शब्दम् अवलम्ब्य अस्य "पत्यधिकरणं" नाम । तत्र शङ्कर-निम्बार्क-मध्व-श्रीपति-वल्लभभाष्येषु पञ्च सूत्राणि गृहीतानि, भास्कर-रामानुज-श्रीकण्ठ-भाष्येषु "सम्बन्धानुपपत्तेश्च" इति सूत्रस्य वर्जनात् चत्वारि सूत्राणि गृहीतानि । तानि च पञ्च सूत्राणि.

| | |
|---|---|
| १। "पत्युरसमञ्जस्यात्" २।२।३७ ( २०८ ) | ४। "करणवच्चेन्न भोगादिभ्य" २।२।४० (२११) |
| २। "सम्बन्धानुपपत्तेश्च" २।२।३८ (२०९) | ५। "अन्तवत्त्वमसर्वज्ञता च" २।२।४१(२१२) |
| ३। "अधिष्ठानानुपपत्तेश्च" २।२।३९ (२१०) | |

अत्र ( १ ) "पत्युरसामञ्जस्यात्" २।२।३७ ( २०८ ) इति सूत्रे प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्व युक्तम्, चतुर्थसामान्यनियमात् । तथापि सर्वै भाष्यकारैः तथा कृतत्वात्, कस्यचित् प्रथमान्तपदस्य अध्याहारेण अधिकरणारम्भ समर्थनीय । अत्र पादस्य अस्य खण्डनपरत्वेन पूर्वाधिकरणात् यथा नकारस्य अनुसङ्गः कर्तव्य, तथा असामञ्जस्यसिद्धये एकस्यैव पत्यु. ब्रह्मण. जगन्निमित्तमात्रत्वम् इत्यर्थकम् एक प्रथमान्तपदम्, पूर्वाधिकरणस्य "एकस्मिन् भावाभावौ" इतिवत् अध्याहर्तव्यम् । एवं च अत्र अधिकरणारम्भ सगच्छते । तेन सूत्रार्थ.—पत्युः जगन्निमित्तमात्रत्व न असामञ्जस्यात् इति । अथवा पूर्वाधिकरणस्य अन्तिमसूत्रद्वये चकारद्वयात् "अन्त्यावस्थितेश्च" इत्यादि सूत्रेण अधिकरणसमाप्ते अत. पृथगधिकरणारम्भ. सगत इति । षोडशविशेषनियमात् ।

( २ ) "सम्बन्धानुपत्तेश्च" २।२।३८ ( २०९ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात, षष्ठविशेषनियमात् च । इदं तु सूत्र भास्कर-रामानुज-श्रीकण्ठभाष्येषु परित्यक्तम्, प्राचीनतरप्रमाणप्रदर्शनं विना ।

"अधिष्ठानानुपत्तेश्च" २।२।३९ ( २१० ) इत्यत्रापि प्रथमान्तपदाभावात् अधिकरणारम्भ न युक्त । चतुर्थसामान्यनियमात् तथा षष्ठविशेषनियमात् ।

( ४ ) "करणवच्चेन्न भोगादिभ्य" २।२।४० ( २११ ) इत्यत्र "करणवत्" इति पदात् कस्मिंश्चित् प्रथमान्तपदे अध्याहर्तव्येऽपि "चेन्न" पदात् नास्य अधिकरणारम्भकत्वम् । पञ्चमविशेषनियमात् ।

( ५ ) "अन्तवत्त्वमसर्वज्ञता वा" २।२।४१ ( २२१ ) इत्यत्र "अन्तवत्त्वम्" तथा "असर्वज्ञता" इति प्रथमान्तपदद्वयात् अत्र पृथग् अधिकरणारम्भ युज्यते, चतुर्थसामान्यनियमात्; किन्तु अर्थानुरोधात तथा "वा"-शब्देन साकाङ्क्षत्वविधानात् अधिकरणारम्भ न करणीय, सप्तमविशेषनियमात् । ततश्च परवर्तिसूत्रेण सर्वसम्मत्या पृथगधिकरणारम्भात् अत्र एव अधिकरणस्य समाप्ति संगच्छते ।

अष्टमम् उत्पत्त्यसम्भवाधिकरणम् ।

अत्र "उत्पत्त्यसम्भवात्" २।२।४२ (२१३) इति सूत्रस्य "उत्पत्त्यसम्भव" इति पदात् अस्य "उत्पत्त्यधिकरणं" नाम । तत्र भास्करभिन्नेषु सर्वेषु भाष्येषु चत्वारि सूत्राणि गृहीतानि । भास्करभाष्ये "विप्रतिषेधाच्च" इति सूत्रस्य वर्जनात् त्रीण्येव सूत्राणि तत्र गृहीतानि, तानि च चत्वारि सूत्राणि यथा—

१। "उत्पत्त्यसम्भवात्" २।२।४२ (२१३)
२। "न च कर्तुः करणम्" २।२।४३ (२१४)
३। "विज्ञानादिभावे वा तदप्रतिषेधः" २।२।४४ (२१५)
४। "विप्रतिषेधाच्च" २।२।४५ (२१६)

अत्र (१) 'उत्पत्त्यसम्भवात्" २।२।४२ (२१३) इति सूत्रे प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वं युक्तम्, तथापि सर्वैः भाष्यकारैः तथा कृतत्वात् अत्र प्रथमान्तपदम् एकम् ऊहनीयम् । पञ्चमसामान्यनियमात् । किं तत् पदम् ? तत्र पादस्यास्य परमतखण्डनपरत्वेन पूर्वाधिकरणवत् अत्र एको नकारः अनुवर्तनीयः । अतः उत्पत्तेः निषेधात् उत्पत्तिरेव अत्र पूर्वपक्षत्वेन आशङ्किता । अतः प्रश्नः—कस्य उत्पत्तिविषयिणी शङ्का, यस्याः अत्र निषेधः ? स च शङ्काविषयः अत्र जीवः । यतः पूर्वाधिकरणात् ब्रह्मणः जगदुपादाननिमित्तकारणत्वे सिद्धे किं जगदन्तर्गतजीवस्यापि उत्पत्तिः तथाभूतब्रह्मणः जायते, न वा ? इति जिज्ञासा स्वाभाविकी । वर्त्तते च भागवतपाञ्चरात्रादिमतेषु जीवस्य उत्पत्तिवर्णनम् । अतः सूत्रं—"न जीवोत्पत्तिः उत्पत्त्यसम्भवात्" इति, तेन "जीवोत्पत्तिः" इति अध्याहृतप्रथमान्तपदेन अत्र अधिकरणारम्भः संगच्छते एव । रामानुजभाष्ये अस्मिन् अधिकरणे स्वमतस्थापनं कृतं दृश्यते, तदर्थं च तन्मते अत्र प्रथमादिसूत्रद्वयं पूर्वपक्षसूत्रम्, अन्तिमद्वयं तु सिद्धान्तसूत्रं कृतम् । निम्बार्क-मध्व-बलदेव-भाष्येषु अत्र शाक्तमतखण्डनं कृतम् । परन्तु तदर्थं न किमपि प्राचीनप्रमाणं प्रदर्शितं केनापि । अतः तत्र रामानुजभाष्ये पादसंगतिरक्षणरूपः दोषः प्रसज्यते । निम्बार्कादीनां भाष्येषु तथा न सम्भवति, तेषां खण्डनपरत्वात् । तथापि पुरुषम् अन्तरेण शक्तितः उत्पत्तिः न सर्वेषां शाक्तानां सिद्धान्तः तस्याः अनित्यत्वस्वीकारात् । नित्यत्वे तु न उत्पत्तिः सम्भवति । अतः तेषां मतेन सूत्रयोजना न सुष्ठु भवेत् ।

(२) "न च कर्तुः करणम्" २।२।४३ (२१४) इत्यत्र 'करणम्" इति प्रथमान्तपदसत्त्वेऽपि नास्य अधिकरणारम्भकत्वं युक्तम् । चकार-योगात् । चतुर्थसामान्य-नियमात्, तथा पष्ठविशेषनियमात् ।

(३) 'विज्ञानादिभावे वा तदप्रतिषेधः" २।२।४४ (२१५) इत्यत्र "तदप्रतिषेधः" इति प्रथमान्तपदसत्त्वेऽपि "वा" शब्देन साकाङ्क्षत्वविधानात् नास्य अधिकरणारम्भकत्वम् । चतुर्थ सामान्यनियमात्, पष्ठविशेषनियमाच्च ।

( ४ ) "विप्रतिषेधाच्च" २।२।४५ ( २१६ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थेसामान्यनियमात्, पञ्चविशेषनियमात् च । पादसमाप्ते अत्रैव अधिकरणसमाप्ति । भास्करभाष्ये सूत्रमेतत् परित्यक्तम्, न तु किमपि प्राचीनप्रमाण प्रदर्शितम् ।

## षष्ठपादसमालोचनम् ।

इदानीं द्रष्टव्यम् अनेन निबन्धेन अस्मिन् पादे अधिकरणरचनाया—

( १ ) कति कीदृशाश्च नियमा अत्र सङ्कलिताः ।

( २ ) कति च दोषा कस्य भाष्यस्य कथं सवृत्ता. ।

( ३ ) काश्च श्रुतय कैश्च सूत्रै उपजीव्यत्वेन गृहीता ।

( ४ ) उपजीव्यश्रुतिबलेन कीदृशी च पादसङ्गति ।

एते चत्वार विषया. अधस्तात् क्रमेण प्रदर्शनीया । तत्र प्रथमं तावत्

### ( १ ) कति कीदृशाश्च नियमा अत्र सङ्कलिताः

इति द्रष्टव्यम् । अत्र तु एकः एव अतिरिक्तः नियमः सङ्कलित । स खलु अत्र सख्यया समदश, तथा च

तत्रैव २।२।५ अधिकरणे भास्यभाष्ये "न भावोऽनुपलब्धेः" इति २।२।३० सूत्रे अधिकरणस्य रचनायां दोषः।

तत्रैव २।२।५ अधिकरणे रा-श्री-श्रीप-भाष्येषु "सर्वथानुपपत्तेश्च" इति २।२।३२ सूत्रे अधिकरणस्य रचनायां दोषः। एवं च—

| भाष्यनाम | अधिकरणस्य अरचनायां | अधिकरणस्य रचनायां |
|---|---|---|
| भास्करभाष्ये | ० दोषौ | ६ दोषाः |
| वल्लभभाष्ये | १ दोषः | १ दोषः |
| रामानुजभाष्ये | १ ,, | १ ,, |
| निम्बार्कभाष्ये | २ दोषौ | ० |
| श्रीकण्ठभाष्ये | १ दोषः | ० दोषौ |
| श्रीपतिभाष्ये | १ ,, | ० |

इति वक्तुं शक्यते। तथा च शङ्कर-भास्कर-भाष्ययोः दोषाभावः। इदानीं द्रष्टव्यम्—

(२) काः श्रुतयः कैश्च सूत्रैः उपजीव्यत्वेन गृहीताः

तत्र (१) प्रथमाधिकरणे प्रथमसूत्रे "रचनानुपपत्तेश्च नानुमानम्" इत्यत्र नैकापि श्रुतिः उपजीव्यत्वेन गृहीता। अस्य उपजीव्यं साङ्ख्योक्त-प्रधानानुमानमेव। एवं च अस्मिन् पादे सर्वेषु अधिकरणेषु तथा सर्वेषु सूत्रेषु प्रायेण श्रुतिवाक्यादिकं न अवलम्बितम्, किन्तु युक्तिमात्रम्। केवलं "पयोम्बुवच्चेत् तत्रापि" इति (२।२।३)सूत्रे "योऽप्सु तिष्ठन्" (बृ ३।७।४)इति एकं श्रुतिवाक्यं उद्धृतं दृश्यते। किन्तु युक्तिमात्रस्य अवलम्बने अत्र श्रुतिसंगतिः व्याहन्यते। तन्न युक्तं, तस्याः सर्वसंगतिव्यापकतमत्वात्, शास्त्रस्यास्य श्रुतिमीमांसारूपत्वात्, श्रुतीनां सर्वज्ञानाकरत्वाच्च। लोकेऽपि न एकोऽपि मतवादो दृश्यते, यस्य बीजं न वेदमध्ये वर्तते। किम् अधिकम् सर्वेषां श्रुतिसम्पर्कविरहितत्वं मन्यमानानां पाश्चात्यदार्शनिकानामपि यावन्तः मतवादाः वर्तन्ते, तेषां सर्वेषां सिद्धान्तबीजं वेदमध्ये एव उपलभ्यते। बुद्धिमतां विदुषां प्रयत्नेन तानि च बीजानि महापादपत्वेन परिणतानि इति एतावन्मात्रम्। अतः कल्प्यते एतत्पादीयमतवादानां बीजं श्रुतिमध्ये पूर्वपक्षरूपेण वर्तते एव। तेन तदनुकूलाः श्रुतयः एव एतत्पादीयाधिकरणानां विषयत्वेन कल्पयितुं शक्यन्ते। तथा सति अत्र पादे श्रुतिसंगतिः न दुर्लभा भवति। वस्तुतस्तु एतत्पादस्य प्रथमाधिकरणं साङ्ख्यमतखण्डनपरम्। पूर्वपक्षत्वेन तस्य मतं श्रुतिमध्ये वर्तते, एतच्च ईक्षत्यधिकरणादिषु स्पष्टतया प्रतिभाति। अतः साङ्ख्योत्थापिततर्के अपि श्रुतिसंगतिः कथं न स्थास्यति? एवं च अत्र श्रुतिसंगतिः वर्तते एव। अतः (२)द्वितीयाधिकरणे वैशेषिकाक्षेपपरिहारः, (३)तृतीयाधिकरणे तन्मतखण्डनम्। परमाणुवादरूपतन्मतबीजमपि श्रुतिमध्ये लभ्यते। छान्दोग्ये षष्ठप्रपाठके द्वादशखण्डे अणिमादीनां प्रसंगात्। श्वेताश्वतरोपनिषद् "कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष

इति चिन्त्यम्" इति १।२ वाक्यस्य, तथा "असद् वा इदमग्र आसीद्" इति (तै. २।७।१) वाक्यस्य च "भूतानि"-पदात् तथा "असत"-पदाच्च वैशेषिकमतवीजस्य लभ्यमानत्वात् । "भूतानि"-पदात् परमाणुवाद, तथा "असद्" इति पदात् असत्कार्य्यवाद. एव तन्मतस्य वीजत्वेन उपलभ्यते । अत अत्रापि श्रुतिसंगति न दुर्लभा । (४) चतुर्थाधिकरणे बौद्धाना सर्वास्तित्ववादखण्डनं कृतम् । दृश्याना क्षणिकत्वप्रतिपादनमेव तेषाम् आशय. । तच्च क्षणिकत्वं दृश्यानाम् अनित्यत्वबोधक-श्रुतिवाक्यानां विकृतिरूपमेवेति कल्पयितुं शक्यते । मतं च एतत् वैशेषिकाणामेव विधान्तरम् । बौद्धा हि निरन्वयविनाशपक्षपातिन. वैनाशिकाः । वैशेषिकास्तु अर्द्धवैनाशिकाः सान्वयविनाशवादिन इत्येव तयोः भेद इति सूत्रभाष्यत अवगम्यते । तथापि वैशेषिका वेदप्रामाण्यवादिन, अत तत्रापि श्रुतिसगति. न दुर्लभा । (५) पञ्चमाधिकरणे विज्ञानवादिवौद्धमतखण्डनं तथा शून्यवादिमतखण्डनं च । एतन्मतवीजं "विज्ञानेनैव विजानाति" ( छा ७।७।१) "विज्ञानमानन्द ब्रह्म" (वृ ३।९।२८) "असद् वा इदमग्र आसीत्" (छा ३।१९।१) इत्याद्याः श्रुतयः इति वक्तु शक्यते । (६) षष्ठाधिकरणम् जैनमतखण्डनपरम् । तदपि दृश्यानाम् अनिर्वचनीयत्वबोधकश्रुतिवाक्यत उद्भूतम् इति कल्पयितुं शक्यते । अनैकान्तिकत्वस्य स्थूलतः अनिर्वचनीयत्वान्तर्गतत्वात् । विष्णुपुराणे बौद्धजैनमतोत्पत्तिः यथा वर्णिता, ततोऽपि तन्मतद्वयस्य वेदमूलकत्वकल्पने न कापि बाधा दृश्यते । अत. तन्मतद्वयेऽपि श्रुतिसंगति. वर्त्तते एव । अतः (७) सप्तमाधिधिकरण पाशुपतमतखण्डनपरम् । एतन्मतवीजं "पतिं पतीना परमं परस्तात्" ( श्वे: ६।७ ) "न तस्य कश्चित् पतिरस्ति लोके" (श्वेः ६।९) "उमापतिं पशुपतिं" ( नृः ताः १।६ ) "सर्वेश्वर ईश. पशुपति, समारी जीव एव पशु" ( जावाल्युपनिषत् ) इत्यादिश्रुतिभ्य उपलभ्यते । अत्र एकस्मात् पतिशब्दात् ईश्वरस्य निमित्तकारणत्वम् अतिस्पष्टतया अवगम्यते । तेषां मतं तु केवलम् अधिष्ठाता ईश्वर जगत नोपादानमिति एवं निमित्तकारणवादरूपम् । अत अत्रापि श्रुतिसगति न दुर्लभा । ततश्च ( ८ ) अष्टमम् अधिकरणम् । तत्र जीवाद्युत्पत्तिवादि-पाञ्चरात्रमतं भागवतमतं च खण्डितम् । एतदेव चतुर्व्यूहमतम् इत्येव अभिधीयते । तन्मतवीजमपि उपनिषद्येव उपलभ्यते । चतुर्व्यूहकथा त्रिशीखब्राह्मणोपनिषदि ( १ ) श्लोके दृश्यते । महाभारते शान्तिपर्वणि नारायणीयपर्वाध्याये ३३९ अध्याये जीवाद्युत्पत्तिवादिपाञ्चरात्रमतमेकम् उपलभ्यते । तद् यथा

'नित्यं हि नास्ति जगति भूतं स्थावरजंगमम् । ऋते तमेकं पुरुषं वासुदेवं सनातनम् ॥३२
सर्वभूतात्मभूतो हि वासुदेवो महाबल । पृथिवीवायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ ३३
ते समेता महात्मान शरीरमिति संज्ञितम् । तदा विशति यो ब्रह्मन्नदृश्यो लघुविक्रमः ॥ ३४
उत्पन्न एव भवति शरीरं चेष्टयन् प्रभु । न विना धातुसंघात शरीरं भवति क्वचित् ॥३५
न च जीव विना ब्रह्मन् वायवश्चेष्टयन्त्युत । स जीव परिसंख्यात शेष सङ्कर्षण प्रभु ॥३६

स मनः सर्वभूतानां प्रद्युम्नः परिपठ्यते । तस्मात् प्रसूतो यः कर्ता कारणं कार्यमेव च ॥३८
तस्मात् सर्वं सम्भवति जगत् स्थावरजंगमम् । सोऽनिरुद्धः स ईशानोऽव्यक्तः स सर्वकर्मसु ॥३९
यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः । ज्ञेयः स एव राजेन्द्र जीवः सङ्कर्षणः प्रभुः ॥४०
सङ्कर्षणाच्च प्रद्युम्नो मनोभूतः स उच्यते । प्रद्युम्नात् योऽनिरुद्धस्तु सोऽहङ्कारः स ईश्वरः ॥ ४१

अत्र वासुदेवात् संकर्षणरूपस्य जीवस्य ततः प्रद्युम्नरूपस्य मनसः, ततः अनिरुद्धरूपस्य अहंकारस्य उत्पत्तिः वर्णिता । एतदेव महाभारतोक्तपाञ्चरात्रमतम् । इदानीं ये पाञ्चरात्रमतप्रतिपादकग्रन्थाः उपलभ्यन्ते, तत्र जीवादीनाम् उत्पत्तिकथनम् अनुपलभ्य रामानुजाचार्यादिभिः शांकरभाष्योपरि यः आक्षेपः कृतः, स तु न समीचीनः इति प्रतिभाति । शाङ्करभाष्ये जीवाद्युत्पत्तिवादिपाञ्चरात्रमतस्यैव खण्डनात्, महाभारतस्य प्रामाण्याधिक्याच्च । एवं च अत्रापि श्रुतिसंगतिः वर्तते ।

एवं च पादे अस्मिन् सर्वत्र श्रुतिसंगतिः वर्तते एवेति मन्यामहे । भाष्यकृद्भिः अप्रदर्शितायामपि तस्यां तत्प्रदर्शने न तेषां सम्मतिविरुद्धम् । तथा च तर्कबलेनैव अत्र परपक्षः खण्डितोऽपि अत्र वादस्य श्रुतयः उपजीव्यत्वेन अवलम्बनीया भवितुम् अर्हन्ति, ताः सर्वाः स्वल्पायासेनैव संग्रहणीया उपनिषदर्णवे प्रेक्षावद्भिः इति मन्यामहे ।

इदानीं द्रष्टव्यम् एतादृशाधिकरणतात्पर्यबलेन—

## ( ४ ) कीदृशी अस्य पादसंगतिः भवितुमुचिता ।

एतद् हि पञ्चमपादोपसंहारप्रस्तावे प्रायेण वर्णितमेव । तथापि द्वितीयम् एकम् एव अधिकरणं विहाय सर्वेषु अधिकरणेषु परमतखण्डनमेव कृतम् इति दृश्यते । तदपि सूत्रकृतां परमतासहिष्णुतां न सूचयति । परन्तु तेषां सन्मार्गप्रदर्शनाभिलाषप्रकर्षमात्रम् । तथा च विभिन्नभाष्यकृतां मतेन एतत्पादस्य यत् प्रतिपाद्यं तद् अत्र प्रदर्श्यते—

शांकरमतेन—सांख्यादिमतानां दुष्टत्वप्रदर्शनेन वेदान्तसमन्वयस्य विरोधपरिहारः ।

भास्करमतेन—न्यायेन तथैव ।

रामानुजमतेन—प्रतिपक्षतर्काणां वेदान्तवाक्यानुसारिभिः सत्तर्कैः निराकरणम् ।

निम्बार्कमतेन—तर्कोक्तयुक्तीनाम् आभासत्वप्रदर्शनरूपपरपक्षखण्डनम् ।

मध्वमतेन—समयाविरोधः ।

श्रीकण्ठमतेन—सांख्यादिमतानां दुष्टत्वप्रदर्शनम् ।

श्रीकरमतेन—सांख्यादिदुर्वादनिरसनेन मुमुक्षूणां शुद्धवैदिकमार्गनिष्ठत्वस्यैव दृढीकरणम् ।

वस्तुतः सर्वमतेनैव एतत्पादप्रतिपाद्यं परमतखण्डनमेव । तेन एतत्पादसंगतिरपि परमतखण्डनात्मिका इत्येव बोद्धव्यम् । तथा सति अनया संगत्या एतत्पादीयाधिकरणानि तथैव सर्वाणि सूत्राणि अपि व्याख्येयानि । ततश्च पादेऽस्मिन् अधिकरणानां विषयवाक्यत्वेन नैकमपि श्रुतिवाक्यं केनापि भाष्यकारेण प्रदर्शितम् । तथापि यदि पूर्वमीमांसावत् श्रुतिमीमांसा

तदा एतत्शास्त्रस्य प्रयोजनं भवेत्. येन च श्रुतिमतानिरेव सर्वापेक्षया व्यापकसंगतित्वेन परिगृहीतं स्याद्वादिभिः. तदा सर्वेषु अधिकरणेषु विषयरूपेण श्रुतिवाक्यादिकं कथं न उपलम्भनीयम् । वस्तुतस्तु एतत्पादीय-सांख्य-वैशेषिक-बौद्ध-जैन-पाशुपत-पाञ्चरात्रमतानां बीजभूतं श्रुतिवाक्यं न दुर्लभम् । यदि श्रुतिरेव सर्वज्ञानाकरत्वेन स्वीक्रियते, यदि श्रुतिरेव ब्रह्मणैव कल्पादौ मनुष्यसमाजे धर्माधर्मकर्मव्यवहारादिशिक्षार्थं प्रचारिता, तदा सर्वेषाम् अतीतानागतवर्तमानमतवादानां बीजभूतं श्रुतिवाक्यं पूर्वपक्षत्वादिरूपेण प्रासंगिकरूपेण वा श्रुतिमध्येषु प्रापणीयम् एव । भाष्यकारवृन्दैः अप्रदर्शितमपि तत्र तेषाम् सिद्धान्तविरुद्धमिति मन्तुम् उचितम् । एतदपि अत्र चिन्तनीयम् । इति पञ्चपादसमालोचनम् ।

इति द्वितीयाध्याये द्वितीयपादोपसंहार ।

## अथ द्वितीयाध्याये तृतीयपादः ।

नात्र अधिकरणम् आरब्धम्। अत "गौणी" इति शब्दस्य साकांक्षत्वं कल्पयित्वा सप्तम विशेषनियमात् नास्य अधिकरणारम्भकत्वं युज्यते। रा नि-श्री-श्रीप-बलभ-भाष्येषु परसूत्रमपि एतत्सूत्रस्य शेषत्वेन पठ्यते, तन्न युक्तं, चकारेण हेतुभेदसूचनात्। चतुर्थविशेषनियमात्।

( ४ ) "शब्दाच्च" २।३।४ (२२०) इत्यत्र प्रथमान्तपदाभावात न अस्यापि अधिकरणारम्भत्वम्। चतुर्थसामान्यनियमात पञ्चविशेषनियमाच्च। रा नि-श्री-श्रीप-बलभ-भाष्येषु एतस्य पूर्वसूत्रशेषत्वं दृश्यते। तन्न युक्तम्, चकारेण हेतुभेदसूचनात् चतुर्थविशेषनियमाच्च। तेषां मते चकारात् "गौणी" इति शब्दस्यापि अधिकरणारम्भकत्वं बाध्यते इति बोद्धव्यम्।

( ५ ) "स्याच्चैकस्य ब्रह्मशब्दवत्" २।३।५ (२२१) इत्यत्र "ब्रह्मशब्दवत्" इति शब्दात् प्रथमान्तत्वस्य अध्याहारे कृतेऽपि चकारात् नास्य अधिकरणारम्भकत्वम् चतुर्थसामान्यनियमात्। पञ्चविशेषनियमाच्च। तु-वर्जित प्रथमान्तत्वात् स्यात् साकांक्षत्वं नाधिकरणारम्भकम् षष्ठविशेषनियमाच्च।

( ६ ) "प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः" २।३।६ (२२२) इत्यत्र "प्रतिज्ञाहानि" इति प्रथमान्तपदसत्त्वात् अत्र पृथगधिकरणारम्भ समुचित। चतुर्थसामान्यनियमात्। किन्तु न केनापि तथा कृतम्। अत "प्रतिज्ञाहानि" इति शब्दस्य साकांक्षत्वं कल्पयित्वा समन्वयनीयम्। सप्तमविशेषनियमात्। ततश्च अत्र रा-श्री-भाष्यद्वयमते "शब्देभ्य" इति पदेन पृथक् एकं सूत्रं कृतम्। एतदर्थं चतुर्थसामान्यनियमः चिन्तनीयः। चकाराभावात् न अन्यन्तरस्य हेतुत्वम्, अत पृथक्करणं न युक्तम्।

( ७ ) "यावद्विकारं तु विभागो लोकवत्" २।३।७ (२२३) इत्यत्र "विभाग" इति प्रथमान्तपदसत्त्वेऽपि चतुर्थसामान्यनियमात् "तु" शब्दयोगात् तस्य साकांक्षत्वं साधितम्, नवमविशेषनियमात्। अत नात्र पृथगधिकरणारम्भः संगच्छते। परसूत्रे षड्भिर्भाष्यकारैः अधिकरणस्य आरब्धत्वात् अत्रैव अधिकरणसमाप्तिः संगच्छते। रामानुजभाष्ये इत परं सूत्रद्वयम् अत्र गृहीतम्। तथा निम्बार्कभाष्ये इत परं अष्ट सूत्राणि अत्र गृहीतानि। तेन तयोः मते नात्र अधिकरणसमाप्तिः इति बोद्धव्यम्।

द्वितीय मातरिश्वाधिकरणम्।

अत्र 'एतेन मातरिश्वा व्याख्यात" २।३।८ (२२४) इति सूत्रस्य 'मातरिश्वा" इति पदात् अस्य 'मातरिश्वाधिकरणं' नाम। तत्र रामानुज-निम्बार्क-श्रीपति-भाष्यभिन्नेषु सर्वत्र एतदेव एकं सूत्र गृहीतम्। रामानुजमतेन तथा निम्बार्कमतेन एतत् सूत्रं पूर्वाधिकरणान्तर्गतमेव कृतम्। श्रीपतिमतेन तु परवर्तिसूत्रेण सह तथाच सूत्रद्वयेनैव एतदधिकरणं रचितम्। अत्र "मातरिश्वा" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं संगतमेव, चतुर्थसामान्यनियमात्। तथैव च कृतं सर्वैः भाष्यकारैः। परसूत्रे अधिकरणान्तरत्वात् अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिश्च

सगच्छते। तेन रामानुज-निम्बार्कभाष्ययो अधिकरणस्य अनारम्भात् दोषेण भवितव्यम् ।

**तृतीयम् असंभवाधिकरणम् ।**

अत्र "असम्भवस्तु सतोऽनुपपत्ते." २।३।९ (२२५) इति सूत्रस्य "असम्भव." इति पदात् अस्य "असम्भवाधिकरण" नाम । तत्र रामानुज-निम्बार्क-श्रीपति-भाष्यभिन्नेषु सर्वेषु भाष्येषु एतदेव एक सूत्रं गृहीतम् । रामानुजभाष्ये तु एतत् प्रथमाधिकरणस्य नवाना सूत्राणा मध्ये अन्तिमं सूत्रम्। निम्बार्कभाष्ये एतत् हि प्रथमाधिकरणस्य पञ्चदशाना सूत्राणा मध्ये अष्टमं सूत्रम् । श्रीपतिभाष्ये च एतच्च द्वितीयाधिकरणस्य अन्तिमं सूत्रम् । अत्र "असम्भव." इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं संगतमेव, चतुर्थसामान्यनियमात्" । तु शब्दस्य निषेधार्थकत्वात् "तत् तु समन्वयात्" इतिवत् नास्य अधिकरणारम्भकत्वे व्याघात. सञ्जात । नवमविशेषनियमात् अष्टादशविशेषनियमाच्च। परसूत्रेण अधिकसंख्यकै. भाष्यकारै अधिकरणस्य आरब्धत्वात् अत्रैव अधिकरणसमाप्ति । तेन रा-नि-श्रीप-भाष्याणाम् अधिकरणस्य अरचनाया दोष ।

**चतुर्थं तेजोऽधिकरणम् ।**

अत्र "तेजोऽतस्तथा ह्याह" २।३।१० (२२६) इति सूत्रस्य "तेज" पदात् अस्य इति । "तेजोऽधिकरण" नाम। तत्र रामानुज-निम्बार्क-श्रीपति-भिन्नेषु भाष्येषु एतेनैव एकेन सूत्रेण एतदधिकरण रचितम् । रामानुजभाष्ये तस्य द्वितीयाधिकरणस्य अष्टानां सूत्राणा मध्ये एतद् हि प्रथमं सूत्रम्, निम्बार्कभाष्ये तस्य प्रथमाधिकरणस्य पञ्चदशाना सूत्राणा मध्ये एतद् हि नवम सूत्रम् । श्रीपति-भाष्ये तस्य चतुर्थाधिकरणस्य पञ्चाना सूत्राणा मध्ये एतदेव प्रथमं सूत्रम् । अत्र "तेज" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं, चतुर्थसामान्यनियमानुगतमेव । "अत" इति शब्दस्य अत्र हेत्वर्थकत्वस्य अभावात् नात्र साकाङ्क्षत्वं शङ्कनीयम् । परसूत्रे अधिकसम्मत्या अधिकरणस्य आरम्भदर्शनात् अत्रैव अधिकरणसमाप्तिश्च सगच्छते। तेन अत्र अधिकरणस्य अरचनायां निम्बार्कभाष्यस्यैव दोषसंस्पर्शः सञ्जात. ।

**पञ्चमम् अब्धिकरणम् ।**

अत्र "आप." २।३।११ ( २२१ ) इति सूत्रस्य "अप्" शब्दात् अस्य "अब्धिकरणं" नाम । तत्र रामानुज-निम्बार्क-श्रीकण्ठ-भिन्नेषु भाष्येषु सर्वत्र एतदेव एकं सूत्र गृहीतम् । रामानुज-मतेन एतत् सूत्रं तस्य द्वितीयाधिकरणस्य अष्टसु सूत्रेषु मध्ये द्वितीयं सूत्रम् । निम्बार्कमतेन तु एतत् सूत्र तस्य प्रथमाधिकरणस्य पञ्चदशसु सूत्रेषु मध्ये दशमं सूत्रम् । तथैव श्रीकण्ठमतेन एतत् सूत्र तस्य चतुर्थाधिकरणस्य पञ्चसु सूत्रेषु मध्ये द्वितीयं सूत्रम् । अत्र "आप" इति प्रथमान्त-पदात् अस्य अधिकरणारम्भकत्वं समुचितमेव। चतुर्थसामान्यनियमात् । तेन रामानुज-निम्बार्क-श्रीकण्ठभाष्याणा अधिकरणस्य अरचनेन दोष । परसूत्रे अधिकसम्मत्या अधिकरणा-रम्भात् अत्रैव अधिकरणसमाप्ति. ।

## षष्ठ पृथिव्यधिकाराधिकरणम् ।

अत्र "पृथिव्यधिकाररूपशब्दान्तरेभ्य" २।३।१२ (२२८) इति सूत्रस्य "पृथिव्यधिकार"-पदात् अस्य "पृथिव्यधिकाराधिकरणं" नाम । तत्र रामानुज-निम्बार्क-श्रीकण्ठ-भिन्नेषु-भाष्येषु सर्वत्र एतदेव एकं सूत्रं एतदधिकरणार्थं गृहीतम् । तत्र "पृथिवी" इति एकं सूत्रं रा-नि-श्री भाष्येषु दृश्यते, ततः "अधिकाररूपशब्दान्तरेभ्य" इति द्वितीयं सूत्रं रा-श्री-भाष्यमध्ये दृश्यते । निम्बार्क-भाष्ये तु "पृथिव्यधिकाररूपशब्दान्तरेभ्य" इति अपरं सूत्रम् । एवं च रा-नि-श्री-भाष्येषु एतत्सूत्रद्वयेन अधिकरणं न रचितम् । "पृथिवी" इति सूत्रं तु रामानुजमतेन द्वितीयाधिकरणस्य अष्टानां सूत्राणां मध्ये तृतीयं सूत्रम्, निम्बार्कमतेन तु प्रथमाधिकरणस्य पञ्चदशानां सूत्राणां मध्ये एकादशं सूत्रम् । तथा श्रीकण्ठमतेन चतुर्थाधिकरणस्य सूत्रपञ्चकमध्ये तृतीयं सूत्रं भवति । "अधिकाररूपशब्दान्तरेभ्य" इति सूत्रं च रामानुजमतेन द्वितीयाधिकरणस्य अष्टानां सूत्राणां मध्ये चतुर्थं सूत्रम्, श्रीकण्ठमतेन तु चतुर्थाधिकरणस्य पञ्चानां सूत्राणां मध्ये चतुर्थं सूत्रम् । "पृथिव्यधिकाररूपशब्दान्तरेभ्य" इति सूत्रं तु निम्बार्कमतेन प्रथमाधिकरणस्य पञ्चदशानां सूत्राणां मध्ये एकादशं सूत्रम् इति विवेकः ।

अत्र "पृथिवी" इति सूत्रे प्रथमान्तपदसत्त्वात् अधिकरणस्य आरम्भः युक्तः । रा-नि-श्री-भाष्याणि दुष्टानि तदकरणात् । निम्बार्कमते "पृथिवी" तथा "पृथिव्यधिकाररूपशब्दान्तरेभ्य" इति सूत्रद्वयमध्ये पृथक्प्रथमान्तपदसत्त्वेऽपि अधिकरणस्य अनारम्भात् पुनरपि दोषापत्तिः । तेन निम्बार्कमते अपरः एकः अतिरिक्तः दोषः भवति । एवं च "पृथिव्यधिकाररूपशब्दान्तरेभ्य" इति सूत्रे "पृथिवी" इति प्रथमान्तपदसत्त्वात् रा-भा-म-श्रीप-च-भाष्येषु अधिकरणारम्भः सङ्गच्छते एव । चतुर्थसामान्यनियमात् । अत्र सूत्रविभागः न युक्तः, आकाङ्क्षाभावस्यात्, चतुर्थविशेषनियमात् । परसूत्रे अधिकसम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्तिः सङ्गतापि ।

## सप्तम तदभिध्यानाधिकरणम् ।

अत्र "तदभिध्यानादेव तु तल्लिङ्गात् सः" २।३।१३ (२२९) इति सूत्रस्य 'तदभिध्यान" शब्दात् अस्य 'तदभिध्यानाधिकरणं" नाम । तत्र रामानुज-निम्बार्क-श्रीकण्ठ-भाष्यभिन्नेषु सर्वत्र एकेन सूत्रेण एतदधिकरणं रचितम् । रामानुजमतेन एतत् सूत्रं तदीय द्वितीयाधिकरणस्य अष्टसु सूत्रेषु पञ्चमं सूत्रम् । निम्बार्कमतेन तदीय प्रथमाधिकरणस्य पञ्चदशसु सूत्रेषु त्रयोदशं सूत्रम् । श्रीकण्ठमतेन तदीय चतुर्थाधिकरणस्य पञ्चसु सूत्रेषु पञ्चमं सूत्रम् ।

अत्र "सः" इति प्रथमान्तपदस्य सत्त्वात् अनेन अधिकरणारम्भः सङ्गच्छते, चतुर्थसामान्यनियमात् । "तु"-शब्दस्य तत्र न बाधकत्वं, निषेधार्थकत्वात् । नवमविशेषनियमात् नात्र एकसूत्र पक्षस्य-शङ्का कर्त्तव्या, तेन अष्टदशविशेषनियमात् न बाधा । परसूत्रे अधिकसम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्तिः सङ्गतैव । तेन अत्र रा-नि-श्री-भाष्याणि अधिकरणस्य अरचनया दोषग्रस्तानि इति वक्तुं शक्यते ।

## अष्टमं विपर्य्ययाधिकरणम् ।

अत्र "विपर्य्ययेण तु क्रमोऽतः उपपद्यते च" २।३।१४ ( २३० ) इति सूत्रस्य "विपर्य्यय"-शब्दात् अस्य "विपर्य्ययाधिकरणं" नाम । अत्र रामानुज-निम्बार्क-श्रीकण्ठभाष्यभिन्नेषु सर्वत्र एतद् एकमेव सूत्रं गृहीतम् । तत्र रामानुजमतेन तदीय-द्वितीयाधिकरणस्य अष्टानां सूत्राणां मध्ये एतत् हि षष्ठं सूत्रम् । निम्बार्कमतेन तु तदीय-प्रथमाधिकरणस्य पञ्चदशानां सूत्राणां मध्ये एतत् हि चतुर्दशसूत्रम् । श्रीकण्ठमतेन तदीय-पञ्चमाधिकरणस्य सूत्रद्वयमध्ये एतत् तु प्रथमं सूत्रम् । अत एतेन सूत्रेण अधिकरणस्य अनारम्भात् रामानुज-निम्बार्कभाष्यद्वयं दोषग्रस्तम् ।

अत्र "क्रमः" इति प्रथमान्तपदात् चतुर्थसामान्यनियमात् अधिकरणारम्भः संगत एव । तत्रापि "तु च" इति पदद्वयात् नवमविशेषनियमात् तथा षष्ठविशेषनियमात् द्वादशविशेषनियमाच्च अत्र अधिकरणारम्भे बाधा न शङ्कनीया । तु-शब्दस्य-पूर्वपक्षीय-शङ्कावारणार्थत्वात् नवमविशेषनियमात् चकारस्य हेतोरेव समुच्चायार्थत्वात् द्वादशविशेषनियमात् । अत्र अष्टादशविशेषनियमोऽपि द्रष्टव्यः । परसूत्रे अधिकसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिश्च संगतैव इति सिद्ध्यति ।

## नवमम् अन्तराविज्ञानाधिकरणम् ।

अत्र "अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्" २।३।१५ ( २३१ ) इति सूत्रस्य "अन्तरा"शब्दात्, तथा "विज्ञान"शब्दात् अस्य "अन्तराविज्ञानाधिकरणं" नाम । तत्र शंकर-भास्कर-श्रीपति-भाष्येषु एतेन एकेन सूत्रेण एतदधिकरणं रचितम् । मध्व-वल्लभ-भाष्यद्वयमध्ये सूत्रद्वयेन । रामानुज-निम्बार्क-श्रीकण्ठभाष्येषु अधिकरणं न रचितम् । अत्र रामानुजमतेन तदीय-द्वितीयाधिकरणस्य अष्टानां सूत्राणां मध्ये एतद् सप्तमं सूत्रम् । निम्बार्कमतेन तदीय-प्रथमाधिकरणस्य पञ्चदशानां सूत्राणां मध्ये एतद् हि अन्तिमं सूत्रम् । श्रीकण्ठमतेन तदीय-पञ्चमाधिकरणस्य सूत्रद्वयमध्ये अन्तिमं सूत्रम् । तेन अधिकसम्मत्या अनेन अधिकरणस्य आरम्भात् अत्र अधिकरणस्य अरचनायां रा-नि-श्रीभाष्याणां दोषः ।

अत्र "विज्ञानमनसी" इति प्रथमान्तपदसत्त्वात् अनेन अधिकरणारम्भः समुचित एव, चतुर्थसामान्यनियमात् । तथापि सूत्रमध्ये "इति चेन्न" इति वाक्यांशात् नात्र अधिकरणम् आरम्भनीयम्, पञ्चमविशेषनियमात् । परन्तु अधिकरणरचनायाम् अष्टानां भाष्याणां मध्ये पञ्चानां ऐक्यमत्यात् अरचनायां तु त्रयाणाम् असम्मतेश्च केनचिद् विशेषनियमेनैव अधिकरण-रचनमेव समर्थनीयम् । स च चतुर्दशविशेषनियमः प्रागेव कृतः । यथा "प्रथमान्तपदात् परं यदि पञ्चम्यन्तपदसत्त्वं, ततः परं यदि 'इति चेन्न" इति पदं, तदा अधिकरणारम्भः समुचित एव" इति । एवं चेत् अत्र "विज्ञानमनसी" इति प्रथमान्तपदात् परं "तल्लिङ्गात्" इति पञ्चम्यन्तपद-सत्त्वात् अस्य अधिकरणारम्भकत्वं युज्यते एव । न च "इतरपरामर्शात् स इति चेन्न असम्भवात्" १।३।१८ इति सूत्रे "इतरपरामर्शात्" इति पञ्चम्यन्तपदात् "स" इति प्रथमान्तपदसत्त्वेऽपि

अधिकरणस्य अनारम्भात् दोष इति वाच्यम्, अत्र "इतर" शब्देन साकांक्षत्वस्य विधानात्। न वा 'तर्काप्रतिष्ठानादपि अन्यथानुमेयमिति चेद् एवमपि अनिर्मोक्षप्रसंगात्' २।१।११ इति सूत्र "तर्काप्रतिष्ठानाद्" इति पञ्चम्यन्तपदात् "अन्यथानुमेयम्" इति प्रथमान्तपदसत्त्वेऽपि अधिकरणस्य अनारम्भात् दोष स्यात् इति वाच्यम्। तत्र "अपि" शब्देन हेतोरेव समुच्चयात् साकांक्षत्वस्य विहितत्वात्। "भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्" २।१।१३ इति सूत्र तु अत्र अनुकूलमेव। यद्यपि "उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" २।१।२४ इति सूत्रे प्रथमान्त पदाभावेऽपि अधिकरणस्य आरम्भात् प्रकृतनियमस्य प्रतिकूल्य प्रसज्येत, तथापि तत्र आवश्यक-प्रथमान्तपदस्य अध्याहर्तव्यत्वात् न दोष—इत्येव कल्पनीयम्, चतुर्दशविशेषनियमात् इति। परस्तु अधिकरणान्तरा अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्ति युज्यते एव। तेन अत्र अधिकरणस्य अरचनायां रा-नि-श्रीभाष्याणां दोष इति प्रागेव उक्तम्।

दशम चराचरव्यपाश्रयाधिकरणम्

अत्र "चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" २।३।१६ (२३२) इति सूत्रस्य "चराचरव्यपाश्रय" इति पदात् अस्य "चराचरव्यपाश्रयाधिकरण" नाम। अत्र शङ्कर-भास्कर-निम्बार्क-श्रीकण्ठ-श्रीपति-भाष्येषु अधिकरणम् आरब्धम्। तत्र शङ्कर-भास्कर श्रीकण्ठ-श्रीपति-भाष्येषु एतदर्थम् एतत् एकमेव सूत्रं गृहीतम्। निम्बार्कभाष्ये तु एतदारम्य सूत्रद्वय गृहीतम्। रामानुज-मध्व-वल्लभभाष्येषु किन्तु अधिकरणं न रचितम्। रामानुजभाष्ये एतद् हि तदीय-द्वितीयाधिकरणस्य अष्टसु सूत्रेषु अष्टमं सूत्रम्। मध्व-वल्लभ-भाष्यद्वयमध्ये-तदीय-नवमाधिकरणस्य सूत्रद्वयमध्ये द्वितीय सूत्रम्।

अत्र "चराचरव्यपाश्रय" "तद्व्यपदेश" "भाक्त" इति प्रथमान्तपदत्रयस्य सत्त्वात् अनेनैव अधिकरणारम्भ संगत। चतुर्थसामान्यनियमात्। तु-शब्दस्य निषेधार्थकत्वेन नवमविशेष नियमात्। अनुक्तपूर्वपक्षत्वमपि अत्र साधकम्। अष्टादशविशेषनियमात् अधिकरणारम्भ संगत एव। अथवा प्रथमान्तपदात् "तु शब्दयुक्त-'स्यात्'-शब्दसत्त्वम् अधिकरणारम्भकम्" इति ऊनविंसविशेष नियमात् अधिकरणारम्भ युक्त। तेन रा-म-व-भाष्येषु अधिकरणस्य अनारम्भात् तेषामेव दोष।

एकादशम् आत्माधिकरणम्।

अत्र "नात्माश्रुतेर्नित्यत्वाच्च ताभ्य" २।३।१७ (२३३) इति सूत्रस्य "आत्मा" इति पदात् अस्य "आत्माधिकरण" नाम। तत्र निम्बार्क-भाष्यभिन्नेषु सर्वत्र इति एकेनैव सूत्रेण एतद धिकरण रचितं दृश्यते। निम्बार्क-भाष्ये एतत् सूत्रं तदीय-द्वितीयाधिकरणस्य द्वितीयं सूत्रम्, तेन तत्र एतेन अधिकरणं न रचितमेव।

अत्र "आत्मा" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं संगतमेव, चतुर्थसामान्य-नियमात्। न च चकार-सत्त्वम् अस्य तादृशत्वे बाधकम् इति वाच्यम्, षष्ठविशेषनियमात्, ततश्च

च-कारेण विशेषणान्तरत्वविधानात् त्रयोदशविशेषनियमात् अधिकरणारम्भः सगच्छते। तेन निम्बार्कभाष्यस्यैव अधिकरणस्य अरचनाया दोषप्रसक्तिः। परसूत्रे अधिकसम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्ति सगता।

## द्वादशं ज्ञाधिकरणम्

अत्र "ज्ञोऽत एव" २।३।१८ ( २३४ ) इति सूत्रस्य "ज्ञ" इति पदात् अस्य "ज्ञाधिकरण" नाम। अत्र रामानुजभाष्य-भिन्नेषु सर्वेषु भाष्येषु एतद् एकमेव सूत्रं गृहीतम्। रामानुजभाष्ये तदीय-चतुर्थाधिकरणस्य चतुर्दशसु सूत्रेषु मध्ये एतत् तु प्रथमं सूत्रम्। तेन सर्वसम्मत्या अत्रैव अधिकरणारम्भ समुचित भवति।

अत्र "ज्ञः" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्व सङ्गच्छते। चतुर्थसामान्यनियमात्। परवर्तिसूत्रेण अधिकसंख्यकभाष्येषु पृथगधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिरपि युज्यते। माध्वभाष्ये अत परं "युक्तेश्च" इति एकम् अतिरिक्त सूत्र पठितम् इति दृश्यते। तच्च तस्य द्वादशाधिकरणस्य अष्टसु सुत्रेपु-प्रथमं सूत्रम्। तेन तत्र अधिकरणस्य रचनाया तस्य एक अपरः दोष सजात।

## त्रयोदशम् उत्क्रान्तिगत्यधिकरणम्।

अत्र "उत्क्रान्तिगत्यागतीनाम्" २।३।१९ ( २३५ ) इति सूत्रस्य "उत्क्रान्तिगति-" इति शब्दात् अस्य "उत्क्रान्तिगत्यधिकरण" नाम। अत्र शंकर-भास्कर-भाष्य-द्वयमध्ये चतुर्दश सूत्राणि गृहीतानि। रामानुजभाष्ये तदीय-चतुर्थाधिकरणस्य चतुर्दशाना सूत्राणा मध्ये एतदेव द्वितीय सूत्रम्। पूर्वसूत्रेण अधिकरणस्य आरब्धत्वात्, नवमदशमसूत्रद्वयस्य एकीकरणाच्च। निम्बार्कभाष्ये तु तदीय-चतुर्थाधिकरणस्य त्रयोदशाना सूत्राणा मध्ये एतद्धि प्रथम सूत्रम्। अत्रापि नवम दशमं च सूत्रद्वयम् एकीकृतम्। मध्वभाष्ये तदीय-द्वादशाधिकरणस्य अष्टाना सूत्राणा मध्ये एतदेव द्वितीय सूत्रम्। तन्मते इत पूर्वं "युक्तेश्च" इति एकम् अधिकं सूत्र पठितं, तेनैव अधिकरणस्य आरब्धत्वात्। नवम-दशम-सूत्रद्वयस्य एकीकरणात् च श्रीकण्ठभाष्ये तदीय-नवमाधिकरणस्य त्रयोदशाना सूत्राणा मध्ये एतद्धि प्रथमं सूत्रम्। अत्रापि नवमं दशम च सूत्रद्वयम् एकीकृतम्। श्रीपतिभाष्ये च तदीय-द्वादशाधिकरणस्य त्रयोदशाना सूत्राणा मध्ये एतच्च प्रथम सूत्रम्। अत्रापि नवम दशम च सूत्रद्वयम् एकीकृतम्। वल्लभभाष्ये तदीय-द्वादशाधिकरणस्य दशाना सूत्राणा मध्ये एतच्च प्रथम सूत्रम्। अत्रापि नवमं दशमं च सूत्रद्वयम् एकीकृतम्। एवं च अधिकरणारम्भविषये रामानुज-मध्व-भिन्नेषु सर्वेषु भाष्येषु ऐकमत्य वर्त्तते। तेन रामानुज-मध्व-भाष्यद्वयमेव अत्र अधिकरणस्य अरचनाया दोषभाग् भवति। नूनम् अत्र प्रथमान्तपदाभावात अधिकरण न आरम्भणीयम्। तत् कथ षट् भाष्यकारा. अधिकरणरचनापक्षपातिन. जाताः? अत्र उच्यते सूत्रस्य सम्बन्धबोधकषष्ठ्यन्तत्वात् "स्वात्मना चोत्तरयो" इति परसूत्रस्यापि

तथात्वात् ततश्च "नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्" इति तत्परवर्तिसूत्रे अणुपदवाच्यजीवेन सह सम्बन्धकरणात् "उत्क्रान्तिगत्यागतीनां श्रवणात् अणु जीव" इत्येव समग्रसूत्र भवति। एव "अणु जीव" इति प्रथमान्तपदद्वयस्य ऊहनीयत्वात् अत्र अधिकरणारम्भ सगच्छते। रामानुजभाष्ये एतत्सूत्रस्य पूर्वाधिकरणाङ्गत्वात् "विधेयभेदात् अधिकरणभेद" इति नियमस्य लंघन कृत स्यात्, तन्न युक्तम्, चतुर्थविरोधनियमात्। ततश्च शांकरमते प्रथमम् आरभ्य दश सूत्राणि पूर्वपक्षत्वेन योजितानि। रामानुजमते तु तानि सर्वाण्येव सिद्धान्तसूत्राणि। परन्तु तथा सति "तद्गुणसारत्वात् तु" इत्याद्येकादशसूत्रस्थतुशब्दस्य पूर्वपक्षव्यावृत्त्यर्थत्व व्याहन्येत। एतस्य मौक्तिकत्व सुधीभि विभाव्यम। वस्तुतस्तु आत्मन अणुत्वविभुत्ववादद्वयं प्रति आमहानामह्यम्या मेव अयं मतभेद सजात, न तु सूत्राक्षरानुसारत। सूत्राक्षरानुकूल्य तु शांकरभाष्यस्यैव इति प्रतिभाति। तानि च चतुर्दश सूत्राणि—

१। "उत्क्रान्तिगत्यागतीनाम्" २।३।१९ (२३५)
२। "स्वात्मना चोत्तरयो" २।३।२० (२३६)
३। "नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्" २।३।२१ (२३७)
४। "स्वशब्दोन्मानाभ्यां च" २।३।२२ (२३८)
५। "अविरोधश्चन्दनवत्" २।३।२३ (२३९)
६। "अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि" २।३।२४ (२४०)
७। "गुणाद् वा लोकवत्" २।३।२५ (२४१)
८। "व्यतिरेको गन्धवत्" २।३।२६ (२४२)
९। "तथा च दर्शयति" २।३।२७ (२४३)
१०। "पृथगुपदेशात्" २।३।२८ (२४४)
११। "तद्गुणसारत्वात् तु तद्व्यपदेश प्राज्ञवत्" २।३।२९ (२४५)
१२। "यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" २।३।३० (२४६)
१३। "पुंस्त्वादिवत् तस्य सतोऽभिव्यक्तियोगात्" २।३।३१ (२४७)
१४। "नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो वान्यथा" २।३।३२ (२४८)

अत्र (१) "उत्क्रान्तिगत्यागतीनाम्" २।३।१९ (२३५) इति सूत्रे प्रथमान्तपदाभावेऽपि अस्य षष्ठ्यन्तत्वात् तृतीयसूत्रस्य "अणु" इति प्रथमान्तपदेन सह सम्बन्धात् प्रथमान्तपदस्य ऊहनीयत्वात् अधिकरणारम्भ प्रथमसामान्यनियमेन सगच्छते। रामानुजभाष्यद्वये तथात्वस्य अकरणात् तयोरेव दोष।

(२) "स्वात्मना चोत्तरयो" २।३।२० (२३६) इत्यत्र प्रथमान्तपदाभावात् तथा पूर्वसूत्रानुरूप परसूत्रस्य "अणु" इति पदेन सह सम्बन्धात् चकाराच्च अस्य पूर्वसूत्रारब्धाधिकरणस्य अंगसूत्रत्वमेव संगतम्, साकांक्षत्वात्, चतुर्थसामान्यनियमात्, षष्ठविरोधनियमाच्च।

(३) 'नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्" २।३।२१ (२३७) इत्यत्र "अणु" इति प्रथमान्तपदसत्त्वात् ततश्च "अतच्छ्रुते" इति पञ्चम्यन्तपदस्य विद्यमानत्वात् अस्य अधिकरणारम्भकत्वम् "इति चेन्न" इति अधिकरणारम्भकबाधकपदस्य सत्त्वेऽपि संगच्छते। चतुर्दश

विशेषनियमात् । परन्तु तन्नात्र सम्भवेत् , "अणु" इति पदस्य पूर्ववर्त्तिनं "उत्क्रान्तिगत्यागतीनाम्" इति षष्ठ्यन्तसूत्रस्य सम्बन्धिघटकत्वात् आकाङ्क्षापरिपूरकत्वाद् वा , "उत्क्रान्तिगत्यागतीनाम्" इति सूत्रस्य अधिकरणारम्भकत्वसम्पादनाय प्रवृत्तस्य नोचितं स्वस्य पृथगधिकरणारम्भकत्वम् । अतो न चतुर्दशविशेषनियमस्य व्याघात. । ततश्च न एकस्मिन्नपि भाष्ये अस्य अधिकरणारम्भकत्व दृश्यते । अत' नासंगतम् एतादृशकल्पनम् । चतुर्थसामान्यनियम' द्रष्टव्य , तथा पञ्चमचतुर्दशविशेषनियमौ द्रष्टव्यौ ।

( ४ ) "स्वशब्दोन्मानाभ्या च" २।३।२२ (२३७) इत्यत्र प्रथमान्तपदाभावात् अध्याहृतेऽपि चकारयोगात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात् तथा षष्ठविशेषनियमात् ।

( ५ ) "अविरोधश्चन्दनवत्" २।३।२३ ( २३९ ) इत्यत्र प्रथमान्तपदसत्त्वेऽपि नास्य अधिकरणारम्भकत्वम्, चन्दनदृष्टान्तेन अविरोधसाधनात् । कस्य केन सह अविरोध इति आकाङ्क्षाया सूत्रस्य साकाङ्क्षत्व सिद्ध्यति । चतुर्थसामान्यनियमात् तत' सप्तमविशेषनियमात् च नास्य अधिकरणारम्भकत्वं युक्तम् ।

( ६ ) "अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि" २।३।२४ ( २४० ) इत्यत्र प्रथमान्तपदाभावात् ततश्च "इति चेन्न" इति पदस्य सत्वात् नास्यापि अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात् , पञ्चमविशेषनियमाच्च ।

( ७ ) "गुणाद् वा लोकवत्" २।३।२५ ( २४१ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात् । तादृशपदस्य अध्याहारेऽपि "वा" शब्देन विकल्पविधानात् अत्र साकाङ्क्षत्वं कल्पयितुं शक्यम् । षष्ठविशेषनियमात ।

( ८ ) "व्यतिरेको गन्धवत्" २।३।२६ ( २४२ ) इत्यत्र "व्यतिरेक" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्व युक्तम् । माध्वभाष्येऽपि तथैव कृतमिति दृश्यते । परन्तु सप्तसु भाष्येषु नैतत् कृतम् । अत "व्यतिरेक"-शब्देन कस्य व्यतिरेक इत्येव साकाङ्क्षत्वं कल्पयित्वा अधिकरणारम्भस्य अनौचित्य कल्पनीयम् , सप्तमविशेषनियमात् । अत माध्वभाष्ये अधिकरणारम्भात् दोष । तन्मते अत्र त्रयोदशाधिकरणस्य आरम्भ । रा-नि-म-श्री-श्रीप-भाष्येषु एतत्सूत्रशेषत्वेन परसूत्र पठ्यते । तन्न युक्तम् । चकारात् पृथग्हेतुत्वस्य सूचनात् , चतुर्थसामान्यनियमाच्च ।

( ९ ) "तथा च दर्शयति" २।३।२७ ( २४३ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । अध्याहारेऽपि चकार एव तस्य बाधकः । चतुर्थसामान्यनियमात्, षष्ठविशेषनियमात् च । रा-नि-म-श्री-श्रीप-भाष्येषु एतत्सूत्र पूर्वसूत्रस्य शेषतया पठितम् । तत्रापि नि-श्री-वल-भाष्येषु चकारस्थाने हिकारस्य पाठ दृश्यते । माध्वभाष्ये पूर्वसूत्रस्य अंगतया अनेन अधिकरणम् आरब्धम् । एतस्य पूर्वसूत्रांगत्व न युक्तम् इति तूक्तमेव । चतुर्थसामान्यनियमात् ।

( १० ) "पृथगुपदेशात्" २।३।२८ ( २४८ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात्। तेन भाष्यभाष्ये अत्र अधिकरणारम्भस्तु तस्य लोपाय कल्प्यते।

( ११ ) "तद्गुणसारत्वात् तु तद्व्यपदेश प्राज्ञवत्" २।३।२९ ( १४५ ) इत्यत्र "तद्व्यपदेश" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्व युक्तमपि "तु" शब्देन निषेधार्थकेन तस्य व्याघात। अतोऽत्र अधिकरणारम्भ समुचित। तथापि अत्र पूर्वपक्षस्य उक्तत्वात स न कर्तव्य। अनुक्ते पूर्वपक्षे यथा "तत् तु समन्वयात्" इत्यत्र "तु" शब्दस्य निषेधार्थकत्वे अधिकरणारम्भस्य असाधकत्वम्। अन्यत्र यथा उक्तपूर्वपक्षे, अनिषेधार्थकत्वे वा तु शब्दस्य अधिकरणारम्भे साधकत्वम् इत्येव बोद्धव्यम्। तथाच अत्र नियम—"उक्तपूर्वपक्षे प्रथमान्तपदेन सह निषेधार्थक-तु शब्दस्य न अधिकरणारम्भकत्वम्" इति अष्टादशविशेषनियम, तस्मा भाष्ये अधिकरणस्य आरम्भात् तस्य अत्र दोष कल्पनीय।

( १२ ) "यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" २।३।३० ( २४६ ) इत्यत्र "दोष" इति प्रथमान्तपदस्य सत्त्वात् अस्य अधिकरणारम्भकत्व युक्त। पर तु चकारस्य योगात तन्निषेध। चतुर्थसामान्यनियमात षष्ठविशेषनियमाच्च। भाष्यभाष्ये अत्र अधिकरणस्य रचनायां दोष वक्तव्य।

( १३ ) "पुंस्त्वादिवत् तस्य सतोऽभिव्यक्तियोगात्" २।३।३१ ( २४७ ) इत्यत्र प्रथमान्तपदाभावात नास्य अधिकरणारम्भकत्व युक्तम्। चतुर्थसामान्यनियमात। भाष्यभाष्ये अत्र पृथगधिकरणकरणात् दोषो मान्य।

( १४ ) "नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा" २।३।३२ ( २४८ ) इत्यत्र "नित्योपलब्ध्यनुपलब्धिप्रसंग" तथा "अन्यतरनियम" इति प्रथमान्तपदद्वयात् अत्र अधिकरणारम्भ संगच्छते, चतुर्थसामान्यनियमात्। किन्तु "वा"-शब्देन विकल्पविधानात् तथा अन्यथा "शब्देनापि साकाङ्क्षत्वस्य कल्पनीयत्वात्। षष्ठविशेषनियमात् स न कर्तव्य इति कल्प्यते। परसूत्रे सर्वसम्मत्या पृथगधिकरणस्य आरम्भात अत्रैव अधिकरणसमाप्तिकल्पनं संगतमेव। सर्व च अस्मिन् अधिकरणे—

| | | | | |
|---|---|---|---|---|
| रामानुजभाष्ये | अधिकरणस्य अरचनायां | पञ्चो दोष | रचनायां | दोषाभाव |
| भाष्यभाष्ये | " | " | " | चत्वारो दोषा |
| वल्लभभाष्ये | " | , | " | दोषाभाव |

अन्येषां सर्वत्र दोषाभाव इति विज्ञेयम्।

चतुर्दश कर्त्रधिकरणम्।

अत्र "कर्ता शास्त्रार्थवत्त्वात्" २।३।३३ ( २४९ ) इति सूत्रस्य "कर्ता" इति पदात् अस्य "कर्त्रधिकरण" नाम। तत्र शंकर-भास्कर-रामानुज-श्रीकण्ठ-श्रीपति-भाष्येषु सप्त-सूत्राणि, निम्बार्क

वल्लभ-भाष्यद्वयमध्ये अष्ट सूत्राणि, माध्वभाष्ये तु दश सूत्राणि गृहीतानि। तानि च सप्त सूत्राणि यथा

१। "कर्त्ता शास्त्रार्थवत्त्वात्" २।३।३३ (२४९)
२। "विहारोपदेशात्" २।३।३४ ( २५० )
३। "उपादानात्" २।३।३५ ( २५१ )
४। "व्यपदेशाच्च क्रियाया न चेन्निर्देशविपर्य्यय २।३।३६ ( २५२ )
५। "उपलब्धिवदनियम" २।३।३७ (२५३)
६। "शक्तिविपर्य्ययात्" २।३।३८ ( २५४)
७। "समाध्यभावाच्च" २।३।३९ (२५५)

अत्र ( १ ) "कर्त्ता शास्त्रार्थवत्त्वात्" २।३।३३ (२४९) इति सूत्रे "कर्त्ता" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्व सगतम्, चतुर्थसामान्यनियमात्। सर्वसम्मतं च एतत्।

( २ ) "विहारोपदेशात्" २।३।३४ ( २५० ) इत्यत्र प्रथमान्तपदाभावात् नात्र अधिकरणारम्भ संगच्छते, कृतमपि तथैव सर्वेषु भाष्येषु। चतुर्थसामान्यनियमात्। रा-श्री-श्रीप-भाष्येषु एतत्सूत्रस्य परसूत्राङ्गत्व साधितम्। तन्न युक्तम्, हेतोरेव उक्तत्वात्, चतुर्थविशेषनियमात्।

( ३ ) "उपादानात्" २।३।३५ ( २५१ ) इत्यत्रापि तथैव, चतुर्थसामान्यनियमात्। रा-श्री-श्रीप-भाष्येषु एतत्सूत्रम् पूर्वसूत्रेण सह विपर्य्यस्तक्रमेण पठितम् "उपादानाद् विहारोपदेशात् इति। नापि अत्र किमपि प्राचीनपाठादिक प्रदर्शितम्। ततश्च एतत्सूत्रद्वयस्य एकीकरण न युक्तम्। पृथग्हेतो निर्देशात्। चकाराभावेऽपि न क्षति, परसूत्रात् तस्य अत्र ऊहनीयत्वं कल्पयितुं शक्यते। हेतुप्रदर्शनप्रवाहपतितत्वात्। अत एतयो एकसूत्रत्व न युक्तम्। चतुर्थविशेषनियमात।

( ४ ) "व्यपदेशाच्च क्रियाया न चेन्निर्देशविपर्य्यय" २।३।३६ ( २५२ ) इत्यत्र "निर्देशविपर्य्यय" इति प्रथमान्तपदस्य सत्त्वात् अनेन अधिकरणारम्भ सगत, तथापि न एकस्मिन्नपि भाष्ये तथा कृतम। अत चकारयोगात् "चेत्" शब्दसत्त्वाच्च नास्य अधिकरणारम्भकत्वम् इत्येव कल्पनीयम्। चतुर्थसामान्यनियमात्, पञ्चमषष्ठनियमाभ्यां च।

( ५ ) "उपलब्धिवदनियम" २।३।३७ ( २५३ ) इत्यत्र "अनियम." इति प्रथमान्तपदसत्त्वात् अधिकरणारम्भ सगच्छते। परन्तु कुत्रापि भाष्ये तन्न दृश्यते, अत "अनियम." इति पदेन साकाङ्क्षत्वं कल्पयित्वा तद्वारणं कर्त्तव्यम्। सप्तमविशेषनियमात्।

( ६ ) "शक्तिविपर्य्ययात्" २।३।३८ ( २५४ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्व युक्तम्, चतुर्थसामान्यनियमात्। तथैव कृतमिति सर्वेषु भाष्येषु दृश्यते।

( ७ ) "समाध्यभावाच्च" २।३।३९ ( २५५ ) इत्यत्र प्रथमान्तपदाभावाद् नात्र अधिकरणम् आरब्धम् सर्वेषु भाष्येषु। चकारात् अध्याहारेऽपि तन्निषेध.। चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च। परसूत्रेण शाकर-भास्कर-भाष्यद्वये-अधिकरणारम्भात् अत्र अधिकरणसमाप्ति

संयो मतन मगच्छते । ग नि श्री-श्रीप-च-भाष्येषु परवर्तिसूत्रमपि एतदधिकरणान्तर्गतं कृतम् । मा वभाष्ये तु परवर्तिसूत्रद्वयमपि तथा कृतम । अत्र अधिकरणरचनाऽरचनाजन्य न कस्यापि गौरसंस्पर्श संजात ।

## पञ्चदश तक्षाधिकरणम् ।

अत्र "यथा च तक्षोभयथा" २।३।४० (२५६) इति सूत्रस्य "तक्षा' इति पदस्य सत्त्वान अस्य 'तक्षाधिकरणं' नाम । तत्र शङ्कर-भास्कर-भाष्यद्वयमध्ये एतेन एकन सूत्रेण एतदधिकरणं रचितमिति दृश्यते । रामानुजभाष्ये तु एतत् हि तृतीयपञ्चमाधिकरणस्य सप्तसु सूत्रेषु अन्तिम सूत्रम । निम्बार्कभाष्ये तृतीयपञ्चमाधिकरणस्य अष्टसु सूत्रेषु एतत च अष्टम सूत्रम । माध्वभाष्य तृतीयमतत ॥धिकरणमध्ये दशसु सूत्रेषु एतद् हि अष्टमं सूत्रम । श्रीकण्ठ भाष्ये तृतीयपञ्चमाधिकरणस्य सप्तसु सूत्रेषु पुनश्च अन्तिमं सूत्रम, श्रीपतिभाष्ये तृतीय त्रयोदशाधिकरणस्य सप्तसु सूत्रेषु एतत् अन्तिम सूत्रम् । तथैव वल्लभभाष्ये तृतीय चतुर्दशाधिकरणस्य अष्टसु सूत्रेषु एतत अन्तिमं सूत्रम । तत्र रा-श्री-श्रीप-भाष्येषु 'विहारो पदेशात्' तथा "उपादानात इति सूत्रद्वयस्य एकीकरणात् एतदधिकरणस्य सप्तसंख्यक-सूत्रात्मकत्वम । निम्बार्क-वल्लभ-भाष्यद्वयमध्ये तथा अकरणात् तदीयाधिकरणस्य अष्टसंख्यक सूत्रात्मकत्वम इति विज्ञेय । एवं च अस्मिन सूत्रे शङ्कर-भास्कर भिन्ना षड् भाष्यकारा एकमता सन्ति । तत्र शङ्कर भास्कर-भाष्ययोरेव दुष्टत्व कल्पनीयम ।

अत्र "तक्षा इति प्रथमान्तपदस्य सत्त्वात चतुर्मसामान्यनियमात् यद्यपि अधिकरणारम्भ समुचित एव तथापि चकारयोगात तथा 'यथा'-पदेन प्रकृतस्य दृष्टान्तत्वात् नात्र अधिकरणार म संगच्छते, पञ्चमिनोपनियमात । परन्तु तथापि अस्ति अत्र कश्चिद् विशेष । तथाहि पूर्वाधिकरणे बुद्धे कर्तृत्वं निरस्य जीवात्मन कर्तृत्वं व्यवस्था पितम इत्यत्र सन्दर्भमेव पञ्चमत्यम् । ततपरमेव यदि "यथा च तक्षोभयथा" इति उक्त भवेत, तदा किं चिन्तनीयम । आत्मन तादृशकर्तृत्वसमर्पणाद् अनन्तरं तद्विषयिनी या एव स्वाभाविकी आकाङ्क्षा जिज्ञासा वा भवति, सा यदि "यथा च तक्षा उभयथा' इति वाक्येन अभिव्यक्ता भवेत; तदा तस्य कर्तृत्वस्य प्रकारतामात्रम् अत्र उच्यते—इत्येव कल्पनीयं भवति । तेन तस्य कर्तृत्व तक्षण उभयविधकर्तृत्ववत् कर्तृत्वम् इत्येव अत्र बोद्धव्यम् । —अत अत्र विधेयविषयिणी अतिरिक्ता काचित कथा प्रस्तुता । तेन च अतिरिक्तविषयत्वेन विशेष (मेवात्र अस्य पृथगधिकरणत्व युक्तमेव । वस्तुतस्तु "यथा च" पदेन स अतिरिक्त विषय एव अत्र प्रस्तूयते इत्येव स्पष्टम् । चतुर्मसामान्यविरोपनियमाभ्यां तथा द्वादशविरोपनियमाच्च । अत शङ्करभास्करभाष्यद्वयमेव अत्र सङ्गत भवति । अपरे सर्वे अत्र अधिकरणस्य अरचनायां दोषग्रस्ता (इत्येव समीचीनमिति प्रतिभाति । यद्यपि निर्णयोऽयम् अधिकमतविरोधी, तथापि युक्त्युपेतत्वात्

तस्य निर्दोषत्वमेव वक्तव्यम् । "युक्तियुक्तमुपादेयं वचनं बालकादपि" इति प्रसिद्धेः । परसूत्रे अधिकसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिरिति । एवं च अत्र रा-नि-म-श्री श्रीप-व-भाष्येषु अधिकरणस्य अरचनाया दोषः ।

## षोड़शं परायत्ताधिकरणम् ।

अत्र "परात् तु तच्छ्रुते" २।३।४१ ( २५७ ) सूत्रस्य "परात्" इति पदात् अस्य "परायत्ताधिकरणं" नाम । तत्र निम्बार्क-मध्वभाष्य-भिन्नेषु भाष्येषु सूत्रद्वयं गृहीतम् । निम्बार्कभाष्ये अनेन एकेनैव सूत्रेण एतदधिकरणं रचितम् । माध्वभाष्ये तु तदीयसप्तदशाधिकरणस्य दशसु सूत्रेषु एतत् नवमं सूत्रम् । तच्च सूत्रद्वयं

( १ ) "परात् तु तच्छ्रुते." २।३।४१ ( २५७ )

( २ ) "कृत प्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः" २।३।४२ ( २५८ )

अत्र परात् तु "तच्छ्रुते" २।३।४१ ( ४५९ ) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वं, तथापि तत् तु समन्वयात इति सूत्रवत् तु शब्दस्य अनुक्तपूर्वपक्षव्यावृत्त्यर्थकत्वात प्रकृतं "जीवकर्तृत्वादि" इति एकं पदम् अनुसञ्जनीयम् प्रतियोगिज्ञानं विना निषेधस्य अनुपपत्तेः । तेन माध्वभाष्ये अत्र अधिकरणस्य अनारम्भात् तस्यैव दोषः कल्प्यते । पञ्चमसामान्य नियमात् तथाअष्टादशविशेषनियमात् ।

( २ ) "कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य." २।३।४२ ( २५८ ) इत्यत्र "कृतप्रयत्नापेक्ष" इति प्रथमान्तपदसत्वेऽपि पूर्वपक्षव्यावर्त्तक-तु-शब्दयोगादपि उक्तपूर्वपक्षत्वात् अधिकरणारम्भ प्रतिषिध्यते । चतुर्थसामान्यनियमात अष्टादशविशेषनियमाच्च । नवमविशेषनियमोऽपि द्रष्टव्य । निम्बार्कभाष्ये अत्र अधिकरणारम्भात् तस्यैव दोष । परसूत्रे सर्वत्र अधिकरणारम्भात अत्रैव अधिकरणसमाप्ति सङ्गतैव । एव च अस्मिन् अधिकरणे माध्वभाष्यस्य अधिकरणस्य अरचनाया एक दोष, निम्बार्कभाष्ये अधिकरणस्य रचनायाम् एक दोष ।

## सप्तदशम् अंशाधिकरणम् ।

(७) "असन्ततेश्चाव्यतिकर" २।३।४९ (२६५)

(८) "आभास एव च" २।३।५० (२६६)

(९) "अदृष्टानियमात्" २।३।५१ (२६७)

(१०) "अभिसन्ध्यादिष्वपि चैवम्" २।३।५२ (२६७)

(११) "प्रदेशादिति चेन्नान्तर्भावात्" २।३।५३ (२६९)

अत्र (१) "अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वम् अधीयत एके" २।३।४३ (२५९) इति सूत्रस्य 'अंश' इति प्रथमान्तपदसत्त्वात् अनेन अधिकरणारम्भ संगत एव। चतुर्थसामान्यनियमात्। सर्वेषां च अत्र ऐकमत्यम्। "अन्यथा चापि" इत्यादिपदे साकांक्षत्वस्य अविधानात् न बाधितम्। त्रयोदशविशेषनियमात्।

(२) 'मन्त्रवर्णाच्च' २।३।४४ (२६०) इत्यत्र प्रथमान्तपदाभावात् तथैव चकार सत्त्वात् नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात् पष्ठविशेषनियमाच्च।

(३) 'अपि च स्मर्यते' २।३।४५ (२६१) इत्यत्र तथैव। चतुर्थसामान्यनियमात् पष्ठविशेषनियमाच्च।

(४) प्रकाशादिवन्नैवं परः" २।३।४६ (२६२) इत्यत्र 'परः' इति प्रथमान्तपद-सत्त्वात् यद्यपि अधिकरणारम्भ संगत, चतुर्थसामान्यनियमात् तथापि 'एव' इति शब्देन एतस्य साकांक्षत्वसाधनात् नात्र अधिकरणारम्भ संगच्छते। सप्तमविशेषनियमात्।

(५) "स्मरन्ति च" २।३।४७ (२६३) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। अध्याहारेऽपि चकारस्य बाधकत्वम्। चतुर्थसामान्यनियमात् पष्ठविशेष-नियमाच्च।

(६) "अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्" २।३।४८ (२६४) इत्यत्र 'अनुज्ञापरिहारौ' इति प्रथमान्तपदसत्त्वेऽपि सर्वेषां मत्या एव नास्य अधिकरणारम्भकत्वम्। 'वत्'-शब्द-योगात् अर्थत प्रसंगतश्च साकांक्षत्वसिद्धेः। चतुर्थसामान्यनियमात्।

(७) "असन्ततेश्चाव्यतिकर" २।३।४९ (२६५) इत्यत्र "अव्यतिकर" इति प्रथमान्तपदसत्त्वेऽपि, चतुर्थसामान्यनियमात् चकारस्य योगात् नास्य अधिकरणारम्भकत्वम्। पष्ठविशेषनियमात्। "अव्यतिकर" शब्दस्य अर्थत तथा प्रसंगतश्च साकांक्षत्वम्। अत न अधिकरणारम्भ।

(८) 'आभास एव च" २।३।५० (२६६) इत्यत्र 'आभास" इति प्रथमान्तपदसत्त्वे अपि चकारयोगात् नास्य अधिकरणारम्भकत्वत्। चतुर्थसामान्यनियमात् तथा पष्ठविशेषनियमात्।

(९) "अदृष्टानियमात्" २।३।५१ (२६७) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् चतुर्थसामान्यनियमात्। माध्वभाष्ये अधिकरणारम्भात् तथैव दोष।

(१०) 'अभिसन्ध्यादिष्वपि चैवम्" २।३।५२ (२६८) इत्यत्र "एवम्" इति प्रथमान्त-

पदसत्त्वेऽपि अस्य साकाक्षार्थकत्वात् नात्र अधिकरणारम्भ करणीय । सप्तमविशेषनियमात । चकारयोगात् अपि नास्य अधिकरणारम्भकत्वम । चतुर्थसामान्यनियमात् , पञ्चविशेषनियमाच्च ।

( ११ ) "प्रकाशादिति चेन्नान्तर्भावात्" २।३।५२ ( २६९ ) इत्यत्र प्रथमान्तपदाभावात् तथैव "इति चेत्" इति पदसत्त्वात् नास्य अधिकरणारम्भकत्वम । चतुर्थसामान्यनियमात पञ्चमविशेषनियमाच्च । सर्वसम्मत्या पादशेषाच्च अत्रैव अधिकरणसमाप्तिश्च सगतैव । एवं च अत्र केवल माध्वभाष्यस्य अधिकरणरचनायां दोष एक एव ।

## सप्तमपादोपसहार.

इदानीं द्रष्टव्यम् अनेन निवन्धेन अस्मिन् पादे अधिकरणरचनाया

( १ ) कति कीदृशाश्च नियमा अत्र सङ्कलिता.

( २ ) कति च दोषा. कस्य भाष्यस्य कथ संवृत्ता

( ३ ) काश्च श्रुतयः कैश्च सूत्रैः उपजीव्यत्वेन गृहीता

( ४ ) उपजीव्यश्रुतिवलेन कीदृशी च पादसगति भवितुम उचिता इति ।

एते च चत्वारो विषया. अधस्तात् क्रमेण प्रदर्शनीया । तत्र प्रथम तावत्

### ( १ ) कति कीदृशाश्च नियमाः अत्र सकलिताः ।

अत्र नियमद्वयमेव अतिरिक्त सङ्कलितम्, यथा

अष्टादश नियम "प्रथमान्तपदात् पर यदि पञ्चम्यन्तपदसत्त्व तत परं यदि "इति-चेन्न" इति पद, तदा अधिकरणारम्भ समुचित. एव"। एतदर्थम् "अन्तरा विज्ञानमनसी" इत्यादि २।३।१५ सूत्रं द्रष्टव्यम् ।

ऊनविंश. नियम "उक्तपूर्वपक्षे प्रथमान्तपदेन सह निषेधार्थक-तु-शब्दस्य न अधिकरणस्य आरम्भकत्वम्" । एतदर्थं "तद्गुणसारत्वात्" इत्यादि २।३।२९. सूत्रं द्रष्टव्यम् इति ।

इदानीं द्रष्टव्यम्

### ( २ ) कति च दोषाः कस्य भाष्यस्य कथं संवृत्ताः

तत्र २।३।२ अधिकरणे रा-नि-भाष्ये "एतेन मातरिश्वा व्याख्याता" इति २।३।८ सूत्रे अधिकरणस्य अरचनाया दोष ।

२।३।३ अधिकरणे रा-नि-श्रीप-भाष्येषु "असम्भवस्तु सतोऽनुपपत्ते." इति. २।४।९. सूत्रे-अधिकरणस्य अरचनायां दोष. ।

२।३।४ अधिकरणे निम्बार्क-भाष्ये "तेजोऽतस्तथा ह्याह" इति २।३।१० सूत्रे अधिकरणस्य अरचनाया दोष. ।

२।३।५ अधिकरणे रा-नि-श्री-भाष्येषु "आप" इति २।३।११ सूत्रे अधिकरणस्य अरचनाया दोष ।

२।३।६ अधिकरणे रा-नि-श्री-भाष्येषु "पृथिव्यधिकाररूपशब्दान्तरेभ्य" इति २।३।१२ सूत्रे अधिकरणस्य अरचनायां दोष ।

२।३।६ अधिकरणे निम्बार्कभाष्ये तदीयं "पृथिवी" इति सत्रे अधिकरणस्य अरचनाया दोष ।

२।३।७ अधिकरणे रा नि-श्री-भाष्येषु "अभिध्यानादेव तु तल्लिङ्गात् स" इति २।३।१३ सूत्रे अधिकरणस्य अरचनायां दोष ।

२।३।८ अधिकरणे रा नि-भाष्ययो "विपर्ययेण तु क्रमोऽत उपपद्यते च" इति २।३।१४ सूत्र अधिकरणस्य अरचनायां दोष ।

२।३।० अधिकरणे रा नि-श्री भाष्येषु "अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गात् स" इति २।३।१५ सूत्रे अधिकरणस्य अरचनायां दोष ।

२।३।१० अधिकरण रा-म-श्र भाष्येषु "चराचरव्यपाश्रयस्तु स्यात तद्व्यपदेशो भाक्त स्तद्भावभावित्वात्" इति २।३।१६ सूत्रे अधिकरणस्य अरचनायां दोष ।

२।३।११ अधिकरणे निम्बार्कभाष्ये नात्मा श्रुतेर्नित्यत्वाच्च ताभ्य" इति २।३।१७ सूत्र अधिकरणस्य अरचनायां दोष ।

२।३।१२ मध्यीये अधिकरणे "युक्तश्च इति २।३।१० सूत्रे अधिकरणस्य रचनायां दोष ।

२।३।१३ अधिकरण रा-म-भाष्ययो उत्क्रान्तिगत्यागतीनाम" इति २।३।१० सूत्रे अधिकरणस्य अरचनायां दोष ।

तत्रैव माध्वभाष्ये "व्यतिरेको गन्धवत्" इति २।३।२६ सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव माध्वभाष्ये "पृथगुपदेशात्" इति २।३।२८ सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव वल्लभभाष्ये 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" इति २।३।२० सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव माध्वभाष्ये "यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" इति २।३।३० सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव माध्वभाष्ये "पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्" इति २।३।३१ सूत्रे अधिकरणस्य रचनायां दोष ।

२।३।१५ अधिकरणे रा-नि-म-श्री-श्रीप-व-भाष्येषु "यथा च तक्षोभयथा" इति २।३।४० सूत्र अधिकरणस्य अरचनायां दोष ।

२।३।१६ अधिकरणे माध्वभाष्ये "परात्तु तच्छ्रुते" इति २।३।४१ सूत्रे अधिकरणस्य अरचनायां दोष ।

तत्रैव निम्बार्कभाष्ये "कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य" इति २।३।४२ सूत्रे अधिकरणस्य रचनायां दोष ।

२।३।१७ अधिकरणे माध्वभाष्ये "अनिष्ठयियमात्" इति २।३।५१ सूत्रे अधिकरणस्य रचनायां दोषः ।

एवं च पादेऽस्मिन भाष्यांणां दोषसमाहारे कृते दृश्यते

| भाष्यनाम | अधिकरणस्य अरचनाया | अधिकरणस्य रचनायां |
|---|---|---|
| माध्वभाष्ये | ६ दोषाः | ४ दोषाः |
| वल्लभभाष्ये | १ दोषः | २ दोषौ |
| निम्बार्कभाष्ये | २ दोषौ | १० दोषाः |
| रामानुजभाष्ये | ० | १० " |
| श्रीपतिभाष्ये | ० | २ दोषौ |
| श्रीकण्ठभाष्ये | ० | ५ दोषाः |

इति वक्तुं शक्यते । तथा च पादेऽस्मिन् शाङ्कर-भास्कर-भाष्ययोः दोषाभावः ।

इदानीं द्रष्टव्यम्

**( ३ ) काश्च श्रुतयः कैश्च सूत्रैः उपजीव्यत्वेन गृहीताः ।**

प्रथमाधिकरणे

न "वियदश्रुतेः" २।३।१ सूत्रे "तत् तेजोऽसृजत" ( छाः ६।२।३ ) "आत्मन् आकाश सम्भूतः" ( तैः २।१ )

"शब्दाच्च" २।३।४ सूत्रे 'वायुश्चान्तरिक्षं च एतदमृतम्" ( बृ. २।३।३ )

"स्याच्चैकस्य ब्रह्मशब्दवत्" २।३।५ सूत्रे "अन्नं ब्रह्म" ( तैः ३।२।१ ) "आनन्दो ब्रह्म" ( तैः ३।६।१ )

"प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः"२।३।६ सूत्रे "सदेव सोम्येदमग्र आसीत्" (छाः६।२।१) "ऐतदात्म्यमिदं सर्वम्" ( छाः ६।८।७ ) "तत् तेजोऽसृजत" ( छाः ६।२।३ )

द्वितीयाधिकरणे

"एतेन मातरिश्वा व्याख्यातः" २।३।८ सूत्रे "आकाशाद् वायुः ( तैः २।१ ), सैषानस्तमिता देवता यद् वायुः ( बृः १।५।२२ )

तृतीयाधिकरणे

"असम्भवस्तु सतोऽनुपपत्तेः" २।३।९ इति सूत्रे "न चास्य कश्चिज्जनिता न चाधिपः" ( श्वे० ६।९ ) "त्वं जातो भवसि विश्वतोमुखः" ( श्वेः ४।३ )

चतुर्थाधिकरणे

"तेजोऽतस्तथा ह्याह" २।३।१० इति सूत्रे "वायोरग्निः ( तै. २।१ ) "तत् तेजोऽसृजत" ( छाः ६।२।३ ) ।

पञ्चमाधिकरणे—

"आप" २।३।११ इति सूत्रे "अग्नेराप" (तै २।१) "तदपोऽसृजत" (छा ६।२।३)

षष्ठाधिकरणे—

"पृथिव्यधिकाररूपशब्दान्तरेभ्य" २।३।१२ इति सूत्रे "अद्भ्य पृथिवी" (तै २।१) "ता अन्नमसृजन्त" (छा ६।२।४) "तत् तेजोऽसृजत" (छा ६।२।३) "यत् कृष्णं तदन्नस्य" (छा ६।४।२)।

सप्तमाधिकरणे—

"तदभिध्यानादेव तु तल्लिंगात् स" २।३।१३ इति सूत्रे "आकाशाद् वायु" (तै २।१) "य पृथिव्यां तिष्ठन्" (बृ ३।७।३)।

अष्टमाधिकरणे—

"विपर्य्ययेण तु क्रमोऽत उपपद्यते च" २।३।१४ इति सूत्रे "यत् प्रयन्ति अभिसंविशन्ति" (तै ३।१)

नवमाधिकरणे—

"अन्तरा विज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात्" २।३।१५ इति सूत्रे "एतस्माज्जायते प्राण (मु २।१।३)"

दशमाधिकरणे—

"चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" २।३।१६ इति सूत्रे "न जीवो म्रियते (छा ६।११।३)

एकादशाधिकरणे—

'नात्माश्रुतेर्नित्यत्वाच्च ताभ्य" २।३।१७ इति सूत्रे "सर्व एत आत्मनो व्युच्चरन्ति" (बृ २।१।२०) "स वा एष महानज आत्मा" (बृ ४।४।२२) "अजो नित्य" (कठ २।१८)

द्वादशाधिकरणे—

"ज्ञोऽत एव" २।३।१८ इति सूत्रे "आत्मैवास्य ज्योति" (बृ ४।३।६) 'पश्यंश्चक्षु" (बृ १।४।७)

त्रयोदशाधिकरणे—

"उत्क्रान्तिगत्यागतीनाम्" २।३।१९ इति सूत्रे 'सर्वव्यापी" (श्वे ६।११) "एष अणुरात्मा" (मु ३।१।९) "अस्माच्छरीरादुत्क्रामति" (कौ २।९) "चन्द्रमसमेव ते सर्वे गच्छन्ति" (कौ १।२) "तस्माल्लोकात् पुनरेति" (बृ ४।४।६)

'नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्" २।३।२१ इति सूत्रे "सर्वव्यापी" (श्वे ६।११)

"स्वशब्दोन्मानाभ्यां च" २।३।२२ इति सूत्रे "एषोऽणुरात्मा" ( मु ३।१।९ ) "वाला-ग्रशतभागस्य" (श्वे ५।८)

"अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद् हृदि हि" २।३।२४ इति सूत्रे "हृद्यन्तर्ज्योति" ( बृ. ४।३।७ )

"तथा च दर्शयति" २।३।२७ इति सूत्रे "आलोमभ्य आनखाग्रेभ्य." ( छा. ८।८।१ )

"पृथगुपदेशात्" २।३।२८ इति सूत्रे "प्रज्ञया शरीरं समारुह्य" ( कौ ३।६ )

"यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" २।३।३० इति सूत्रे "स समानः सन्नुभौ लोकावनुसञ्चरति" ( बृ ८।३।७ )

"नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा" २।३।३२ इति सूत्रे "काम. संकल्प" ( बृ १।५।३ )

चतुर्दशाधिकरणे

"विहारोपदेशात्" २।३।३४ इति सूत्रे "स्वे शरीरे यथाकामं परिवर्त्तते" ( बृः २।१।१८ )

"उपादानात्" २।३।३५ इति सूत्रे "प्राणानां विज्ञानेन विज्ञानमादाय" ( बृः २।१।१७ )

"व्यपदेशाच्च क्रियाया न चेन्निर्देशविपर्य्यय." २।३।३६ इति सूत्रे "विज्ञानं यज्ञं तनुते" ( तै २।५।१ )

"समाध्यभावाच्च" २।३।३९ इति सूत्रे "आत्मा वा अरे द्रष्टव्य." ( बृ. २।४।५ )

पञ्चदशाधिकरणे

"यथा च तक्षोभयथा" २।३।४० इति सूत्रे "असङ्गो ह्ययं पुरुषः" ( बृ ४।३।१५ )

षोडशाधिकरणे

"परात् तु तच्छ्रुते" २।३।४१ इति सूत्रे "एष ह्येव साधु कर्म्म कारयति" (कौ ३।८)

"कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य" २।३।४२ इति सूत्रे "ज्योतिष्टोमेन यजेत" ( तै ब्रा ? ) "ब्राह्मणो न हन्तव्य" ( श्रुति. ? )

सप्तदशाधिकरणे

"अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" २।३।४३ इति सूत्रे "तत्त्वमसि" ( छा. ६।८।७ ) "य आत्मनि तिष्ठन्" ( बृ. माध्य ) "ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवा." ( श्रुतिः ? )

"मन्त्रवर्णाच्च" २।३।४४ इति सूत्रे "पादोऽस्य विश्वा भूतानि" ( छा. ३।१२।६ )

"अपि च स्मर्य्यते" २।३।४५ इति सूत्रे "ममैवांशो जीवलोके जीवभूत. सनातन" (गी.१५।७)

"स्मरन्ति च" २।३।४७ इति सूत्रे—"तत्र य परमात्मा हि स नित्यो निर्गुण स्मृत । न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा" ( महा भा १२।३४३।१५ )

'अनुभापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्' २।३।४८ इति सूत्रे 'नान्य अतोऽस्ति द्रष्टा" (पृ ३७२३)

इदानीं द्रष्टव्यम् एतादृशसूत्रोपजीव्यश्रुतिफलेन

## (४) कीदृशी अस्य पादसङ्गतिः

अत्र दृश्यते—प्रथमादिनवानां अधिकरणानां मध्ये, "अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविरोधात्" इति पञ्चदशसूत्रपर्य्यन्तं भूतभौतिकोत्पत्तिविषयक-श्रुतिविरोध मीमांसित, दशमाधिकरणम् आरभ्य सप्त अधिकरणपर्य्यन्तं च, तेन च पादान्तपर्य्यन्त जीवोत्पत्तितत्स्वरूपादिविषयक श्रुतिविरोध परिहृत इति। तर्कपाद नाम पूर्वस्मिन् पादे अश्रौतानां साङ्ख्यादिमतवादिनां मतविरोध तर्कयुक्तिबहिर्भूततया निराकृत, अधुना श्रुतीनां मध्येऽपि परस्परविरोधाभावं प्रदर्शयितुं पादोऽयं प्रारब्ध इति च। तथापि विभिन्नभाष्यकृतां मते यथा एतत्पादप्रतिपाद्यं भवति तदपि अधस्तात् प्रदर्श्यते—

शाङ्करमते—पूर्वभागेन पञ्चमहाभूतश्रुतीनाम्, उत्तरभागेन च जीवश्रुतीनां परस्परविरोधपरिहार।

भास्करमते—शाङ्करमतानुरूपम्।

निम्बार्कमते—ब्रह्मकार्य्यवियदाद्युत्पत्तौ जीवविषये च श्रुतीनाम् अविरोधप्रदर्शनम्।

रामानुजमते—आकाशादे कार्य्यत्वनिरूपणम्।

माध्वमते—केवलश्रुत्यविरोध।

श्रीकण्ठमते—श्रुतिवाक्यानां परस्परविरोधपरिहार।

श्रीपतिमते—श्रुतीनाम् अन्योन्यविरुद्धत्वद्योतनात् जगत ब्रह्मकारणत्वशङ्कानिरसनम्।

एतेषां पर्य्यालोचने कृते नात्र विशेषण मतभेद भाष्यकृतां मध्ये दृश्यते इत्येव अवगम्यते।

इति सप्रथमपादसमालोचनम्।

इति द्वितीयाध्याये तृतीयपदोपसंहार।

# अथ द्वितीयाध्याये चतुर्थपाद।

## प्रथम प्राणोत्पत्त्यधिकरणम्

अत्र "तथा प्राणा" २।४।१ (२७०) इति सूत्रस्थ "प्राणा" इति पदात् तथा पादप्रतिपाद्यानुसारत अस्य "प्राणोत्पत्त्यधिकरण" नाम। तत्र शाङ्कर-भास्कर-निम्बार्क-भाष्येषु अस्मिन् अधिकरणे चत्वारि सूत्राणि, रामानुज-माध्व-श्रीकण्ठ-श्रीपति-भाष्येषु त्रीणि सूत्राणि, द्वितीय तृतीय-सूत्रयो एकीकरणात्। तथैव वल्लभभाष्ये पञ्च सूत्राणि गृहीतानि, परसूत्रस्यापि ग्रहणात्।

तत् च सूत्रचतुष्टयम्—

७। "हस्तादयस्तु स्थितेऽतो नैवम्" २।४।६ ( २७५ )

अत्र ( १ ) "सप्त गतेर्विशेषितत्वाच्च" २।४।५ (२७४) इति सूत्रे "सप्त" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं नियमानुगतमेव । चतुर्थसामान्यनियमात् । चकारार्थं अध्याहृतस्य प्रथमान्तपदस्यापि तथात्वं बाधितम् । पष्ठविशेषनियमात् । वल्लभभाष्ये अनेन अधिकरणस्य अरचनायां दोष । चकारस्य हेतुसमुच्चायकत्वेन न बाधकत्वशङ्का । तत्र श्रीपति भाष्ये परसूत्रस्य एतत्सूत्रान्तर्गतत्वं दृश्यते । तन्न युक्तं । तु शब्देन हेतो पृथक्त्वविधानात् । चतुर्थविशेषनियमात् ।

( २ ) 'हस्तादयस्तु स्थितेऽतो नैवम्" २।४।६ (२७५) इत्यत्र हस्तादय" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं प्रसज्यते, चतुर्थसामान्यनियमात्, तथापि सङ्कोचार्थकस्य अथवा अतिप्रायार्थकस्य तु शब्दस्य योगात् तन्न संगच्छते, नवमविशेषनियमात् । अत वल्लभ भाष्ये अत्र अधिकरणारम्भात् दोष । श्रीपतिभाष्ये एतत्सूत्रद्वयम् एकीकृत्य एकमेव अधिकरणं कृतम् । तेन तस्य सूत्रद्वयैककरणजन्य दोष, अधिकसम्मतेरभावात्, चतुर्थविशेषनियमाच्च । न तु अधिकरणरचनाऽरचनाजन्यदोषापत्ति ।

## तृतीय प्राणाणुत्वाधिकरणम् ।

अत्र "अणवश्च" २।४।७ (२७६) इति सूत्रस्य अणु-पदात् ततश्च अस्य प्रतिपाद्यानुसारेण अस्य 'प्राणाणुत्वाधिकरणम्" नाम । तत्र शङ्कर-भास्कर-निम्बार्क-मध्व-श्रीकण्ठ-वल्लभभाष्येषु एतेन एकेन सूत्रेण एतदधिकरणं रचितम् । रामानुज-श्रीपतिभाष्ययो तु सूत्रद्वयं गृहीतम् ।

अत्र 'अणव" इति प्रथमान्तपदस्य सत्त्वात् अत्र अधिकरणारम्भ संगत । चकार योगात् नास्य तत्र बाधक किञ्चित्, यत अत्र विधेयमेव सूच्यते । चतुर्थविशेषनियमात्, त्रयोदशविशेषनियमाच्च । परसूत्रे अधिकसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति ।

## चतुर्थं प्राणश्रैष्ठ्याधिकरणम्

अत्र "श्रेष्ठश्च" २।४।८ (२७७) इति सूत्रस्य श्रेष्ठ-पदात् ततश्च तात्पर्य्यानुरोधात् अस्य 'प्राणश्रैष्ठ्याधिकरण" नाम । तत्र शङ्कर-भास्कर-भाष्ययो एतेन एकेन सूत्रेण एतदधिकरणं रचितम् । रामानुज-श्रीपति-भाष्ययो तदीयतृतीयाधिकरणस्य एतद्धि अन्तिम सूत्रम् । तत्र न अनेन अधिकरणम् आरब्धम् । शङ्कर-भास्कर भाष्यद्वयवत् निम्बार्क-मध्व-श्रीकण्ठ-वल्लभ भाष्येषु तु अधिकरणम् आरब्धम् । तथापि निम्बार्कभाष्ये एतद्धि तदीयचतुर्थाधिकरणस्य षट्सु सूत्रेषु प्रथमं सूत्रम् । माध्वभाष्ये तदीयपञ्चाधिकरणस्य सूत्रद्वयमध्ये प्रथम सूत्रम् । श्रीकण्ठ-भाष्ये तदीयचतुर्थाधिकरणस्य पञ्चसु सूत्रेषु प्रथमं सूत्रम् । वल्लभभाष्ये तदीयचतुर्थाधिकरणस्य सूत्रद्वयमध्ये प्रथमं सूत्रं भवति । शङ्कर-भास्कर-निम्बार्क-श्रीकण्ठ-वल्लभ-भाष्येषु एतच्च चतुर्थाधिकरणम् ।

तत्र "श्रेष्ठः" इति प्रथमान्तपदस्य सत्त्वात् अस्य अधिकरणारम्भकत्वं युज्यते एव । चकारस्य विधेयभेदबोधकत्वात् नात्र अधिकरणारम्भे वाधा कापि वर्तते । चतुर्थसामान्यनियमात् त्रयोदशविशेषनियमाच्च । अत्र रामानुज-श्रीपति-भाष्यद्वयमध्ये अधिकरणस्य अनारम्भात् तयोरेव दोषः । परसूत्रे चतुर्षु भाष्येषु अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिः ।

### पञ्चमं वायुक्रियाधिकरणम्

अत्र "न वायुक्रिये पृथगुपदेशात्" २।४।९ (२७८) इति सूत्रस्य "वायुक्रिये" पदात् अस्य "वायुक्रियाधिकरण" नाम । तत्र शांकर-भास्कर-रामानुज-श्रीपति-भाष्येषु अत्र अधिकरणं रचितम् । शंकर भास्कर-मतद्वये तु एतत् पञ्चमम् अधिकरणम् । रामानुज-श्रीपतिमते च चतुर्थम् अधिकरणम् । शंकर-भास्कर-रामानुजभाष्येषु अत्र चत्वारि सूत्राणि गृहीतानि । श्रीपतिभाष्ये तु पञ्च सूत्राणि गृहीतानि । निम्बार्कभाष्ये तदीयचतुर्थाधिकरणस्य षट्सु सूत्रेषु एतत् द्वितीय सूत्रम्, माध्वभाष्ये तदीयषष्ठाधिकरणस्य सूत्रद्वयमध्ये एतद् हि द्वितीयं सूत्रम् । श्रीकण्ठ-भाष्ये तदीयचतुर्थाधिकरणस्य पञ्चसु सूत्रेषु द्वितीयं सूत्रम् । श्रीपति-भाष्ये तदीयचतुर्थाधिकरणस्य पञ्चसु सूत्रेषु एतत् प्रथमं सूत्रम् । वल्लभभाष्ये तदीयचतुर्थाधिकरणस्य सूत्रद्वयमध्ये द्वितीय सूत्रम् इति विशेषः । तेन निम्बार्क-मध्व-श्रीकण्ठ-वल्लभ-भाष्येषु अधिकरणस्य अनारम्भात् तेषामेव दोषस्पर्शः । तानि च सूत्रचतुष्टयम्

| | |
|---|---|
| १। "न वायुक्रिये पृथगुपदेशात्" २।४।९ ( २७८ ) | ३। अकरणत्वाच्च न दोषस्तथाहि दर्शयति २।४।११ ( २८० ) |
| २। चक्षुरादिवत् तु तत्सहशिष्ट्यादिभ्यः २।४।१० ( २७९ ) | ४। पञ्चवृत्तिर्मनोवद् व्यपदिश्यते २।४।१२ ( २८१ ) |

अत्र ( १ ) "न वायुक्रिये पृथगुपदेशात्" २।४।९ (२७८) इत्यत्र "वायुक्रिये" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्व नियमानुगतम् एव । चतुर्थसामान्यनियमात् । नि-म-श्री-व-भाष्येषु अधिकरणस्य अरचनाया दोषः ।

( २ ) "चक्षुरादिवत् तु तत्सहशिष्ट्यादिभ्य." २।४।१० (२७९) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्- । चक्षुरादिवत् इत्यतः प्रथमान्तपदस्य अध्याहारेऽपि शङ्कानिरासक-तु-शब्दयोगात् न तत्सिद्धिः । चतुर्थसामान्यनियमात् । त्रयोदशविशेषनियमाच्च । मध्व वल्लभभाष्यद्वयमध्ये अधिकरणारम्भात् तयोरेव दोषः ।

( ३ ) "अकरणत्वाच्च न दोषस्तथाहि दर्शयति" २।४।११ (२८०) इत्यत्र "दोषः" इति प्रथमान्तपदसत्त्वेऽपि हेतुसमुच्चायकचकारस्य सत्त्वात् नास्य अधिकरणारम्भकत्वं युक्तम् । तच्च सर्वसम्मतमेव । चतुर्थसामान्यनियमात् षष्ठविशेषनियमाच्च ।

( ४ ) "पञ्चवृत्तिर्मनोवद् व्यपदिश्यते" २।४।१२ (२८१) इत्यत्र "पञ्चवृत्ति" इति

प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तम्, तथापि पूर्वापरसूत्रे च कारात् साकाङ्क्षत्व प्रसक्ते नास्य तथात्वं संगतम् । चतुर्थसामान्यनियमात् सप्तदशविशेषनियमाच्च । परसूत्रे पञ्चसु भाष्येषु अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति समाप्यते । माध्वभाष्ये अत्र अधिकरणस्य आरम्भात् तस्य लोप ।

## षष्ठ श्रेष्ठाणुत्वाधिकरणम् ।

अत्र "अणुश्च" २।४।१३ (२८२) इति सूत्रस्य "अणु" शब्दात् तथा तात्पर्य्यानुरोधात् अस्य "श्रेष्ठाणुत्वाधिकरणं" नाम । तत्र शंकर-भास्कर-रामानुज-माध्व-श्रीकण्ठ भाष्येषु अधिकरणम् आरब्धम् । तत्र शंकर-भास्कर-रामानुज-माध्व-भाष्येषु एतेन एकेन सूत्रेण एतदधिकरणं रचितम् । श्रीकण्ठभाष्ये तु एतदारभ्य सूत्रद्वयेण एतदधिकरणम् । ततश्च रामानुजभाष्ये तदीयपञ्चमाधिकरणस्य, माध्वभाष्ये तदीयनवमाधिकरणस्य, तथा श्रीकण्ठभाष्ये तदीयषष्ठमाधिकरणस्य एतत् सूत्रम् इति बोद्धव्यम् । श्रीकण्ठभाष्ये तु तदीयसप्तमाधिकरणस्य सूत्रद्वयमध्ये एतदेव प्रथमं सूत्रम् । निम्बार्कभाष्ये तदीयचतुर्थाधिकरणस्य षट्सु सूत्रेषु एतद्धि अन्तिमं सूत्रम् । श्रीपतिभाष्ये तदीयचतुर्थाधिकरणस्य पञ्चसु, सूत्रेषु एतदेव पञ्चमं सूत्रम् । तथैव वल्लभ भाष्ये तदीयपञ्चमाधिकरणस्य चतुर्षु सूत्रेषु एतदपि चतुर्थं सूत्रम् । तेन निम्बार्क-श्रीपति वल्लभ-भाष्येषु एतेन अधिकरणस्य अनारम्भात् लोप एव कल्पनीय ।

अत्र 'अणु" इति प्रथमान्तपदस्य सत्त्वात् अधिकरणारम्भ समुचित । चतुर्थसामान्यनियमात । चकारयोगस्तु नात्र तस्य व्याघातक, विधेयभेदस्य सूचनात् । त्रयोदश विशेषनियमात । परसूत्रे अधिकरणसत्त्वात् अधिकरणस्य आरम्भात् अत्रैव अधिकरणस्य समाप्तिश्च संगच्छते ।

## सप्तम ज्योतिराद्यधिकरणम्

अत्र "ज्योतिराद्यधिष्ठानं तु तदामननात्" २।४।१४ (२८३) इति सूत्रस्य ज्योतिरादिपदात् अस्य 'ज्योतिराद्यधिकरणं" नाम । तत्र शंकर-भास्कर-माध्व-भाष्येषु सूत्रत्रयं गृहीतम् । रामानुज श्रीपति-भाष्यद्वयमध्ये सूत्रद्वयम्, प्रथमद्वितीयसूत्रयो एकीकरणात् । निम्बार्कभाष्ये पञ्च सूत्राणि, वल्लभभाष्ये एकमेव सूत्रम् । श्रीकण्ठभाष्ये तु एतेन अधिकरणं न रचितम् । तत्र तदीयसप्तमाधिकरणस्य सूत्रद्वयमध्ये एतद्धि अन्तिम सूत्रं भवति । एवं च एक श्रीकण्ठ भाष्यं विहाय सर्वेषु भाष्येषु अत्र अधिकरणं रचितम् । तानि च सूत्रत्रयम्—

| | |
|---|---|
| १ । ज्योतिराद्यधिष्ठानं तु तदामननात्" २।४।१४ (२८३) | २ । "प्राणवता शब्दात्" २।४।१५ (२८४) |
| | ३ । 'तस्य च नित्यत्वात्" २।४।१६ (२८५) |

( १ ) अत्र 'ज्योतिराद्यधिष्ठानं तु तदामननात्" २।४।१४ (२८३) इत्यत्र 'ज्योतिराद्यधिष्ठानम्" इति प्रथमान्तपदस्य सत्त्वात् अस्य अधिकरणारम्भकत्वं युक्तमेव । चतुर्थसामान्य-

नियमात् । तु-शब्देन न तस्य व्याघात, निषेधार्थकत्वात् तस्य । अष्टादशविशेषनियमात् । रा-श्री-श्रीप-भाष्येषु परसूत्रमपि अनेन सह पठितं दृश्यते । तज्जनित-दोषगुणविचार प्रागेव कृत, अत्र नात्र पुनर्विचार्य्यते । परन्तु तन्न युक्तम् । चतुर्थविशेषनियमात् । श्रीकण्ठभाष्ये अधिकरणस्य अनारम्भात् तस्यैव दोष. इति कल्प्यते ।

( २ ) "प्राणवता शब्दात्" २।४।१५ (२८४) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात् । वल्लभभाष्ये तु अधिकरणस्य रचनाया तस्यैव दोष । रा-श्री-श्रीप-भाष्येषु एतत्सूत्रस्य पूर्वसूत्राङ्गत्व दृश्यते, तन्न सम्यक् । पर-सूत्रीय-च-कारस्य अध्याहर्त्तव्यत्वात् हेतो पार्थक्यविधानात् च । चतुर्थविशेषनियमात ।

( ३ ) "तस्य च नित्यत्वात्" २।४।१६ (२८५) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात् । च-कारस्य न बाधकत्वम्, षष्ठविशेषनियमात् । श्रीकण्ठभाष्ये अधिकरणस्य रचनाया दोष । परसूत्रे अधिकसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति. सगता । एवं च अत्र श्रीकण्ठभाष्यस्य दोषद्वयम्, वल्लभभाष्यस्य तु एक एव ।

## अष्ठमम् इन्द्रियाधिकरणम्

अत्र 'त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्" २।४।१७ (२८६) इति सूत्रस्य "इन्द्रि-याणि"-पदात् अस्य "इन्द्रियाधिकरण" नाम । तत्र शाकर-भास्कर-मध्व-वल्लभ-भाष्येषु त्रीणि सूत्राणि गृहीतानि । रामानुज-श्रीकण्ठ-श्रीपति-भाष्येषु सूत्रद्वयं गृहीतम्, द्वितीयतृतीयसूत्र-द्वयस्य एकीकरणात् । निम्बार्कभाष्ये अत्र अधिकरणं न आरब्धम् । तन्मते तदीयपञ्चमा-धिकरणस्य पञ्चसु सूत्रेषु एतद्धि चतुर्थं सूत्रम् । रामानुज-श्रीकण्ठ-भाष्ययो सप्तमाधिकरणस्य सूत्रद्वयमध्ये एतच्च प्रथम सूत्रम् । माध्वभाष्ये एकादशाधिकरणस्य सूत्रत्रयमध्ये एतद्धि प्रथम सूत्रम । श्रीपतिभाष्ये तदीयषष्ठाधिकरणस्य सूत्रद्वयमध्ये एतच्च प्रथम सूत्रम । वल्लभभाष्ये अष्टमाधिकरणस्य सूत्रत्रयमध्ये एतच्च प्रथम सूत्रम् । तानि च त्रीणि सूत्राणि

१ । 'त इन्द्रियाणि तद्व्यपदेशादन्यत्र । २ । "भेदश्रुतेः" २।४।१८ (२८७)

( ३ ) "वैलक्षण्याच २।४।१९ (२८८) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणा-रम्भकत्वम्। चतुर्थसामान्यनियमात्। च कारोऽपि न साधक, षष्ठविशेषनियमात। रा निम्बार्क श्रीपति-मतेषु एतत्सूत्रम पूर्वसूत्रस्य शेषतया पठितम। तत्र युक्तम्। तत्र हेतुश्च उक्त एव। चतुर्थविशेषनियमात्। परसूत्रे अधिकरणस्य अधिकरणस्य आरम्भात् अत्रैव अधिकरण समाप्ति संगता एव।

## नवम संज्ञामूर्त्तिक्लृप्त्यधिकरणम्

अत्र "संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात" २।४।२० (२८०) इति सूत्रस्य "संज्ञा मूर्त्तिक्लृप्ति" इति पदात अस्य "संज्ञामूर्त्तिक्लृप्त्यधिकरणं" नाम। अत्र मध्व वल्लभ भिन्नेषु भाष्येषु सर्वत्र सत्रत्रयम गृहीतम। शङ्कर-भास्कर-भाष्ययो नवमाधिकरणस्य एतत् प्रथम सूत्रम्। रामानुजभाष्ये तदीयाष्टमाधिकरणस्य प्रथमं सूत्रम्, निम्बार्कभाष्ये तदीयषष्ठाधिकरणस्य प्रथमं सूत्रम्। माध्वभाष्ये तदीयद्वादशाधिकरणस्य प्रथमं सूत्रम्। श्रीकण्ठभाष्ये तदीयाष्टमाधिकरणस्य प्रथमं सूत्रम। श्रीपतिभाष्ये तदीयसप्तमाधिकरणस्य प्रथमं सूत्रम। वल्लभभाष्ये तदीय-नवमाधिकरणस्य प्रथम सूत्रम् इति विशेष। तानि च त्रीणि सूत्राणि—

१। संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात" २।४।२० (२८०)
२। "मांसादि भौमं यथाशब्दमितरयोश्च" २।४।२१ (२९०)
३। "वैशेष्यात् तु तद्वादस्तद्वाद" २।४।२२ (२९१)

अत्र (१) "संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात" २।४।२० (२८०) इति सूत्रस्य 'संज्ञामूर्त्तिक्लृप्ति" इति प्रथमान्तत्वात् अत्र अधिकरणारम्भ संगत एव। चतुर्थसामान्य-नियमात्। तु शब्दोऽपि न बाधक, उक्तपूर्वपक्षत्वात। अष्टादशविशेषनियमात्। सर्वैश्च तथैव कृतम्।

( २ ) "मांसादि भौमं यथाशब्दमितरयोश्च" २।४।२१ (२९०) इत्यत्र "मांसादि भौमं" इति प्रथमान्तपदद्वयसत्त्वात् यद्यपि अधिकरणारम्भ संगत एव, चतुर्थसामान्यनियमात्, तथापि चकारयोगात तस्य न तथात्वम्। षष्ठविशेषनियमात। मध्व-वल्लभ-भाष्यद्वयमध्ये अनेन पृथगधिकरणस्य रचनायां तयोरेव दोष।

( ३ ) "वैशेष्यात तु तद्वादस्तद्वाद" २।४।२२ (२९१) इत्यत्र "तद्वाद" इति प्रथमान्तपदात् अत्र अधिकरणारम्भ यद्यपि संगच्छते, चतुर्थसामान्यनियमात, तथापि तु शब्देन तस्य व्याघात सञ्जात इति बोद्धव्यम्। नवमविशेषनियमात्। अत्र तद्वाद इति पदस्य द्विरुक्तत्वात् अत्रैव अध्यायसमाप्ति, सुतरां पादसमाप्तिरपि इति।

### अष्टमपादोपसंहार।

इदानीं द्रष्टव्यम् अनेन निबन्धेन अस्मिन् पादे अधिकरणरचनायां—

( १ ) कति कीदृशाश्च नियमा अत्र संकलिताः
( २ ) कति च दोषा कस्य भाष्यस्य कथं संवृत्ताः
( ३ ) काश्च श्रुतयः कैश्च सूत्रैः उपजीव्यत्वेन गृहीताः
( ४ ) उपजीव्यश्रुतिबलेन कीदृशी च पादसंगतिः समुचिता इति ।

एते च चत्वारः विषया अधस्तात् क्रमेण प्रदर्श्यन्ते । तत्र प्रथमस्तावत्

### ( १ ) कति कीदृशाश्च नियमा अत्र सकलिताः ।

अत्र न एकोऽपि नूतनः नियमः सङ्कलितः । अतः न एतत् अत्र आलोचनीयम् ।

### ( २ ) कति च दोषाः कस्य भाष्यस्य कथं संवृत्ताः ।

तत्र २।४।१ अधिकरणे माध्वभाष्ये "तत् प्राक्श्रुतेश्च" इति २।४।३ सूत्रे अधिकरणस्य रचनायां दोषः ।

तत्रैव माध्वभाष्ये "तत्पूर्वकत्वाद् वाचः" इति २।४।४ सूत्रे अधिकरणस्य रचनाया दोषः ।

२।४।२ अधिकरणे वल्लभभाष्ये "सप्त गतेर्विशेषितत्वाच्च" इति २।४।५ सूत्रे अधिकरणस्य अरचनाया दोषः ।

तत्रैव वल्लभभाष्ये "हस्तादयस्तु स्थितेऽतो नैवम्" इति २।४।६ सूत्रे अधिकरणस्य रचनाया दोषः ।

२।४।४ अधिकरणे रा-श्रीप-भाष्यद्वये "श्रेष्ठश्च" इति २।४।८ सूत्रे अधिकरणस्य अरचनाया दोषः ।

२।४।५ अधिकरणे म-नि-श्री-व-भाष्येषु "न वायुक्रिये पृथगुपदेशात्" इति २।४।९ सूत्रे अधिकरणस्य अरचनाया दोषः ।

तत्रैव म-व-भाष्यद्वये "चक्षुरादिवत् तु तत्सहशिष्ट्यादिभ्यः" इति २।४।१० सूत्रे अधिकरणस्य रचनाया दोषः ।

तत्रैव माध्वभाष्ये "पञ्चवृत्तिर्मनोवद्व्यपदिश्यते" इति २।४।१२ सूत्रे अधिकरणस्य रचनाया दोषः ।

२।४।६ अधिकरणे नि-श्रीप-व-भाष्येषु "अणुश्च" इति २।४।१३ सूत्रे अधिकरणस्य अरचनाया दोषः ।

२।४।७ अधिकरणे श्रीकण्ठभाष्ये "ज्योतिराद्यधिष्ठानं तु तदामननात्" इति २।४।१४ सूत्रे अधिकरणस्य अरचनाया दोषः ।

तत्रैव वल्लभभाष्ये "प्राणवता शब्दात्" इति २।४।१५ सूत्रे अधिकरणस्य रचनाया दोषः ।

तत्रैव श्रीकण्ठभाष्ये "तस्य च नित्यत्वात्" इति २।४।१६ सूत्रे अधिकरणस्य रचनायां दोषः ।

२।४।८ अधिकरणे निम्बार्कभाष्ये "त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्" इति २।४।१७ सूत्रे अधिकरणस्य अरचनायां दोषः ।

२।४।९ अधिकरणे मध्व-वल्लभ-भाष्ययोः "मांसादि भौमं यथाशब्दमितरयोश्च" इति २।४।२१ सूत्रे अधिकरणस्य रचनायां दोषः ।

एवं च पादे अस्मिन् भाष्याणां दोषसमाहारे कृते दृश्यते—

| भाष्यनाम | अधिकरणस्य अरचनायां | अधिकरणस्य रचनायां |
|---|---|---|
| माध्वभाष्ये | १ दोषः | ५ दोषाः |
| वल्लभभाष्ये | ३ दोषाः | ४ " |
| रामानुजभाष्ये | १ दोषः | ० " |
| श्रीपतिभाष्ये | २ दोषौ | ० " |
| निम्बार्कभाष्ये | ३ दोषाः | ० " |
| श्रीकण्ठभाष्ये | २ दोषौ | १ दोषः |

इति वक्तुं शक्यते । तथा च पादे अस्मिन् शङ्कर-भास्कर-भाष्ययोः दोषाभावः दृश्यते ।

इदानीं द्रष्टव्यम्—

( ३ ) काश्च श्रुतयः कस्मिन् सूत्रे उपजीव्यत्वेन गृहीताः ।

प्रथमाधिकरणे—

"तथा प्राणाः" २।४।१ इति सूत्रे "एतस्माज्जायते प्राणो मनः" (मु २।१।३) "असद्वा इदमग्र आसीत्" ( ? )

"तत् प्राक् श्रुतेश्च" २।४।३ इति सूत्रे "एतस्माज्जायते प्राणो मनः" (मु २।१।३)

तत्पूर्वकत्वाद् वाचः" २।४।४ इति सूत्रे "तत् तेजोऽसृजत" (छा ६।२।३) "अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्" (छा ६।४।५)

द्वितीयाधिकरणे—

"सप्त गतेर्विशेषितत्वाच्च" २।४।५ इति सूत्रे "सप्त प्राणाः प्रभवन्ति तस्मात्" (मु २।१।८) "सप्त वै शीर्षण्याः प्राणाः" (?)

"हस्तादयस्तु स्थितेऽतो नैवम्" २।४।६ इति सूत्रे "हस्तौ वै ग्रहः" (बृ ३।२।८), "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" (बृ ४।४।२), "स यत्रैष चाक्षुषः पुरुषः" (बृ ४।४।१), "दशमे पुरुषे प्राणा आत्मैकादशस्ते यदा अस्मात् शरीरात् मर्त्याद् उत्क्रामन्ति अथ रोदयन्ति" (बृ ३।९।४) ।

तृतीयाधिकरणे

"अणवश्च" २।४।७ इति सूत्रे "प्राणाः सर्वेऽनन्ताः" (?)

चतुर्थाधिकरणे

"श्रेष्ठश्च" २।४।८ इति सूत्रे "एतस्माज्जायते प्राणः" ( मु: २।१।३ ) "आनीदवातम्" ( ऋक् ८।७।१७ )

पञ्चमाधिकरणे

"न वायुक्रिये पृथगुपदेशात्" २।४।९ इति सूत्रे "यः प्राणः स वायुः" (?), "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" ( मु. २।१।३ ) "सवायुना ज्योतिषा" ( छा. ३।१८।४ )

"अकरणत्वाच्च न दोषस्तथाहि दर्शयति" २।४।११ इति सूत्रे "तान् वरिष्ठः प्राण उवाच मा मोहम् आपद्यथ अहमेव एतत् पञ्चधा आत्मानं प्रविभज्य एतद्बाणम् अवष्टभ्य विधारयामि ।" (प्रश्न. २।३)

षष्ठाधिकरणे

"अणुश्च" २।४।१३ इति सूत्रे "सम एभिः त्रिभिः लोकैः" ( बृ १।३।२२ )

सप्तमाधिकरणे

"ज्योतिराद्यधिष्ठानं तु तदामननात्" २।४।१४ इति सूत्रे "आदित्यश्चक्षुर्भूत्वा" (ऐः २।४) "चक्षुषा हि रूपाणि पश्यति" ( बृ. ३।२।५ )

प्राणवता शब्दात्" २।४।१५ इति सूत्रे "स चाक्षुषः पुरुषो दर्शनाय चक्षुः" (छाः ८।१२।४)

अष्टमाधिकरणे

"त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्" २।४।१७ इति सूत्रे "एतस्माज्जायते प्राणो मनः" (मुः २।१।३), "त एतस्यैव सर्वे रूपम् अभवन्" (बृः १।५।२१)

"भेदश्रुतेः" २।४।१८ इति सूत्रे "अथ हेममासन्यं प्राणमूचु" (बृः १।३।२)

नवमाधिकरणे

"सज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्" २।४।२० इति सूत्रे "अनेन जीवेन आत्मना अनुप्रविश्य नामरूपे व्याकरवाणि" (छाः ६।३।२), "आकाशो ह वै नाम नामरूपयोर्निर्वहिता" (छाः ८।१४।१) "तासां त्रिवृत त्रिवृतम् एकैका करवाणि" (छाः ६।३।२)

"मांसादि भौमं यथाशब्दमितरयोश्च" २।४।२१ इति सूत्रे "अन्नम् अशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति, यो मध्यम तन्मांसं योऽणिष्ठ तन्मनः (छाः ६।५।१)।

इदानीं द्वितीयस्य एतस्य सूत्रोपजीव्यश्रुतिप्रसङ्गेन—

( ४ ) कीदृशी अस्य पादसंगति

अध्यायस्य अस्य तृतीयचतुर्थपादौ भूतभौतिकोत्पत्त्यादिविषये श्रुतीनां परस्परविरोध परिहाराय—इति प्रागेव उक्तम् । तेन पूर्वपादे भूतमोक्षश्रुतिविरोधं विधूय अस्मिन् पादे भौतिकेन्द्रियादि-विषयकश्रुतिविरोध निराकृत इत्येव दृश्यते । एवं च भाष्यकृतां मध्ये अत्र न विशेष मतभेद प्रज्ञात । तथापि तेषां पादप्रतिपाद्यानि अधस्तात् प्रदर्श्यन्ते—

शङ्करमते—लिङ्गशरीरश्रुतीनां विरोधपरिहार

भास्करमते—प्रायेण तथैव

रामानुजमते—इन्द्रियादेः कार्यत्वनिरूपणम्

निम्बार्कमते—जीवकरणश्रुतीनाम् अविरोधप्रदर्शनम्

मध्वमते—युक्तिकश्रुत्यविरोध

श्रीकण्ठमते—भौतिकोत्पत्तिश्रुतिविरोधपरिहार

श्रीकरमते—जीवस्य ब्रह्मकार्यत्वेऽपि चेतनत्वात् अनन्यत्व-स्वाभाविकभिन्नत्व-सत्-स्वरूपत्वानां प्रदर्शनेन तस्य तल्लिङ्गशरीरत्व प्रतिपादनम् । इति ।

अत्र यो विशेषत भेद प्रदृश्यत स तु मध्वमते तथा श्रीकरमते एव । तत्रापि मध्वमते आपातत भेदसत्त्वेऽपि फलत न अन्यत्वम् इति तदीयभाष्यादित प्रतीयते । श्रीकरभाष्यस्य गतिस्तु चिन्तनीया । तत्र जीवविषयकप्रसंगादिक बाहुल्येन सन्निविष्टम्—इति सूत्र भाष्यपाठेन अवगम्यते । एवं च योऽयम् अत्र मतभेद, स तु उपेक्षणीय एव प्रतिभाति । मतविशेषे अवलम्ब्यमाने, तस्य अन्यथाकरणेन कथञ्चिद् अपूर्वत्वसाधन न दुष्कर, सम्प्रदाय-रक्षणार्थं स्वमतस्थापनात् स्वमतप्रदर्शनं यत्र प्रयोजनं भवेत । अत भाष्याणां व्यासमतसन्निकृष्टत्व-विचारे प्राचीनत्वं प्राचीनमूलकत्वम् एतदुभयं स्मरणीयम् इति दिक् । इति अष्टमपादसमालोचनम् ।

द्वितीयाध्यायसमालोचनम् ।

एवं च एतद् अध्यायस्य चतुर्षु पादेषु यत् प्रतिपादितं तथा यच्च प्रथमाध्याये आलोचितं तस्य पर्यालोचने कृते विभिन्नश्रुतिवाक्योत्थसंशयमीमांसा एव एतद्ग्रन्थस्य प्रयोजनमिति अतिस्पष्टतया प्रतिभाति । नात्र सूत्रकारस्य स्वकीयमतप्रदर्शनस्पृहा काचिदपि प्रदृश्यते । श्रुतीनाम् अभ्रान्तत्वं तथा व्यक्तिविशेषोद्भावितमतानां अप्रामाणिकत्वं ग्रन्थस्यास्य हृदयं मूलमन्त्रं वा । अत प्रथमाध्याये श्रुतीनां समन्वये साधिते, तत्र सम्भावितविरोधपरिहारार्थं अयं द्वितीय अध्याय । स्वमतवर्णनान्तरं परमतखण्डनं विना स्वमतस्थापनं न सम्भवति । यथा इतरभेदानुमापकं लक्षणं वस्तुनिर्णये सम्यक् कौशलं, तद्भिन्नानां तत्त्वधारणाय, यथा रजत ज्ञानार्थिने रजतखण्डं प्रदर्श्य सीसकवङ्गादिधातुभेदोऽपि तस्मै विज्ञापनीय, सीसकवङ्गादिषु

रजतभ्रमवारणाय, तथा स्वपक्षस्थापनानन्तर परपक्षनिरसनमपि प्रयोजन स्वपक्षदार्ढ्याय, सम्भाविताऽप्रत्याशितभ्रान्तिनिवारणाय च । अत अस्मिन् द्वितीये अध्याये परपक्षखण्डनद्वारा अविरोधप्रदर्शनं अतीव युक्तियुक्तम् आजानिकाक्षानुरूप च । तेन अस्य प्रथमे पादे स्वमतोपरि परकृताक्षेपस्य युक्तिबलेनैव निरसनं कृतं, द्वितीये पादे 'विषस्य विषमौषधम्' इतिवत् युक्तिवादिना परेषा मते युक्तिविरोधस्यैव प्रदर्शनं कृतं, तृतीये चतुर्थे च पादद्वये परोद्भावितश्रुतिविरोधस्यापि निराकरणं कृतम् । स्वमतसमर्थनासमर्थस्य परमतेनापि परमतपराभवप्रचेष्टानिरसनवत् । अत युक्तमेतत् विरोधपरिहारप्रदर्शनम् एतद् द्वितीयाध्यायस्य ।

एवं च यदि एतदध्यायान्तर्गतपादचतुष्टयस्य समालोचनफलम् अत्र समाह्रियते तदा तद् इत्थमेव भवति

| भाष्यकारा | प्रथमपादे अधिकरण- रचनाया दोष | प्रथमपादे अधिकरण- अरचनाया दोष | द्वितीयपादे अधिकरण- रचनाया दोष | द्वितीयपादे अधिकरण- अरचनायां दोष | तृतीयपादे अधिकरण- रचनायां दोष | तृतीयपादे अधिकरण- अरचनायां दोषः | चतुर्थपादे अधिकरण- रचनाया दोष | चतुर्थपादे अधिकरण- अरचनाया दोष | |
|---|---|---|---|---|---|---|---|---|---|
| शङ्कर | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| भास्कर | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| रामानुजः | ० | ३ | १ | १ | १० | ० | ० | १ | १६ |
| निम्बार्क | ० | ३ | ० | २ | १० | २ | ० | ३ | २० |
| मध्व | ३ | ५ | ६ | २ | ४ | ६ | ५ | १ | ३२ |
| श्रीकण्ठ | १ | ३ | २ | १ | ५ | ० | १ | २ | १५ |
| श्रीपति | ० | २ | ० | १ | २ | ० | ० | २ | ७ |
| वल्लभ | ३ | ४ | १ | १ | २ | १ | ४ | ३ | १९ |
| समष्टि | ७ | २० | १० | ८ | ३३ | ९ | १० | १२ | १०९ |

एवं च

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| रामानुजभाष्ये | | १६ | दोषाः | तत्र रचनायां | ११ | अरचनाया | ५ | दोषा |
| निम्बार्क | ,, | २० | ,, | ,, | १० | ,, | १० | ,, |
| मध्व | ,, | ३२ | ,, | ,, | १८ | ,, | १४ | ,, |
| श्रीकण्ठ | ,, | १५ | ,, | ,, | ९ | ,, | ६ | ,, |
| श्रीपति | ,, | ७ | ,, | ,, | २ | ,, | ५ | ,, |
| वल्लभ | ,, | १९ | ,, | ,, | १० | ,, | ९ | ,, |

एतेन केवलं शंकरभास्करभाष्ययो दोषाभाव ।

ततश्च ये च अतिरिक्तनियमा अत्र द्वितीयाध्याये सङ्कलिता ते पञ्चसंख्यकाः यथा—

चतुर्दशनियम —"चेन"-"इति चेन" प्रभृति शब्दसत्त्वेऽपि यत्र शङ्काभागे पञ्चम्यन्त प्रथमान्त-पद-द्वय-सत्त्व तत्र अधिकरणारम्भ युक्त'। यथा "भोक्त्रापत्ते अविभागश्चेत् स्याल्लोकवत्" इति २।१।१३ सूत्रे अधिकरणारम्भ ।

पञ्चदशनियम —"यत्र पूर्वसूत्रे 'व्याख्यातम्" "तदुक्तम्" प्रभृतिशब्दजातीयक प्रसंगसमाप्तिसूचक पदं, तत्र निरपेक्षत्वबोधकत्वे सति अधिकरणारम्भ करणीय ।" यथा—'विकरणत्वान्नेति चेत् तदुक्तम्" २।१।३१ इति सूत्र, तत "न प्रयोजनवत्त्वात" २।१।३२ इति सूत्रे अधिकरणस्य आरम्भ ।

षोडशनियम —"यत्र हेतुत्रय चकारादिपदेन समाह्रियते तत्र अधिकरणसमाप्ति वक्तव्या, तत्र तदनन्तरं यत् सूत्रं तेन अधिकरणारम्भ संगच्छते"। यथा "उपपद्यते चाप्युपलभ्यते च" २।१।३६ इति सूत्रे "सर्वधर्मोपपत्तेश्च' २।१।३७ इति सूत्रे अधिकरणस्य आरम्भ ।

सप्तदशनियम —"यत्र पूर्वापरसूत्रयोर्मध्ये चकारयोगो भवति तत्र मध्यपतितसूत्रस्य प्रथमान्तपदस्य साकांक्षत्वम् अनुमाय अंगसूत्रत्व वक्तव्यम्" यथा—'वैधर्म्याच्च न स्वप्नादिवत्" २।२।२९ इति सूत्रे, तत "न भावोऽनुपलब्धेः" २।२।३० इति सूत्रे, तत "क्षणिकत्वाच्च" २।२।३१ इति सूत्रे न अधिकरणस्य आरम्भ ।

अष्टादशनियम —"अपूर्वपक्ष प्रथमान्तपदेन सह निषेधार्थक-तु शब्दस्य नाधिकरणारम्भकत्वम्" । यथा—"तद्गुणसारत्वात् तु तद्व्यपदेशः प्राज्ञवत्" ३।३।२९ इति सूत्रे न अधिकरणारम्भ । विस्तरस्तु यथास्थानं द्रष्टव्य । एते पञ्च नियमा द्वितीयाध्याये संकलिता ।

इदानीं द्रष्टव्यम्—केषु सूत्रेषु कस्य भाष्यस्य कियत्संख्यक दोष इति—

"इतरेषां चानुपलब्धेः" २।१।२ सूत्रे वल्लभस्य अधिकरणरचनायां दोष । १

"एतेन योगः प्रत्युक्त" २।१।३ सूत्रे मध्वस्य अधिकरणस्य अरचनायां दोष १

"अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्" २।१।५ सूत्रे मध्वस्य अधिकरणरचनायां दोष १

"असदिति चेन्न प्रतिषेधमात्रत्वात्" २।१।७ सूत्रे मध्ववल्लभयो अधिकरणरचनायां दोष २

"अपीतौ तद्वत् प्रसंगादसमञ्जसम्" २।१।८ सूत्रे श्रीकण्ठस्य अधिकरणरचनाया दोष १

"एतेन शिष्टापरिग्रहा अपि व्याख्याता "२।१।१२ सूत्रे मध्वस्य अधिकरणस्य अरचनायां दोष १

"असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्" २।१।१७ सूत्रे वल्लभभाष्ये अधिकरणस्य रचनायां दोष १

"इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्ति " २।१।२१ सूत्रे श्रीकण्ठभाष्ये अधिकरणस्य अरचनायां दोष १

"उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" २।१।२४ सूत्रे मध्वस्य अधिकरणानारम्भात् दोषः १

"कृत्स्नप्रसक्तिर्निरवयत्वशब्दकोपो वा" २।१।२६ सूत्रे मध्ववल्लभयो अधिकरणस्य अरचनाया दोषः २

"श्रुतेस्तु शब्दमूलत्वात्" २।१।२७ सूत्रे मध्वस्य अधिकरणारम्भात् दोष. १

"सर्वोपेता च तद्दर्शनात्" २।१।३० सूत्रे रा-नि-म-श्री-श्रीप-भाष्येषु अधिकरस्य अनारम्भात् दोष ५

"न प्रयोजनवत्त्वात्" २।१।३२ सूत्रे श्रीपति-वल्लभभाष्ययो अधिकरणस्य अरचनाया २

"वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति" २।१।३४ सूत्रे रा-नि-व-भाष्येषु अधिकरणस्य अरचनाया दोष ३

"सर्वधर्म्मोपपत्तेश्च" २।१।३७ सूत्रे रा-नि-श्री-व-भाष्येषु अधिकरणस्य अरचनाया दोष ४

"अन्यत्राभावाच्च न तृणादिवत्" २।२।५ इति सूत्रे मध्वभाष्ये अधिकरणरचनाया दोष १

"अभ्युपगमेऽप्यर्थाभावात्" २।२।६ सूत्रे मध्वभाष्ये अधिकरणस्य रचनाया दोष १

"पुरुषाश्मवत् इति चेत् तथापि" २।२।७ सूत्रे मध्ववल्लभभाष्ययो अधिकरणारम्भात् दोष २

"अन्यथानुमितौ च ज्ञशक्तिवियोगात्" २।२।९ सूत्रे मध्वभाष्यस्य अधिकरणरचनाया दोष १

"उभयथापि न कर्म्मातस्तदभाव." २।२।१२ सूत्रे रा-म-नि-श्री-व-भाष्येषु अधिकरणस्य अरचनाया दोष ५

"नासतोऽदृष्टत्वात्" २।२।२६ सूत्रे म-श्री-भाष्ययो अधिकरणस्य रचनाया दोष २

"नाभाव उपलब्धे" २।२।२८ सूत्रे मध्वनिम्बार्कभाष्यद्वये अधिकरणस्य अरचनाया दोष २

"न भावोऽनुपलब्धे २।२।३० सूत्रे मध्वभाष्ये अधिकरणस्य रचनाया दोष १

"सर्वथानुपपत्तेश्च" २।२।३२ सूत्रे रा-श्री-श्रीप-भाष्येषु अधिकरणस्य रचनाया दोष. ३

"एतेन मातरिश्वा व्याख्यातः" २।३।८ सूत्रे रा-नि-भाष्ययो अधिकरणस्य अरचनाया दोष २

"असम्भवस्तु सतोऽनुपपत्ते २।३।९ सूत्रे रा-नि-श्रीप-भाष्येषु अधिकरणस्यअरचनाया दोष ३

"तेजोऽतस्तथाह्याह" २।३।१० सूत्रे निम्बार्कभाष्यस्य अधिकरणस्य अरचनाया दोष १

"आप" २।३।११ सूत्रे रा-नि-श्री-भाष्येषु अधिकरणस्य अरचनाया दोष ३

"पृथिव्यधिकाररूपशब्दान्तरेभ्य" २।३।१२ सूत्रे रा-नि-श्री-भाष्येषु अधिकरणस्य अरचनाया दोष. ३

"पृथिवी" इति २।३।११ सूत्रे निम्बार्कस्य अधिकरणस्य अरचनाया दोष १

"तदभिध्यानादेव तु तल्लिंगात् स" इति २।३।१३ सूत्रे रा-नि-श्री-भाष्येषु अधिकरणस्य अरचनाया दोष ३

"विपर्ययेण तु क्रमोऽत उपपद्यते च" इति २।३।१४ सूत्रे रा नि-भाष्ययो अधिकरणस्य अरचनायां दोष २

"अन्तरा विज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात्" इति २।३।१५ सूत्रे रा नि-श्री-भाष्येषु अधिकरणस्य अरचनायां दोष ३

"चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" इति २।३।१६ सूत्रे रा-म-व-भाष्येषु अधिकरणस्य अरचनायां दोष ३

"नात्माश्रुतेर्नित्यत्वाच्च ताभ्य" २।३।१७ सूत्रे निम्बार्कभाष्यस्य अधिकरणस्य अरचनायां दोष १

"युक्तेश्च" इति मध्वभाष्यानुसारेण २।३।१९ सूत्रे मध्वभाष्ये अधिकरणरचनायां दोष १

"उत्क्रान्तिगत्यागतीनाम्" इति २।३।१९ सूत्रे रा-म-भाष्ययो अधिकरणस्य अरचनायां दोष २

"व्यतिरेको गन्धवत्" इति २।३।२६ सूत्रे मध्वभाष्ये अधिकरणस्य रचनायां दोष १

"पृथगुपदेशात्" इति २।३।२८ सूत्रे मध्वभाष्ये अधिकरणस्य रचनायां दोष १

"तद्गुणसारत्वात् तु तद्व्यपदेश प्राज्ञवत्" इति २।३।२९ सूत्रे वल्लभभाष्ये अधिकरणरचनायां दोष १

"यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" २।३।३० सूत्रे मध्वभाष्ये अधिकरणस्य रचनायां दोष १

"पुंस्त्वादिवत् तस्य सतोऽभिव्यक्तियोगात्" २।३।३१ सूत्रे मध्वभाष्ये अधिकरणस्य रचनायां दोष १

"यथा च तक्षोभयथा" २।३।४० सूत्रे रा-नि-म-श्री-श्रीप व-भाष्येषु अधिकरणस्य अरचनायां दोष ६

परात् तु तच्छ्रुते" २।३।४१ सूत्रे मध्वभाष्ये अधिकरणस्य अरचनायां दोष १

"कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य" इति २।३।४२ सूत्रे निम्बार्क-भाष्ये अधिकरणस्य रचनायां दोष १

"अदृष्टानियमात्" इति २।३।५१ सूत्रे मध्वभाष्ये अधिकरणस्य रचनायां दोष १

"तत् प्राक्श्रुतेश्च" इति २।४।३ इति २।४।३ सूत्रे मध्वभाष्ये अधिकरणस्य रचनायां दोष १

"तत् पूर्वकत्वाद् वाच" २।४।४ सूत्रे मध्वभाष्ये अधिकरणस्य रचनायां दोष १

"सप्त गतेर्विशेषितत्वाच्च" इति २।४।५ सूत्रे वल्लभभाष्ये अधिकरणस्य अरचनायां दोष १

"हस्तादयस्तु स्थितेऽतो नैवम्" २।४।६ सूत्रे वल्लभभाष्ये अधिकरणस्य रचनाया दोषः १

"श्रेष्ठश्च" इति २।४।८ सूत्रे रा-श्री-भाष्ययो. अधिकरणस्य अरचनाया दोषः २

"न वायुक्रिये पृथगुपदेशात्" इति २।४।९ सूत्रे नि-म-श्री-व-भाष्येषु अधिकरणस्य अरचनाया दोष. ४

"चक्षुरादिवत् तु तत्सहशिष्टादिभ्य" इति २।४।१० सूत्रे म-व-भाष्ययो· अधिकरणस्य रचनाया दोष २

"पञ्चवृत्तिर्मनोवद् व्यपदिश्यते" २।४।११ सूत्रे मध्वभाष्ये अधिकरणस्य रचनाया दोष. १

'अणुश्च" इति २।४।१३ सूत्रे नि-श्रीप-व-भाष्येषु अधिकरणस्य अरचनाया दोष. ३

"ज्योतिराद्यधिष्ठान तु तदामननात्" इति २।४।१४ सूत्रे श्रीकण्ठभाष्ये अधिकरणस्य अरचनाया दोष १

"प्राणवता शब्दात्" इति २।४।१५ सूत्रे वल्लभभाष्ये अधिकरणस्य रचनाया दोष· १

"तस्य च नित्यत्वात्" इति २।४।१६ सूत्रे श्रीकण्ठभाष्ये अधिकरणस्य रचनाया दोष १

"त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्" २।४।१७ सूत्रे निम्बार्कभाष्ये अधिकरणस्य अरचनाया दोष १

"मासादि भौम यथाशब्दमितरयोश्च" इति २।४।२१ सूत्रे म-व-भाष्ययो· अधिकरणस्य रचनाया दोष । २

समष्टि. १०९

एवं च येषु सूत्रेषु प्रत्येक भाष्यस्य दोषा ते तावद्, यथा

वल्लभस्य दोषाय — इतरेषां चानुपलब्धे. २।१।२

असदिति चेन्न प्रतिषेधमात्रत्वात् २।१।७

असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषात २।१।१७

कृत्स्नप्रसक्तिर्निरवयवत्वशब्द-कोपो वा २।१।२६

न प्रयोजनवत्त्वात् २।१।३२

वैषम्यनैर्घृण्ये न सापेक्षत्वात तथाहि दर्शयति २।१।३४

सर्वधर्मोपपत्तेश्च २।१।३७

पुरुषाश्मवदिति चेत् तथापि २।२।७

इत्यवान्तर धर्मान्तरनीव २।२।१०

चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावित्वात् २।३।१६

तद्गुणसारत्वात् तु तद्व्यपदेश. प्राज्ञवत् २।३।२९.

यथा च तक्षोभयथा २।३।४०

सप्त गतेर्विशेषितत्वाच्च २।४।५

हस्तादयस्तु स्थितेऽतो नैवम् २।४।६

न वायुक्रिये पृथगुपदेशात् २।४।९

चक्षुरादिवत् तु तत्सहशिष्टादिभ्य २।४।१०

अणुश्च २।४।१३

प्राणवता शब्दात् २।४।१५

मध्वमस्य दोषाय—

मासादिभौमं यथा ।ब्दमितरयोश्च२।४।२१

१९

मध्वस्य दोषाय—एतेन योग प्रत्युक्त २।१।३

अभिमानिव्यपदेशस्तु विशेषानु

गतिभ्याम् २।१।५

असदिति चेन्न प्रतिषेधमात्रत्वात् २।१।७

एतेन शिष्टापरिग्रहा अपि व्याख्याता २।१।१२

उपसंहारद र्शनान्नेति चेन्न क्षीरवद्धि २।१।२४

कृत्स्नप्रसक्तिर्निरवयवत्वशब्द

कोपो वा २।१।२६

श्रुतेस्तु शब्दमूलत्वात् २।१।२७

सर्वोपेता च तद्दर्शनात् २।१।३०

अन्यत्राभावाच्च न तृणादिवत् २।२।५

अभ्युपगमेऽप्यर्थाभावात् २।२।६

पुरुषाश्मवदिति चेत् तथापि २।२।७

अन्यथानुमितौ च ज्ञशक्तिवियोगात् २।२।९

उभयथापि न कर्मातस्तदभावः २।२।१२

नासतोऽदृष्टत्वात् २।२।२६

नाभाव उपलब्धेः २।२।२८

न भावोऽनुपलब्धेः २।२।३०

चराचर व्यपाश्रयस्तु स्यात् तद्-

व्यपदेशो भाक्तस्तद्भाव

भावित्वात् २।३।१६

युक्तेश्च २।३।१० (तृतीयस्य)

उत्क्रान्तिगत्यागतीनाम् २।३।१९

व्यतिरेको गन्धवत् २।३।२६

पृथगुपदेशात् २।३।२८

यावदात्मभावित्वाच्च न दोष

स्तद्दर्शनात् २।३।३०

मध्वस्य दोषाय—पुंस्त्वादिवत्

त्वस्य सतोऽभिव्यक्तियोगात् २।३।३१

यथा च तक्षोभयथा २।३।४०

परात् तु तच्छ्रुते २।३।४१

अदृष्टानियमात् २।३।५१

तत्प्राक्श्रुतेश्च २।४।३

तत्पूर्वकत्वाद् वाचः २।४।४

न वायुक्रिये पृथगुपदेशात् २।४।९

चक्षुरादिवत् तु तत्सहशिष्टादिभ्य

२।४।१०

पञ्चवृत्तिर्मनोवत् व्यपदिश्यते २।४।१२

मासादि भौमं यथाशब्दमितरयोश्च

२।४।२१

३२

श्रीकण्ठस्य दोषाय—

अपीतौतद्वत् प्रसंगादसमञ्जसम् २।१।८

इतरव्यपदेशाद् हिताकरणादि

दोषप्रसक्ति २।१।२१

सर्वोपेता च तद्दर्शनात् २।१।३०

सर्वधर्मोपपत्तेश्च २।१।३७

उभयथापि न कर्मातस्तदभाव २।१।१२

नासतोऽदृष्टत्वात् २।२।२६

सर्वथानुपपत्तेश्च २।२।३२

आपः २।३।११

पृथिव्यधिकाररूपशब्दान्तरेभ्य २।३।१२

तदभिध्यानादेव तु तल्लिंगात् सः २।३।१३

अन्तरा विज्ञानमनसी क्रमेण तल्लिंगा

दिति चेन्नाविशेषात् २।३।१५

यथा च तक्षोभयथा २।३।४०

न वायुक्रिये पृथगुपदेशात् २।४।९

श्रीकण्ठस्य दोषाय

ज्योतिराद्यधिष्ठानं तु तदामननात् २।४।१४

तस्य च नित्यत्वात् २।४।१६

१५

रामानुजस्य दोषाय

सर्वोपेता च तद्दर्शनात् २।१।३०

वैषम्यनैर्घृण्ये न सापेक्षत्वात्
तथाहि दर्शयति २।१।३४

सर्वधर्म्मोपपत्तेश्च २।१।३७

उभयथापि न कर्म्मातस्तदभाव २।२।१२

सर्वथानुपपत्तेश्च २।२।३२

एतेन मातरिश्वा व्याख्यातः २।३।८

असम्भवस्तु सतोऽनुपपत्तेः २।३।९

आप. २।३।११

पृथिव्यधिकाररूपशब्दान्तरेभ्य २।३।१२

तदभिध्यानादेव तु तल्लिंगात् स २।३।१३

विपर्य्ययेण तु क्रमोऽत-
उपपद्यते च २।३।१४

अन्तरा विज्ञानमनसी क्रमेण
तल्लिंगात् इति चेन्नाविशेषात् २।३।१५

चराचरव्यपाश्रयस्तु स्यातद्व्यपदेशो
भाक्तस्तद्भावभावित्वात् २।३।१६

उत्क्रान्तिगत्यागतीनाम् २।३।१९

यथा च तक्षोभयथा २।३।४०

श्रेष्ठश्च २।४।८

१६

निम्बार्कस्य दोषाय

सर्वोपेता च तद्दर्शनात् २।१।३०

वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि
दर्शयति २।१।२४

सर्वधर्म्मोपपत्तेश्च २।१।३७

निम्बार्कस्य दोषाय

उभयथापि न कर्म्मातस्तदभावः २।२।१२

नाभाव उपलब्धेः २।२।२८

एतेन मातरिश्वा व्याख्यात. २।३।८

असम्भवस्तु सतोऽनुपपत्ते. २।३।९

तेजोऽतस्तथा ह्याह २।३।१०

आपः २।३।११

पृथिव्यधिकाररूपशब्दान्तरेभ्यः २।३।१२

पृथिवी (२।३।११) तदीयम्

तदभिध्यानादेव तु तल्लिंगात् सः २।३।१३

विपर्य्ययेण तु क्रमोऽत २।३।१४

उपपद्यते च २।३।१४

अन्तरा विज्ञानमनसी क्रमेण
तल्लिंगादिति चेन्नाविशेषात् २।३।१५

नात्माश्रुतेर्नित्यत्वाच्च ताभ्य २।३।१७

यथा च तक्षोभयथा २।३।४०

कृतप्रयत्नापेक्षस्तु विहितप्रति-
षिद्धावैयर्थ्यादिभ्य' २।३।४२

न वायुक्रिये पृथगुपदेशात् २।४।९

अणुश्च २।४।१३

त इन्द्रियाणि तद्व्यपदेशाद-
न्यत्र श्रेष्ठात् २।४।१७

२०

श्रीपते' दोषाय

सर्वोपेता च तद्दर्शनात् २।१।३०

न प्रयोजनवत्त्वात् २।१।३२

सर्वथानुपपत्तेश्च २।२।३२

असम्भवस्तु सतोऽनुपपत्तेः २।३।९

यथा च तक्षोभयथा २।३।४०

श्रेष्ठश्च २।४।८

अणुश्च २।४।१३

७

१९+३२+१५+१६+२०+७=१०९

एवं च अधिकरणरचनानियमानुसारेण विभिन्नभाष्याणां पर्य्यालोचने कृते शङ्कर भास्कर भाष्यद्वयस्यैव व्यासमतसन्निकृष्टत्वम् एव उपलभ्यते ।

अथ अत्र अधिकरणाङ्गविषये किञ्चित् अवधातव्यम् अस्ति । तद् यथा—प्रथमाध्याये चतुर्षु पादेष्वेव श्रुतिवाक्यानि विषयत्वेन उद्धृतानि एवेति दृश्यते । अत्र तु द्वितीयाध्याये तत्प्रथाया अन्यथा परिलक्ष्यते । यथा प्रथमतृतीयचतुर्थपादेषु विषयत्वेन न किञ्चिदपि श्रुतिवाक्यं प्रदर्शितम् । तत्र केवलं श्रुतिस्मृती अवलम्ब्य समन्वयविरोध एव शङ्कित, ततः संशयपूर्वपक्षसिद्धान्तपक्षमात्रं उक्तं, परन्तु द्वितीये पादे सांख्यादिमतवादानां विषयत्वेन वर्णनं कृतम् इति । एतेन समन्वयाविरोधमध्ये कीदृश भेद कल्पनीय तद् बोद्धु शक्यते । इति द्वितीयाध्यायसमालोचनम् ।

इति श्रीचिद्घनानन्दपुरीविरचिते व्यासमम्मतब्रह्मसूत्रभाष्यनिर्णये द्वितीय अध्याय ।

## अथ साधननामतृतीयाध्याये प्रथमपादे
## प्रथम तदन्तरप्रतिपत्त्यधिकरणम् ।

अत्र "तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्त प्रश्ननिरूपणाभ्याम्" ३।१।१ (२९२) इति सूत्रस्य "तदन्तरप्रतिपत्ति"-पदात् अस्य "तदन्तरप्रतिपत्त्यधिकरणं" नाम । तत्र मध्वभाष्यभिन्नेषु सर्वेषु भाष्येषु सप्त सूत्राणि गृहीतानि । माध्वभाष्ये अनेन एकेनैव सूत्रेण तस्य प्रथमाधिकरण रचितम् । वस्तुतस्तु एतै सप्तभि सूत्रै माध्वभाष्ये सप्त अधिकरणानि भवन्ति । अस्तु तावत् तानि च सप्त सूत्राणि—

| | |
|---|---|
| १। "तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्त प्रश्ननिरूपणाभ्याम्" ३।१।१ (२९२) | ५। "प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्ते" ३।१।५ (२९६) |
| २। "त्र्यात्मकत्वात् तु भूयस्त्वात्" ३।१।२ (२९३) | ६। "अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीते" ३।१।६ (२९७) |
| ३। "प्राणगतेश्च" ३।१।३ (२९४) | ७। "भाक्तं वाऽनात्मवित्त्वात् तथाहि दर्शयति" ३।१।७ (२९८) |
| ४। "अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्" ३।१।४ (२९५) | |

अत्र (१) 'तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्त प्रश्ननिरूपणाभ्याम्" ३।१।१ (२९२) इति सूत्रे अध्यायारम्भात् तथा च 'सम्परिष्वक्त" इति प्रथमान्तपदाच्च अत्र अधिकरणारम्भ संगत एव । चतुर्थसामान्यनियमात्, पञ्चमविशेषनियमात् च ।

(२) 'त्र्यात्मकत्वात् तु भूयस्त्वात्" ३।१।२ (२९३) इति सूत्रे प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात्, नवमविशेषनियमात् च । माध्वभाष्ये तदीय-द्वितीयाधिकरणस्य रचनायां दोष ।

( ३ ) 'प्राणगतेश्च" ३।१।३ (२९४) इति सूत्रे प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात् । चकाराच्च निषेधः, षष्ठविशेषनियमात् । माध्वभाष्यस्य तदीयतृतीयाधिकरणस्य रचनाया दोषः ।

( ४ ) "अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्" ३।१।४ (२९५) इति सूत्रे प्रथमान्तपदाभावात्, तथैव "इति चेन्न" इति पदसत्त्वात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात् पञ्चमविशेषनियमाच्च । माध्वभाष्ये तदीयचतुर्थाधिकरणस्य रचनाया दोषः ।

( ५ ) "प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः" ३।१।५ (२९६) इति सूत्रे 'ता" इति प्रथमान्तपदसत्त्वेऽपि "इति चेन्न" पदस्य सत्त्वात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात्, पञ्चमविशेषनियमाच्च । माध्वभाष्ये तदीयपञ्चमाधिकरणस्य रचनाया दोषः ।

( ६ ) "अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः" ३।१।६ (२९७) इति सूत्रेऽपि तथैव। माध्वभाष्ये तदीयषष्ठाधिकरणस्य रचनाया दोषः, चतुर्थसामान्यनियमात्, पञ्चमविशेषनियमाच्च ।

( ७ ) "भाक्तं वाऽनात्मवित्त्वात् तथाहि दर्शयति" ३।१।७ (२९८) इति सूत्रे "भाक्तम्" इति प्रथमान्तपदसत्त्वेऽपि प्रसङ्गान्तरत्वाबोधक-"वा"-शब्दवशात् तस्य निषेधः, चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च । माध्वभाष्ये तदीयसप्तमाधिकरणस्य रचनाया दोषः । परसूत्रे सर्वसम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्तिः सङ्गता । एवं च अस्मिन् अधिकरणे माध्वभाष्ये अधिकरणस्य रचनायां सप्त दोषाः भवन्ति ।

## द्वितीयं कृतात्ययाधिकरणम् ।

अत्र "कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च" ३।१।८ (२९९) इति सूत्रस्य "कृतात्यय"-शब्दात् अस्य "कृतात्ययाधिकरणं" नाम । तत्र माध्वभाष्यभिन्नेषु सर्वेषु भाष्येषु अस्मिन् अधिकरणे चत्वारि सूत्राणि गृहीतानि । माध्वभाष्ये अस्य प्रथमसूत्रस्य पूर्वार्द्धेन अष्टमम् अधिकरणं उत्तरार्द्धेन नवमम् अधिकरणं रचितम् इति दृश्यते । तानि च चत्वारि सूत्राणि

१ । "कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च" ३।१।८ (२९९)

२ । "चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः" ३।१।९ (३००)

३ । "आनर्थक्यमिति चेन्न तदपेक्षत्वात्" ३।१।१० (३०१)

४ । "सुकृतदुष्कृते एवेति तु बादरिः" ३।१।११ (३०२)

अत्र (१) "कृतात्यये अनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च" ३।१।८ (२९९) इति सूत्रे "अनुशयवान्" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्वम् उचितम्, चतुर्थसामान्यनियमात् । चकारात् न विधेयान्तरत्वे बाधा, त्रयोदशविशेषनियमात् । तथैव सर्वैः कृतं च । मध्वबलदेव-भाष्यद्वये "यथेतमनेवं च" इति अपरं सूत्रम् । तन्न युक्तम्, आरोहावरोहरूपगतिसामान्यस्य वर्णनेन विधेयाभेदात् । चतुर्थविशेषनियमात् ।

(२) "चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनि"। ३।१।९ (३००) इत्यत्र "उपलक्षणार्था" तथा "कार्ष्णाजिनि" इति प्रथमा तपन्द्वयसत्त्वेऽपि (चतुर्थसामान्यनियमात्), "इति चेन्न" इति पदात् पञ्चमविशेषनियमात्, तथा तेन सिद्धान्तानुकूलमतान्तरप्रदर्शनात्, दशमविशेषनियमात् नात्र अधिकरणारम्भ संगत । माध्वभाष्ये अधिकरणरचनायां तेन च तदीयदशमाधिकरणस्य सूत्रत्रयमध्ये अस्य प्राथम्यात् दोष ।

(३) "आनर्थक्यमिति चेन्न तदपेक्षत्वात्" ३।१।१० (३०१) इत्यत्र "आनर्थक्यम्" इति प्रथमान्तपदसत्त्वेऽपि (चतुर्थसामान्यनियमात्) 'इति चेन्न' इति पदात् पञ्चमविशेषनियमात् नास्य अधिकरणारम्भकत्वम् ।

(४) "सुकृतदुष्कृते एवेति तु बादरि" ३।१।११ (३०२) इत्यत्र "सुकृतदुष्कृते" इति प्रथमान्तपदसत्त्वेऽपि "बादरि" इति अनेन स्वसिद्धान्तानुकूलमतान्तरनिर्देशात् विषयान्तराभेदाच्च, तथा तु शब्दयोगाच्च नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात्, तथा नवमदशमविशेषनियमाभ्याम् । परमूत्रे सर्वसम्मत्या अधिकर आरम्भात्, अत्रैव अधिकरणसमाप्ति स्यात् ।

## तृतीयम् अनिष्टादिकार्यधिकरणम्

अत्र "अनिष्टादिकारिणामपि च श्रुतम्" ३।१।१२ (३०३) इति सूत्रस्य "अनिष्टादिकारिणाम्" इति पदात् अस्य "अनिष्टादिकार्यधिकरणं" नाम । तत्र मध्व-वल्लभ-भिन्नेषु सर्वेषु भाष्येषु दश सूत्राणि गृहीतानि । माध्वभाष्ये तत्रैयैकादशाधिकरणे सूत्रत्रयं वल्लभ-भाष्ये तु सूत्रनवकम् इति भेद । तानि च दश सूत्राणि—

| | |
|---|---|
| १। "अनिष्टादिकारिणामपि च श्रुतम्" ३।१।१२ (३०३) | ६। "विद्याकर्मणोरिति तु प्रकृतत्वात्" ३।१।१७ (३०८) |
| २। "संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्" ३।१।१३ (३०४) | ७। "न तृतीये तथोपलब्धे" ३।१।१८ (३०९) |
| ३। "स्मरन्ति च" ३।१।१४ (३०५) | ८। "स्मर्यतेऽपि च लोके" ३।१।१९ (३१०) |
| ४। "अपि च सप्त" ३।१।१५ (३०६) | ९। "दर्शनाच्च" ३।१।२० (३११) |
| ५। "तत्रापि च तद्व्यापारादविरोध" ३।१।१६ (३०७) | १०। "तृतीयशब्दावरोध संशोकजस्य" ३।१।२१ (३१२) |

तत्र (१) अनिष्टादिकारिणामपि च श्रुतम्" ३।१।१२ (३०३) इत्यत्र "श्रुतम्" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तम् । चतुर्थसामान्यनियमात् । तथैव इत सर्वैश्च "अपि च" पदाभ्यां विधेयान्तरस्य बोधनात्, द्वादशविशेषनियमाच्च ।

(२) "संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्" ३।१।१३ (३०४) इत्यत्र "आरोहावरोहौ" इति प्रथमान्तपदसत्त्वात् चतुर्थसामान्यनियमात् अधिकरणम् आरभणीयम् ।

परन्तु तु-शब्दयोगात् तस्य निषेध । तु-शब्दस्य पूर्वपक्षनिषेधार्थत्वेऽपि उक्तपूर्वपक्षत्वात् । अष्टादशविशेषनियमात् ।

( ३ ) "स्मरन्ति च" ३।१।१४ (३०५) इत्यत्र प्रथमान्तपदाभावात् चकारसत्त्वाच्च नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात् षष्ठविशेषनियमाच्च ।

( ४ ) "अपि च सप्त" ३।१।१५ (३०६) इत्यत्र "सप्त" इति प्रथमान्तपदसत्त्वात् अधिकरणारम्भकत्वं स्यात्, किन्तु अपि-पदात् चकारसत्त्वाच्च नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात्, षष्ठत्रयोदशविशेषनियमाभ्याम् । माध्वभाष्ये तदीयद्वादशाधिकरणस्य आरम्भात् दोषः ।

( ५ ) "तत्रापि च तद्व्यापारादविरोध." ३।१।१६ (३०७) इत्यत्र "अविरोध." इति प्रथमान्तपदसत्त्वात् अधिकरणारम्भकत्व युक्तम्, परन्तु चकारस्य सत्वात् तस्य निषेध', चतुर्थसामान्यनियमात् षष्ठविशेषनियमाच्च । माध्वभाष्ये तदीयत्रयोदशाधिकरणस्य आरम्भात् दोष. । अविरोधपदात् अपि निषेधः । सप्तमविशेषनियमात् ।

( ६ ) 'विद्याकर्म्मणोरिति तु प्रकृतत्वात्" ३।१।१७ (३०७) इत्यत्र प्रथमान्तपदाभावात् तथा तु-शब्दयोगाच्च नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात्, नवमविशेषनियमाश्च । माध्वभाष्ये तदीयचतुर्दशाधिकरणस्य आरम्भात् तथा वल्लभभाष्ये तदीयचतुर्थाधिकरणस्य आरम्भात् तयोरेव दोषः ।

( ७ ) "न तृतीये तथोपलब्धे." ३।१।१८ (३०९) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वं, चतुर्थसामान्यनियमात् । माध्वभाष्ये तदीयपञ्चदशाधिकरणस्य आरम्भात् दोष. ।

( ८ ) "स्मर्य्यतेऽपि च लोके" ३।१।१९ (३१०) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च । अत्र ऐकमत्यं च सर्वेषाम् ।

( ९ ) "दर्शनाच्च" ३।१।२० (३११) इत्यत्रापि तथैव । चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च ।

( १० ) "तृतीयशब्दावरोध' संशोकजस्य" ३।१।२१ (३१२) इत्यत्र "तृतीयशब्दावरोध" इति प्रथमान्तपदात् अधिकरणारम्भकत्वम् अस्य युक्त, किन्तु सप्तमसूत्रे "न तृतीये तथोपलब्धे" इति तृतीयशब्दस्य उक्तत्वात् अस्य साकाङ्क्षत्व सिद्ध्यति । अत' अधिकरणारम्भकत्वम् अस्य न युज्यते, चतुर्थसामान्यनियमात् । वल्लभभाष्ये तदीयपञ्चमाधिकरणस्य आरम्भात् तस्य दोष । परसूत्रे प्रायेण सर्वै. अधिकरणस्य रचणात् अत्रैव अधिकरणसमाप्ति. संगच्छते । एवं च अस्मिन् अधिकरणे अधिकरणरचनाया मध्वस्य चत्वार दोषा., वल्लभस्य दोषद्वयम् ।

## चतुर्थं स्वाभाव्यापत्त्यधिकरणम्

अत्र "तत्साभाव्यापत्तिरुपपत्ते" ३।१।२२ (३१३) इति सूत्रस्य "साभाव्यापत्ति" इति पदात्

अस्य "स्वाभाव्यापत्त्यधिकरणं" नाम । तत्र निम्बार्क-वल्लभभिन्नेषु सर्वेषु एतेषु भाष्येषु एकेनैव सूत्रेण एतदधिकरण रचितम् । निम्बार्कभाष्ये पञ्सूत्राणि गृहीतानि । वल्लभभाष्ये तु तदीय पञ्चमाधिकरणस्य सूत्रत्रयमध्ये एतद्धि द्वितीयं सूत्रम् ।

अत्र "तत्स्वाभाव्यापत्ति" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्व युक्तं, चतुर्थ सामान्यनियमात । वल्लभभाष्ये तु अधिकरणस्य अनारम्भात् तस्य दोष । परसूत्रे अधिके भाष्यकारैः अधिकरणस्य रचनायाम् अत्र अधिकरणसमाप्ति सगच्छते ।

## पञ्चम नातिचिराधिकरणम्

अत्र "नातिचिरेण विशेषात' ३।१।२३ (३१४) इति सूत्रस्य "नातिचिरेण" पदेन अस्य "नातिचिराधिकरणं" नाम । तत्र निम्बार्क-वल्लभ-भाष्यभिन्नेषु सर्वत्र एतम् एकमेव सूत्रम् अत्र गृहीतम् । निम्बार्कभाष्ये एतद्धि तदीयचतुर्थाधिकरणस्य पञ्सु सूत्रेषु द्वितीयं सूत्रम् । वल्लभभाष्ये एतच्च तदीयपञ्चमाधिकरणस्य सूत्रत्रयमध्ये तृतीय सूत्रम् । तेन निम्बार्क-वल्लभ-भाष्यद्वय मध्ये अनेन अधिकरणस्य अनारम्भात तयोरेव दोष ।

अत्र प्रथमान्तपदाभावात नास्य अधिकरणारम्भकत्वं, चतुर्थसामान्यनियमात, परन्तु अष्टानां भाष्याणां मध्ये षट्सु भाष्येषु तथाकृतत्वात् पूर्वसूत्रात तत्साभाव्यापत्ति इति प्रथमान्तपदम् अदित्वा समर्थनीयम् इति उचितम । पञ्चमसामान्यनियमात् । तथा सति विधेयभेदात अनेन अधिकरणारम्भ संगच्छते, एकार्थाविरोधनियमात । परसूत्रे सर्वैः अधिकरणस्य आरब्धत्वात् अत्रैव तस्य समाप्ति कल्प्यते ।

## षष्ठम् अन्याधिष्ठिताधिकरणम्

अत्र "अन्याधिष्ठितेषु पूर्ववदभिलापात्" ३।१।२४ (३१५) इति सूत्रस्य "अन्याधिष्ठित"-पदात् अस्य "अन्याधिष्ठिताधिकरणं" नाम । तत्र शंकर-रामानुज-श्रीकण्ठ-श्रीपति-भाष्येषु चत्वारि सूत्राणि गृहीतानि, भास्करभाष्ये सूत्रत्रयम्, "योनेः शरीरम्" इति सूत्रस्य वर्जनात्, निम्बार्क-भाष्ये एतत् सूत्रं तदीयचतुर्थाधिकरणस्य पञ्सु सूत्रेषु तृतीय सूत्रम् । माध्वभाष्ये तदीयाष्टादशाधिकरणस्य सूत्रद्वयमध्ये एतद्धि प्रथमं सूत्रम् । वल्लभभाष्ये तदीयषष्ठाधिकरणस्य सूत्रद्वयमध्ये प्रथमं सूत्रम । तानि च चत्वारि सूत्राणि—

| | |
|---|---|
| १ । "अन्याधिष्ठितेषु पूर्ववदभिलापात" ३।१।२४ (३१५) | ३ । "रेतःसिग्योगोऽथ" ३।१।२६ (३१७) |
| २ । "अशुद्धमिति चेन्न शब्दात्" ३।१।२५ (३१६) | ४ । 'योनेः शरीरम्" ३।१।२७ (३१८) |

अत्र (१) 'अन्याधिष्ठितेषु पूर्ववदभिलापात्" ३।१।२४ (३१५) इत्यत्र प्रथमान्तपदाभावात नास्य अधिकरणारम्भकत्वं युक्तम्, चतुर्थसामान्यनियमात, तथापि अधिकैः तथा कृतम्,

अतः "तत्सामान्यापत्ति." इत्येकस्य पदस्य अनुपगं कृत्वा अनेन अधिकरणारम्भः करणीय । पञ्चमसामान्यनियमात् एकादशविशेषनियमाच्च । निम्बार्कभाष्ये तस्य अकरणात् दोषः ।

( २ ) "अशुद्धमिति चेन्न शब्दात्" ३।१।२५ (३१६) इत्यत्र "अशुद्धम्" इति प्रथमान्तपदसत्त्वेऽपि "इति चेन्न" पदसत्त्वात् नास्य अधिकरणारम्भकत्वं युक्तं पञ्चमविशेषनियमात् ।

( ३ ) 'रेतःसिग्योगोऽथ" ३।१।२६ (३१७) इत्यत्र "रेतःसिग्योग" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तम्, चतुर्थसामान्यनियमात् । तथापि अधिकैः तथा न कृतम् । अत. "अथ"-शब्दस्य आनन्तर्य्यार्थत्वात् अस्य साकांक्षत्वं कल्पयित्वा तत्र युक्तमिति मन्तव्यम्; सप्तमविशेषनियमात् । मध्व-वल्लभ-भाष्यद्वयमध्ये अधिकरणस्य रचनायां तयोरेव दोष. ।

( ४ ) "योने शरीरम्" ३।१।२७ (३१८) इत्यत्र "शरीरम्" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं कल्पनीयम्, तथापि मध्वभिन्नेन केनापि तथा न कृतम्, अत योने-शब्दात् पूर्वसूत्रस्थरेत.-शब्दात् च साकांक्षत्वं कल्पयित्वा अधिकरणस्य अनारम्भः युक्तः, चतुर्थसामान्यनियमात् इति एव समुचितम् । अत माध्वभाष्ये दोष । भास्करभाष्ये युक्तिमात्रस्य बलेन एतत् सूत्रं परित्यक्तं, प्राचीनप्रमाणप्रदर्शनं विनैव ।

## नवमपाद-समालोचनम्

इदानीं द्रष्टव्यम् अनेन निबन्धेन अस्मिन् पादे अधिकरणरचनाया

१ । कति कीदृशाश्च नियमाः अत्र सङ्कलिता

२ । कति च दोषा. कस्य भाष्यस्य कथं संवृत्ताः

३ । काश्च श्रुतय कैश्च सूत्रै उपजीव्यत्वेन गृहीता

४ । उपजीव्यश्रुतिबलेन कीदृशी च पादसंगतिर्भवितुम् उचिता इति ।

एते च चत्वार विषयाः अधस्तात् क्रमेण प्रदर्श्यन्ते, तत्र प्रथमं तावत्—

### ( १ ) कति कीदृशाश्च नियमा अत्र संकलिताः ।

परंतु अत्र न कोऽपि नूतनो नियमः सङ्कलित । अत विषयान्तरम् आलोच्यम् ।

### ( २ ) कति च दोषाः कस्य भाष्यस्य कथं संवृत्ता ।

तत्र ३।१।१ अधिकरणे माध्वभाष्ये "त्र्यात्मकत्वात् तु भूयस्त्वात्" इति ३।१।२ सूत्रे अधिकरणरचनाया दोष ।

तत्रैव माध्वभाष्ये "प्राणगतेश्च" इति ३।१।३ सूत्रे अधिकरणरचनायां दोष. ।

तत्रैव माध्वभाष्ये "अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्" इति ३।१।४ सूत्रे अधिकरणस्य रचनाया दोष ।

तत्रैव माध्वभाष्ये "प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्ते." इति ३।१।५ सूत्रे अधिकरणस्य रचनाया दोष ।

तत्रैव माध्वभाष्ये "अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीते" इति ३।१।६ सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव माध्वभाष्ये "भाक्तं वाऽनात्मविच्वात् तथाहि दर्शयति" इति ३।१।७ सूत्रे अधिकरणस्य रचनायां दोष ।

३।१।२ अधिकरणे माध्वभाष्ये "चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनि" इति ३।१।९ सूत्रे अधिकरणस्य रचनायां दोष ।

३।१।३ अधिकरणे माध्वभाष्ये "अपि च सप्त" इति ३।१।१५ सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव माध्वभाष्ये "तत्रापि च तद्व्यापारादविरोध" इति ३।१।१६ सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव मध्व-वल्लभ-भाष्ययो 'विद्याकर्मणोरिति तु प्रकृतत्वात" इति ३।१।१७ सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव माध्वभाष्ये "न तृतीये तथोपलब्धते" इति ३।१।१८ सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव वल्लभभाष्ये "तृतीयशब्दावरोध संशोकजस्य" इति ३।१।२१ सूत्रे अधिकरणस्य रचनायां दोष ।

३।१।४ अधिकरणे वल्लभभाष्ये 'तत्साभाव्यापत्तिरुपपत्ते" इति ३।१।२२ सूत्रे अधिकरणस्य अरचनायां दोष ।

३।१।५ अधिकरणे मध्व-वल्लभ-भाष्ययो "नातिचिरेण विशेषात्" इति ३।१।२३ सूत्रे अधिकरणस्य अरचनायां दोष ।

३।१।६ अधिकरणे निम्बार्कभाष्ये "अन्याधिष्ठितेषु पूर्ववदभिलापात्" इति ३।१।२४ सूत्रे अधिकरणस्य अरचनायां दोष ।

३।१।६ अधिकरणे मध्व-वल्लभ-भाष्ययो 'रेत सिग्योगोऽथ' इति ३।१।२६ सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव "योने शरीरम्" इति ३।१।२७ सूत्रे मध्वभाष्ये अधिकरणस्य रचनायां दोष ।

एवं च पादेऽस्मिन् भाष्याणां दोषसमाहारे कृते दृश्यते—

| भाष्यनाम | अधिकरणस्य अरचनायां | अधिकरणस्य रचनायां |
|---|---|---|
| माध्वभाष्ये | १ दोष | १२ दोषा |
| निम्बार्कभाष्ये | १ " | ० " |
| वल्लभभाष्ये | २ दोषौ | ३ " |

"संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्" ३।१।१३ इति सूत्रे 'अयं लोको नास्ति पर इति मानी पुनः पुनः वशमापद्यते मे"। (कठ २।६)

'विद्याकर्मणोरिति तु प्रकृतत्वात्" ३।१।१७ इति सूत्रे अथ एतयोः पथोर्न कतरेणचन तानि इमानि क्षुद्राणि असकृत् आवर्तीनि भूतानि भवन्ति" (छा ५।१०।८) 'चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौ १।२)

"न तृतीये तथोपलब्धेः" ३।१।१८ इति सूत्रे "पञ्चम्याम आहुतौ आपः पुरुषवचसो भवन्ति" (छा ५।९।१) "जायस्व म्रियस्व इति एतत् तृतीयं स्थानम्" (छा ५।१०।८)

"तृतीयशब्दावरोधः संशोकजस्य" ३।१।२१ इति सूत्रे "त्रीण्येव बीजानि भवन्ति आण्डजं जीवजम् उद्भिज्जम्" (छा ६।३।१)

चतुर्थाधिकरणे—

"तत्स्वाभाव्यापत्तिरुपपत्तेः" ३।१।२२ इति सूत्रे "अथ एतमेव अध्वानं पुनः निवर्तन्ते यथेतम् आकाशम आकाशाद् वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वा अभ्रं भवति, अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति" (छा ५।१०।५)

पञ्चमाधिकरणे—

नातिचिरेण विशेषात्" ३।१।२३ इति सूत्रे "अतो वै खलु दुर्निष्प्रपतरम्" (छा ५।१०।६)

षष्ठाधिकरणे—

"अन्याधिष्ठितेषु पूर्ववदभिलापात्" ३।१।२४ इति सूत्रे "त इह व्रीहियवा ओषधिवनस्पतयः तिलमाषा इति जायन्ते" (छा ५।१०।६) 'रमणीयचरणाः" (छा ५।१०।७)

"रेतःसिग्योगोऽथ" ३।१।२६ इति सूत्रे "यो रेतः सिञ्चति तद्भूय एव भवति" (छा ५।१०।६)

"योनेः शरीरम्" ३।१।२७ इति सूत्रे 'रमणीयचरणा" (छा ५।१०।७) इति।

इदानीं द्रष्टव्यम् एतादृशसूत्रोपजीव्यश्रुतिबलेन—

**( ४ ) कीदृशी अस्य पादसङ्गतिः भवितुम् उचिता ।**

उदाहृतश्रुतिसन्दर्भेण जीवानां परलोकगमनप्रकार, संसारे पुनरागमनक्रम, तथा तदनुयायिकर्मणां स्वरूपादिकं च अवगम्यते । एवं च जीवानां गत्यागतिपर्य्यालोचनस्य देहात्मनो भेदज्ञानं कर्मफलभोगे अनित्यताबोधः ततश्च वैराग्योदय, तेन नित्यात्मज्ञानाभिलाषस्य स्वाभाविकं फलम् । अतः एतदेव एतद्ब्रह्मताप्रत्यर्थम्भूताद्वैतब्रह्मज्ञानसाधनस्य प्रथमं

मोशनम् । अतएव एतदध्यायस्य साधनाध्याय नाम भवितुम् अर्हति । परलोकगमनागमनादिप्रकारवर्णनस्य आपातदृष्ट्या फलाध्यायविषयत्वेऽपि नात्र अप्रासंगिकत्वम् अप्रामाणिकत्वं वा कल्पनीयम् ।

इदानीं द्रष्टव्यम् विभिन्नभाष्यमध्येषु कथमेतत् उपस्थापित भाष्यकृद्भिः इति । तत्र

शङ्करमते जीवस्य परलोकगमनागमनविचारपूर्वकवैराग्यनिरूपणरूपसाधननिर्देश ।

भास्करमते प्रायेण तथैव ।

रामानुजमते जाग्रदाद्यवस्थावस्थितस्य जीवस्य दोषादिनिरूपणम् ।

निम्बार्कमते ससारस्य दोषनिरूपणेन ततो विरक्तिप्रदर्शनम् ।

माध्वमते वैराग्यार्थं गत्यादिनिरूपणम् ।

श्रीकण्ठमते उपासकस्य नित्यत्वादियुक्तस्य जीवस्य गत्यागतिनिरूपणम् ।

श्रीकरमते जीवस्य लोकान्तरगमनागमनविचार ।

एतेषां तात्पर्य्यपर्य्यालोचने कृते भाष्याणां मतभेद नाममात्रे पर्य्यवस्यति । अत एतत्पादप्रतिपाद्य तथा च अस्य पादसगतिः वैराग्यनिरूपणरूपा एव वक्तुं शक्यते । एतदनुसारेण च एतत्पादीयाधिकरणानि सूत्राणि व्याख्येयानि । इति नवमपादसमालोचनम् ।

इति तृतीयाध्याये प्रथमपादोपसहार ।

(२) "निर्मातारं चैके पुत्रादयश्च" ३।२।२(३२०) इत्यत्र "पुत्रादय" इति प्रथमान्तपद-सत्त्वेऽपि चकारयोगात् तन्निषेध । चतुर्थसामान्य-षष्ठविशेषनियमाभ्याम् ।

(३) "मायामात्रं तु कार्त्स्न्येन अनभिव्यक्तस्वरूपत्वात्" ३।२।३ (३२१) इत्यत्र "मायामात्रम्" इति प्रथमान्तपदसत्त्वेऽपि निश्चयार्थक तु शब्दयोगात् अधिकरणारम्भनिषेध, उक्त पूर्वपक्षत्वात् । चतुर्थसामान्यनियमात् तथा अष्टमविशेषनियमात् ।

(४) "सूचकश्च हि श्रुतेराचक्षते च तद्विद" ३।२।४ (३२२) इत्यत्र 'सूचक' तथा 'तद्विद' इति प्रथमान्तपदसत्त्वेऽपि चकारयोगात् अधिकरणारम्भनिषेध । चतुर्थसामान्य-नियमात्, षष्ठविशेषनियमाच्च ।

(५) "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" ३।२।५ (३२३) इत्यत्र "तिरोहितं" तथा "बन्धविपर्ययौ" इति प्रथमान्तपदसत्त्वेऽपि सकोचार्थक-तु-शब्दयोगात् अधिकरणारम्भनिषेध । चतुर्थसामान्यनियमात्, नवमविशेषनियमाच्च । माध्वभाष्ये इति एकेन सूत्रेण तद्वीयद्वितीयाधिकरणरचनायां दोष ।

(६) "देहयोगाद् वा सोऽपि" ३।२।६ (३२४) इत्यत्र "स" इति प्रथमान्तपदसत्त्वेऽपि "अपि" शब्दयोगेन साकाङ्क्षत्वसिद्धे अधिकरणारम्भनिषेध । चतुर्थसामान्यनियमात्, तथा षष्ठविशेषनियमात् । माध्वभाष्ये इति एकेन सूत्रेण तन्मीयतृतीयाधिकरणस्य रचनात् तस्य दोष । परन्तु सर्वेषु भाष्येषु अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति ।

## द्वितीय तदभावाधिकरणम्

अत्र 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च" ३।२।७ (३२५) इति सूत्रस्य "तदभाव" इति पदात् अस्य "तदभावाधिकरणं" नाम । तत्र शंकर-भास्कर-रामानुज-श्रीकण्ठ-श्रीपति-भाष्येषु सूत्रद्वय, निम्बार्कभाष्ये सूत्रत्रयं, माध्व-वल्लभ-भाष्ययो इदम् एकमेव सूत्रम्, तत्रापि माध्वमतेन अत्र चतुर्थाधिकरणम् आरभ्यते इति । तत्र सूत्रद्वय यथा—

१ । "तदभावो नाडीषु तच्छ्रुतेरात्मनि च" ३।२।७ (३२५)

२ । "अत प्रबोधोऽस्मात्" ३।२।८ (३२६)

तत्र (१) "तदभावो नाडीषु तच्छ्रुतेरात्मनि च" ३।२।७ (३२५) इत्यत्र "तदभाव" इति प्रथमान्तपदात् अनेन अधिकरणारम्भ युज्यते एव । तथैव सर्वैः कृतम् । चकारेण विशेषमेवसूचनात् हेतो समुच्चयात् वा न तेन व्याघात । चतुर्थसामान्यनियमात् तथा त्रयोदशविशेषनियमाच्च ।

(२) "अत प्रबोधोऽस्मात्" ३।२।८ (३२६) इत्यत्र "प्रबोध" इति प्रथमान्तपदस्य सत्त्वात् यद्यपि पृथगधिकरणारम्भ युक्त एव, तथापि "अत" इति पदेन साकाङ्क्षत्वस्य सूचनात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात्, तथा "अत"—"अस्मात्" इति पदात् साकाङ्क्षत्व

विधानात्, अष्टमविशेषनियमात् च। माध्वभाष्ये तदीयपञ्चमाधिकरणस्य आरम्भात्, तथा वल्लभभाष्ये तदीयतृतीयाधिकरणस्य सूचनात् तयोरेव दोषः। परसूत्रेण षट्सु सूत्रेषु पृथगधिकरणस्य रचितत्वात् अत्रैव अधिकरणसमाप्तिः सगता एव।

## तृतीयं कर्मानुस्मृतिशब्दविध्यधिकरणम्

अत्र "स एव तु कर्मानुस्मृतिशब्दविधिभ्यः" ३।२।९ (३२७) इति सूत्रस्य "कर्मानुस्मृतिशब्दविधि" इति पदात् अस्य "कर्मानुस्मृतिशब्दविध्यधिकरण" नाम। तत्र शंकर-भास्कर-रामानुज-मध्व-श्रीकण्ठ-श्री-पति-भाष्येषु अनेन एकेनैव सूत्रेण एतदधिकरणं रचितम्। तत्र माध्वभाष्ये एतद्धि षष्ठम् अधिकरणम्, निम्बार्कभाष्ये एतद्धि तदीयद्वितीयाधिकरणस्य सूत्रत्रयमध्ये तृतीयं सूत्रम्, तथा वल्लभभाष्ये एतद्धि तदीयतृतीयाधिकरणस्य सूत्रत्रयमध्ये द्वितीयं सूत्रम् इति भेदः।

अत्र 'स' इति प्रथमान्तपदात् अत्र अधिकरणारम्भः सगतः। चतुर्थसामान्यनियमात्। तु-शब्दः नात्र बाधकः अनिषेधार्थकत्वात् तस्य, अष्टादशविशेषनियमात्।

निम्बार्क-वल्लभभाष्यद्वये तु पृथगधिकरणं न रचितम्। तेन तयोः अधिकरणस्य अरचनायाः दोषः।

अत्र (१) "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" ३।२।११ (३२०) इत्यत्र "उभयलिङ्गम्" इति प्रथमान्तत्वात् अत्र अधिकरणारम्भ युक्त एव। चतुर्थसामान्यनियमात् अपि पञ्चविधविषयभेदस्य सूचकत्वात्। द्वा[illegible] विशेषनियमात्।

(२) "न भेदादिति चेन्न प्रत्येकमतद्वचनात्" ३।२।१२(३२०)इत्यत्र प्रथमान्तत्वाभावात् चतुर्थसामान्यनियमात् तथा "इति चेन्न" पदात्, पञ्चमविशेषनियमात् नास्य अधिकरणारम्भकत्वम्।

(३) "अपि चैवमेके" ३।२।१३ (३२१) इत्यत्र "एके" इति प्रथमान्तपदसत्त्वेऽपि "अपि च एवम्" इति पदसत्त्वात् अस्य साकाङ्क्षत्वं स्पष्टम्, अत अस्य नाधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात् तथा षष्ठविशेषनियमात्।

(४) "अरूपवदेव हि तत्प्रधानत्वात्" ३।२।१४ (३२२) इत्यत्र "अरूपवत्" इति पदात् परत्रचित प्रथमान्तपदस्य अध्याहार्यत्वेऽपि "हि" शब्देन तथा "तत्" शब्देन साकाङ्क्षत्वस्य प्रसंगात् नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात् षष्ठविशेषनियमाच्च। माध्वभाष्ये अधिकरणारम्भात् तथा च तदीयनवमाधिकरणस्य चतुर्षु सूत्रेषु अस्य प्राथम्यात् तस्यैव दोष। तथैव वल्लभभाष्ये अधिकरणारम्भात् तथाच तदीयसप्तमाधिकरणस्य पञ्चसु सूत्रेषु अस्य प्राथम्यात् तस्यापि दोष। अत्र भास्करभाष्ये "अस्थूलमनण्वह्रस्वमदीर्घमशब्दमस्पर्शमरूपमव्ययम्" इति एकम् अतिरिक्तम् सूत्रं पठितम्, तेन तन्मते अस्मिन् अधिकरणे द्वादश सूत्राणि भवन्ति, तथैव तत्र प्रथमान्तपदसत्त्वात् अधिकरणारम्भश्च संगच्छते, परन्तु तत्र तत्र छन्द-मिति दृश्यते। अत तन्मते अत्र अधिकरणस्य अरचनायां तस्य अयमेक अतिरिक्त दोष संजात। तथापि सूत्रमेतत तस्य भाष्यांश एव इति अनुमीयते, लिपिकरप्रमादात् सूत्रत्वेन गृहीत इत्येव सम्भवति।

(५) "प्रकाशवच्चावैयर्थ्यम्" ३।२।१५ (३२३) इत्यत्र "अवैयर्थ्यम्" इति प्रथमान्तपदात् अत्र अधिकरणारम्भ संगच्छते, चतुर्थसामान्यनियमात्, परन्तु चकारपाठात् तस्य निषेध

कल्पते, षष्ठविशेषनियमात् । भ-रा-नि-श्री-श्रीप-वि-पाठे एतस्य अधिकरणारम्भशङ्कापि नोदेति । अत्र 'वैयर्थ्यात्' इत्यपि पाठ शङ्करभाष्ये पाठान्तररूपेण दृश्यते ।

( ६ ) "आह च तन्मात्रम्" ३।२।१६ (३२४) इत्यत्र "तन्मात्रम्" इति प्रथमान्तपदसत्त्वेऽपि चकार-योगात् अधिकरणारम्भनिषेध । चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च ।

( ७ ) "दर्शयति चाथो अपि स्मर्यते" ३।२।१७ (३२५) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात, षष्ठविशेषनियमाच्च ।

( ८ ) "अतएव चोपमा सूर्यकादिवत्" ३।२।१८ (३२६) इत्यत्र "उपमा" इति प्रथमान्तपदस्य सत्त्वात् यद्यपि अधिकरणारम्भः सगत, चतुर्थसामान्यनियमात्, तथापि चकार-योगात् तन्निषेध कल्पनीय, षष्ठविशेषनियमात् । माध्वभाष्ये अनेन अधिकरणारम्भात् दोष । तत्र एतत् तदीयदशमाधिकरणस्य एकमेव सूत्रं च ।

( ९ ) "अम्बुवदग्रहणात् तु न तथात्वम्" ३।२।१९ (३२७) इत्यत्र "तथात्वम्" इति प्रथमान्तपदसत्त्वेऽपि अनिषेधार्थक-तु-शब्दात् अधिकरणारम्भनिषेध । चतुर्थसामान्यनियमात, नवमविशेषनियमाच्च । मध्ववल्लभभाष्ययो अधिकरणारम्भात् तयोरेव दोष । माध्वमते एतत् सूत्रं तदीयैकादशाधिकरणस्य एकमेव सूत्रम् । वल्लभमते तु तदीयषष्ठाधिकरणस्य चतुर्षु सूत्रेषु एतद्धि प्रथम सूत्रम् ।

( १० ) "वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्" ३।२।२०(३२८)इत्यत्र "वृद्धिह्रासभाक्त्वम्" इति प्रथमान्तपदसत्त्वेऽपि चतुर्थसामान्यनियमात् तथा "एव" पदेन साकाङ्क्षत्व-प्रसगात् नास्य अधिकरणारम्भकत्वं युक्तम्, सप्तमविशेषनियमात । माध्वभाष्ये अधिकरणारम्भात तस्य दोषप्रसग । तत्र एतत् सूत्र तदीयद्वादशाधिकरणस्य सूत्रद्वयमध्ये प्रथम सूत्रम् । रा-श्री-श्रीप-पाठे परसूत्रमपि एतस्य शेषत्वेन गृहीतम् । तन्न युक्तम्, परसूत्रे चकारेण हेतोर्विचारणीयविलक्षणस्य सूचनात । चतुर्थविशेषनियमात ।

तथा पञ्च सूत्राणि गृहीतानि । रामानुज-निम्बार्क-वल्लभभाष्येषु अधिकरणं न रचितम् । तत्र रामानुजमते एतत् सूत्रं तदीयपञ्चमाधिकरणस्य पञ्चदशसु सूत्रेषु एकादशसूत्रम्, निम्बार्कमते तदीयचतुर्थाधिकरणस्य विंशतिसंख्यकेषु सूत्रेषु द्वादशं सूत्रं, तथैव वल्लभभाष्ये तदीयपञ्चाधिकरणस्य चतुर्षु सूत्रेषु चतुर्थं सूत्रम् । तत्र रा-नि-व-भाष्येषु अधिकरणस्य अरचनायां दोष । तानि च नव सूत्राणि—

| | |
|---|---|
| १ । "प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय" ३।२।२२ (३४०) | ५ । "अतोऽनन्तेन तथा हि लिङ्गम्" ३।२।२६ (३४४) |
| २ । "तदव्यक्तमाह हि" ३।२।२३ (३४१) | ६ । "उभयव्यपदेशात् त्वहिकुण्डलवत्" ३।२।२७ (३४५) |
| ३ । "अपि च संराधने प्रत्यक्षानुमानाभ्याम्" ३।२।२४ (३४२) | ७ । "प्रकाशाश्रयवद् वा तेजस्त्वात्" ३।२।२८ (३४६) |
| ४ । "प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ३।२।२५ (३४३) | ८ । "पूर्ववद् वा' ३।२।२९ (३४७) |
| | ९ । "प्रतिषेधाच्च' ३।२।३० (३४८) |

तत्र ( १ ) "प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय" ३।२।२२ (३४०) इत्यत्र "प्रकृतैतावत्त्वम्" इति प्रथमान्तपदात् अनेन अधिकरणारम्भ युज्यते, चतुर्थसामान्यनियमात् । हि-कार च-कारश्च नात्र विधेयान्तरस्य वाचकौ, द्वादश-त्रयोदश विशेषनियमाभ्याम्, विषयश्रुति भेदात् एकादश-विशेष-नियमाच्च । तेन रा-नि-व-भाष्येषु अधिकरणस्य अरचनायां दोष । विधेयान्तरत्वस्य अनङ्गीकारे तेषाम् अदोषत्वं स्यात्, शिष्टानां पञ्चानां भाष्याणामेव दोष भवेत् । परन्तु विषयश्रुतिभेद तन्मतेऽपि स्वीकृत । अतो न शिष्टा दुष्टा । अत्र चतुर्थ-सामान्य नियम तथा एकादश-द्वादश त्रयोदश-विशेष-नियमा द्रष्टव्या ।

( २ ) 'तदव्यक्तमाह हि" ३।२।२३ (३४१) इत्यत्र "तदव्यक्तम्" इति प्रथमान्तपदात् चतुर्थसामान्यनियमेन, अधिकरणम् आरम्भणीयं परन्तु हि-कारेण एतदर्थस्य साकाङ्क्षत्वेन षष्ठ विशेषनियमात् नास्य अधिकरणारम्भकत्वम् । माध्वभाष्ये तथा वल्लभभाष्ये अधिकरणस्य आरम्भात् तयोरेव दोष । एतत् सूत्रम् माध्वभाष्ये तदीयचतुर्दशाधिकरणस्य पञ्चसु सूत्रेषु प्रथमं सूत्रम्, वल्लभभाष्ये तु तदीय-सप्तमाधिकरणस्य सूत्रद्वयमध्ये द्वितीयं सूत्रम् ।

( ३ ) "अपि च संराधने प्रत्यक्षानुमानाभ्याम्" ३।२।२४ (३४२) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात्, षष्ठविशेषनियमात् च ।

( ४ ) "प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्" ३।२।२५ (३४३) इत्यत्र "अवैशेष्य" तथा "प्रकाश" इति प्रथमान्तपदद्वयात् अत्र अधिकरणारम्भ संगच्छते एव, चतुर्थ सामान्यनियमात्, तथापि च कारद्वयात् तन्निषेध, षष्ठविशेषनियमात् । वल्लभभाष्ये अधिकरणा

रम्भात् तथा च तदीयाष्टमाधिकरणस्य सूत्रत्रयमध्ये प्रथमसूत्रत्वेन ग्रहणात् तस्यैव दोषः। माध्वभाष्ये तथा वलदेवभाष्ये एतत् सूत्रं द्विधा विभक्त दृश्यते । "प्रकाशादिवच्चावैशेष्यम्" इति एकं सूत्रम्, शिष्टम् अपरम् । तन्न युक्तम् । प्रकाशश्च इति च-कारेण हेतो' विजातीय-वैलक्षण्यापत्तः । चतुर्थसामान्यनियमात् ।

( ५ ) "अतोऽनन्तेन तथाहि लिंगम्" ३।२।२६ (३४४) इत्यत्र "लिंगम्" इति प्रथमान्तपदात् अस्य अधिकरणारम्भः संगच्छते, चतुर्थसामान्यनियमात्, किन्तु "अत" "हि" इति शब्दद्वयेन तस्य साकांक्षत्वविधानात् षष्ठ-सप्तम-विशेष-नियमाभ्यां न तथा कर्त्तव्यम् ।

( ६ ) "उभयव्यपदेशात् त्वहिकुण्डलवत्" ३।२।२७ (३४५) इत्यत्र "अहिकुण्डल-वत्" इति पदात् कस्यचित् प्रथमान्तपदस्य अध्याहर्त्तव्यत्वेऽपि चतुर्थ-विशेष-नियमात् अनि-षेधार्थक-तु-शब्दात् तथा हि-शब्दात् अधिकरणारम्भस्य निषेध । षष्ठ-नवम-विशेष-नियमाभ्याम् । रामानुज-मध्व-श्रीपति-भाष्येषु अधिकरणस्य आरम्भात् तेषामेव दोष. वाच्य. । तत्र रामानुजभाष्ये एतत् सूत्रं तदीय-षष्ठाधिकरणस्य चतुर्षु सूत्रेषु प्रथमं, माध्वभाष्ये तदीय-पञ्चदशाधिकरणस्य सूत्र-चतुष्टयमध्ये एतद्धि प्रथमं सूत्रं, तथैव श्रीपति-भाष्ये तदीय-सप्तमाधिकरणस्य चतुर्षु सूत्रेषु एतच्च प्रथमं सूत्रं भवति ।

( ७ ) "प्रकाशाश्रयवद् वा तेजस्त्वात्" ३।२।२८ (३४६) इत्यत्र विकल्पार्थक-"वा"-शब्दयोगेन साकांक्षत्वविधानात् षष्ठविशेषनियमेन तथा "प्रकाशाश्रयवद्" इत्यनेन कस्यचित् प्रथमान्तपदस्य अध्याहर्त्तव्यत्वेऽपि चतुर्थसामान्यनियमात् अधिकरणारम्भनिषेध । वल्लभभाष्ये अनेन अधिकरणारम्भात्, तथा च तदीयभाष्ये नवमाधिकरणस्य सूत्रत्रयमध्ये एतस्य प्राथ-म्यात् तस्य दोष वक्तव्यः ।

( ८ ) "पूर्ववद् वा" ३।२।२९ (३४७) इत्यत्र तथैव । चतुर्थसामान्य-षष्ठविशेष-नियमाभ्याम् ।

( ९ ) "प्रतिषेधाच्च" ३।२।३० (३४८) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भ-कत्वं युक्तम्, चतुर्थसामान्यनियमात्, च-कारादपि निषेध', षष्ठविशेषनियमात् । परसूत्रे अधिक-सम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरण-समाप्ति. सगच्छते ।

## सप्तमं पराधिकरणम्

अत्र "परमतः सेतून्मानसंवन्धभेदव्यपदेशेभ्य." ३।२।३१ (३४९) इति सूत्रस्य "परम्" इति शब्दात् अस्य "पराधिकरण"-नाम । तत्र शङ्कर-रामानुज-वल्लभ-भाष्येषु सप्त सूत्राणि गृही-तानि, वल्लभस्य तु एतद्धि दशमम् अधिकरणम् । भास्करभाष्ये षट् सूत्राणि गृहीतानि, "स्थान-विशेषात् प्रकाशादिवत्" इति (३४) सूत्रस्य वर्जनात् । तथा निम्वार्कभाष्ये एकादश सूत्राणि, तस्य इद पञ्चमम् अधिकरणम्, माध्वभाष्ये सूत्रत्रय, तस्य एतत् षोडशम् अधिकरणम्, श्रीकण्ठभाष्ये

पञ्च सूत्राणि, तस्य च इदं सप्तमम् अधिकरणम्, तथा श्रीपतिभाष्ये पञ्च सूत्राणि, तस्य तु एतत् अष्टमम् अधिकरणम् । तानि च सप्त सूत्राणि—

१ । "परमत सेतून्मानसम्बन्धभेदव्यपदेशेभ्य" ३।२।३१ (३४९)
२ । "सामान्यात् तु" ३।२।३२ (३५०)
३ । "बुद्ध्यर्थ पादवत्" ३।२।३३ (३५१)
४ । "स्थानविशेषात् प्रकाशादिवत्" ३।२।३४ (३५२)
५ । "उपपत्तेश्च" ३।२।३५ (३५३)
६ । "तथान्यप्रतिषेधात्" ३।२।३६ (३५४)
७ । "अनेन सर्वगतत्व-मायाम-शब्दादिभ्य" ३।२।३७ (३५५)

अत्र (१) "परमत सेतून्मानसम्बन्धभेदव्यपदेशेभ्य" ३।२।३१ (३४०) इत्यत्र "परम्" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं सगतमेव, चतुर्थ-सामान्य-नियमात्, सर्वेषाम् ऐकमत्यं च । "अत" शब्दस्य अत्र हेतुवाचकत्वाभावात् न साकाङ्क्षत्व, सप्तम-विशेष नियमात् ।

(२) 'सामान्यात् तु" ३।२।३२ (३५०) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् चतुर्थसामान्यनियमात्, तु शब्दस्य उक्तपूर्वपक्षव्यावर्तकत्वात् नाधिकरणारम्भकत्वम्, अष्टादश-विशेषनियमात् । माध्वभाष्ये एतत्स्थले "दर्शनात्" इति सूत्रं पठ्यते ।

(३) "बुद्ध्यर्थ पादवत्" ३।२।३३ (३५१) इत्यत्र "बुद्ध्यर्थ" इति प्रथमान्तपदसत्त्वेऽपि अर्थत साकाङ्क्षत्वविधानात् नास्य अधिकरणारम्भकत्वम् । चतुर्थ-सामान्य-षष्ठ विशेष-नियमाभ्याम् ।

(४) "स्थानविशेषात् प्रकाशादिवत्" ३।२।३४ (३५२) इत्यत्र "प्रकाशादिवत्" इति पदात् प्रथमान्तपदस्य अध्याहर्तव्यत्वेऽपि अर्थत साकाङ्क्षत्वात् नास्य अधिकरणारम्भकत्वम्, चतुर्थ-सामान्य-षष्ठविशेष-नियमाभ्याम् । माध्वभाष्ये अधिकरणारम्भात् तस्य दोष । तन्मते एतत् दशाधिकरणस्य सूत्रद्वयमध्ये प्रथमं सूत्रम् । भास्करभाष्ये नैतत् सूत्रं पठ्यते ।

(५) "उपपत्तेश्च" ३।२।३५ (३५३) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात् । च कारादपि निषेध, षष्ठ विशेषनियमात् ।

(६) "तथान्यप्रतिषेधात्" ३।२।३६ (३५४) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् चतुर्थसामान्यनियमात् । मध्व-श्रीकण्ठ-श्रीपति-भाष्येषु तत्करणात् दोष । माध्वभाष्ये एतद्धि तदीयाष्टमाधिकरणस्य एकमेव सूत्रम । श्रीकण्ठभाष्ये तदीयाष्टमाधिकरणस्य सूत्रद्वयमध्ये प्रथमं सूत्रम्, तथा श्रीपतिभाष्ये तदीयनवमाधिकरणस्य सूत्रद्वयमध्ये एतत्तु प्रथमं सूत्रम् ।

(७) "अनेन सर्वगतत्वमायाम शब्दादिभ्य" ३।२।३७ (३५५) इत्यत्र "सर्वगतत्वम्" इति प्रथमान्तपदसत्त्वेऽपि "अनेन" इति पदेन साकाङ्क्षत्वविधानात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात् सप्तमविशेषनियमाच्च । परसूत्रे अधिकसम्मत्या अधिकरणारम्भात्

अत्रैव अधिकरणसमाप्तिः। माध्वभाष्ये अधिकरणारम्भात् तस्य दोषः। तत्र एतद्धि तदीयोनविंशाधिकरणस्य एकमेव सूत्रम्।

### अष्टमं फलाधिकरणम्।

अत्र 'फलमत उपपत्तेः" ३।२।३८ (३५६) इति सूत्रस्य "फल"-शब्दात् अस्य "फलाधिकरण" नाम। तत्र केवलं निम्बार्कभाष्यं विहाय सर्वैः अत्र सूत्रचतुष्टयं गृहीतम्। शङ्कर-भास्कर-रामानुज-मतेषु एतद्धि अष्टमम् अधिकरणम्। निम्बार्कमते पञ्चमाधिकरणस्य एकादशसु सूत्रेषु अष्टमं सूत्रम्, माध्वमते विंशतितमम् अधिकरण, श्रीकण्ठमते नवमम् अधिकरणं, श्रीपतिमते दशम, तथा वल्लभमते एकादशाधिकरणम्। तानि च सूत्रचतुष्टयम्

| | |
|---|---|
| १। "फलमत उपपत्ते." ३।२।३८ (३५६) | ४। पूर्वं तु बादरायणो हेतुव्यपदेशात् ३।२।४१ (३५९) |
| २। "श्रुतत्वाच्च" ३।२।३९ (३५७) | |
| ३। "धर्म्मं जैमिनिरत एव"३।२।४० (३५८) | |

अत्र ( १ ) "फलमत उपपत्तेः" ३।२।३८ (३५६) इत्यत्र फलमिति प्रथमान्तपदसत्त्वात् अत्र अधिकरणारम्भः संगत एव। चतुर्थ-सामान्य-नियमात्। अत-शब्दस्य अत्र ब्रह्मवाचकत्वात् सप्तम-विशेष-नियमात् न निषेधः। निम्बार्कभाष्ये अधिकरणस्य अनारम्भात् तस्य दोष।

( २ ) 'श्रुतत्वाच्च" ३।२।३९ (३५७) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात्, च-योगाच्च षष्ठ-विशेष-नियमात्।

( ३ ) "धर्म्मं जैमिनिरत एव" ३।२।४० (३५८) इत्यत्र "धर्म्मं" तथा "जैमिनि" इति प्रथमान्तपदद्वयस्य सत्त्वेऽपि जैमिनि इति नाम्ना स्वमतप्रतिकूलपरमतस्य निर्देशात्, विधेयभेदाभावाच्च, तथैव "अतएव" इति पदेन साकाङ्क्षत्वविधानात् नात्र अधिकरणारम्भ. संगत, विंशविशेषनियमात्, सप्तमविशेषनियमाच्च।

( ४ ) 'पूर्वं तु बादरायणो हेतुव्यपदेशात्" ३।२।४१ (३५९) इत्यत्र "पूर्वं" तथा "बादरायण" इति प्रथमान्तपदद्वयसत्त्वेऽपि चतुर्थसामान्यनियमात्, उक्तपूर्वपक्षव्यावर्तक-तु-शब्द-योगात् नास्य अधिकरणारम्भकत्वम्, विधेयान्तराहते स्वमतज्ञापनात् च। नवमाष्टादश-विंश-विशेषनियमैश्च। पादशेषात् अत्रैव अधिकरणसमाप्तिश्च सगता।

### दशमपादसमालोचनम्।

इदानीं द्रष्टव्यम् अनेन निबन्धेन अस्मिन् पादे अधिकरणरचनायाम्

( १ ) कति कीदृशाश्च नियमा अत्र सङ्कलिता.,

( २ ) कति च दोषाः कस्य भाष्यस्य कैश्च सवृत्ताः,

( ३ ) काश्च श्रुतय. कैश्च सूत्रै. उपजीव्यत्वेन गृहीता

( ४ ) उपजीव्यश्रुतिबलेन कीदृशी च पादसगतिर्भविष्यति इति।

एते च चत्वारः विषया अधस्तात् क्रमेण प्रदर्श्यन्ते तत्र प्रथमं तावत्—

(१) कति कीदृशाश्च नियमा अत्र सङ्कलिता ।

अत्रापि न कोऽपि नूतनः नियमः सङ्कलितः ।

(२) कति च दोषाः कस्य भाष्यस्य कथं सम्भूताः ।

तत्र ३।२।१ अधिकरणे माध्वभाष्ये "परामिध्यानात् 'तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" ३।२।५ सूत्रे अधिकरणस्य रचनायां दोषः ।

तत्रैव ३।२।१ अधिकरणे माध्वभाष्ये "देहयोगाद् वा सोऽपि" ३।२।६ सूत्रे अधिकरणस्य रचनायां दोषः ।

३।२।२ अधिकरणे माध्व-वल्लभ भाष्ययोः "अतः प्रबोधोऽस्मात्" ३।२।८ सूत्रे अधिकरणस्य रचनायां दोषः ।

३।२।३ अधिकरणे निम्बार्क-वल्लभ भाष्ययोः "स एव तु कर्म्मानुस्मृतिशब्दविधिभ्यः" ३।२।९ सूत्रे अधिकरणस्य अरचनायां दोषः ।

३।२।४ अधिकरणे वल्लभभाष्ये "मुग्धेऽर्द्धसम्पत्तिः परिशेषात्" ३।२।१० इति सूत्रे अधिकरणस्य अरचनायां दोषः ।

३।२।५ अधिकरणे माध्ववल्लभभाष्ययोः "अरूपवदेव हि तत्प्रधानत्वात्" इति ३।२।१४ सूत्रे अधिकरणस्य रचनायां दोषः ।

तत्रैव भास्करभाष्ये "अस्थूलमनण्वह्रस्वमदीर्घमशब्दमस्पर्शमरूपमव्ययम्" इति ३।२।१४ (क) अतिरिक्तसूत्रे अधिकरणस्य अरचनायां दोषः ।

तत्रैव माध्वभाष्ये "अतएव चोपमा सूर्य्यकादिवत्" इति ३।२।१८ सूत्रे अधिकरणस्य रचनायां दोषः ।

तत्रैव माध्वभाष्ये तथा वल्लभभाष्ये "अम्बुवदग्रहणात् तु न तथात्वम्" इति ३।२।१९ सूत्रे अधिकरणस्य रचनायां दोषः ।

तत्रैव माध्वभाष्ये "वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्" इति ३।२।२० सूत्रे अधिकरणस्य रचनायां दोषः ।

३।२।६ अधिकरणे रामानुज-भाष्येषु "प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः" इति ३।२।२२ सूत्रे अधिकरणस्य अरचनायां दोषः ।

तत्रैव माध्व वल्लभ-भाष्ययोः "तदव्यक्तम् आह हि" इति ३।२।२३ सूत्रे अधिकरणस्य रचनायां दोषः ।

तत्रैव वल्लभभाष्ये "प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्म्मण्यभ्यासात्" इति ३।२।२५ सूत्रे अधिकरणस्य रचनायां दोषः ।

तत्रैव रा-म-श्रीप-भाष्येषु "उभयव्यपदेशात् त्वहिकुण्डलवत्" इति ३।२।२७ सूत्रे अधिकरणस्य रचनायां दोषः ।

तत्रैव वल्लभभाष्ये "प्रकाशाश्रयवद् वा तेजस्त्वात्" इति ३।२।२८ सूत्रे अधिकरणस्य रचनायां दोष. ।

३।२।७ अधिकरणे माध्वभाष्ये "स्थानविशेषात् प्रकाशादिवत्" इति ३।२।३४ सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव म-श्री-श्रीप-भाष्येषु "तथान्यप्रतिषेधात्" इति ३।२।३६ सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव माध्वभाष्ये "अनेन सर्वगतत्वमायामशब्दादिभ्य." इति ३।२।३७ सूत्रे अधिकरणस्य रचनायां दोष ।

३।२।८ अधिकरणे निम्बार्कभाष्ये "फलमत उपपत्ते." इति ३।२।३८ सूत्रे अधिकरणस्य अरचनायां दोष ।

एवं पादेऽस्मिन् भाष्याणां दोषसमाहारे कृते दृश्यते

| भाष्यनाम | अधिकरणस्य अरचनायां | अधिकरणस्य रचनायां |
|---|---|---|
| माध्वभाष्ये | ० | १२ दोषा |
| वल्लभभाष्ये | ३ दोषा | ६ " |
| भास्करभाष्ये | १ दोष | ० |
| रामानुजभाष्ये | १ " | १ दोष. |
| निम्बार्कभाष्ये | ३ दोषाः | ० " |
| श्रीपतिभाष्ये | ० " | २ दोषौ |
| श्रीकण्ठभाष्ये | ० " | १ दोषः |

इति वक्तुं शक्यते तथा च पादेऽस्मिन् शाङ्करभाष्यस्यैव दोषाभाव । इदानीं द्रष्टव्यम्

**( ३ ) काश्च श्रुतयः कैश्च सूत्रैः उपजीव्यत्वेन गृहीताः ।**

प्रथमाधिकरणे

"सन्ध्ये सृष्टिराह हि" ३।२।१ इति सूत्रे "अथ रथान् रथयोगान् पथः सृजते" (बृ: ४।३।१०)

"निर्मातारं चैके पुत्रादयश्च" ३।२।२ इति सूत्रे "य. एषः सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्मिमाण." (क ३।५।८)

"मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" ३।२।३ इति सूत्रे "अथ रथान् रथयोगान् पथ सृजते" (बृ ४।३।१०) "न तत्र रथा न रथयोगा न पन्थानो भवन्ति"

(बृ ४।३।१०) "स्वय विहृत्य स्वयं निर्म्माय" (बृ ४।३।९)

"सूचकश्च हि श्रुतेराचक्षते च तद्विद" ३।२।४ सूत्रे "यदा कर्म्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धि तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने" (छा ५।२।९)

"पराभिध्यानात् तु तिरोहित ततो ह्यस्य बन्धविपर्य्ययौ" ३।२।५ इति सूत्रे "ज्ञात्वा देव सर्वपाशापहानि क्षीणै क्लेशैर्जन्ममृत्युप्रहानि । तस्याभिध्यानात् तृतीयं देहभेदे विश्वैश्वर्य्यं केवल आप्तकाम (श्वे १।११)

द्वितीयाधिकरणे—

"तदभावो नाडीषु तच्छ्रुतेरात्मनि च" ३।२।७ इति सूत्रे "आसु तदा नाडीषु सृप्तो भवति" (छा ८।६।३) 'ताभि प्रत्यवसृप्य पुरीतति शेते" (बृ २।१।१९) "य एष अन्तर्हृदये आकाशस्तस्मिन् शेते" (बृ २।१।१७)

"अत प्रबोधोऽस्मात्" ३।२।८ इति सूत्रे "सत आगम्य न विदु सत आगच्छामहे" (छ ६।१०।२)

तृतीयाधिकरणे—

"स एव तु कर्म्मानुस्मृतिशब्दविधिभ्य" ३।२।९ सूत्रे "पुन प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव" (बृ ४।३।१६)

पञ्चमाधिकरणे—

"न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि" ३।२।११ इति सूत्रे 'सर्वकाम सर्वग ध सर्वरस" (छा ३।१४।२) "अस्थूलमनणु" (बृ ३।८।८) "अशब्दमस्पर्शमरूपम्" (कठ. ३।१५)

"न भेदादिति चेन्न प्रत्येकमतद्वचनात्" ३।२। १२ इति सूत्रे "यश्चायमस्यां पृथिव्यां तेजोमय अमृतमय पुरुष" (बृ २।५।१)

"अपि चैवमेके" ३।२।१३ इति सूत्रे "मृत्यो स मृत्युमाप्नोति य इह नानेव पश्यति" (कठ ४।११) "नेह नानास्ति किञ्चन" (कठ ४।११)

"अरूपवदेव हि तत्प्रधानत्वात्" ३।२।१४ इति सूत्रे "अस्थूलम्" (बृ ३।८।८)

"आह च तन्मात्रम्" ३।२।१६ इति सूत्रे "स यथा सैन्धवघनोऽनन्तरोऽबाह्य कृत्स्न रसघन एव एवं वा अरे अयमात्मा अनन्तरोऽबाह्य कृत्स्न प्रज्ञानघन एव" (बृ ४।५।१३)

'दर्शयति चाथो अपि स्मर्य्यते" ३।२।१७ इति सूत्रे "अथात आदेशो नेति नेति" (बृ २।३।६) "अनादिमत् परं ब्रह्म न सत् तन्नासदुच्यते" (गी १३।१२)

"अतएव चोपमा सूर्य्यकादिवत्" ३।२।१८ इति सूत्रे "यथा ह्ययं ज्योतिरात्मा विवस्वानपो

भिन्ना बहुधैकोऽनुगच्छन् । "उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा" (महाः शा. ८)

"दर्शनाच्च" ३।२।२१ सूत्रे "पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः" । पुरः स पक्षी भूत्वा पुरः पुरुष आविशत ॥ (बृ २।५।१८)

षष्ठाधिकरणे

"प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः" ३।२।२२ इति सूत्रे "द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च" (बृ २।३।१) "अथात आदेशो नेति नेति" (बृ २।३।६) "न हि एतस्मात् इति नेति अन्यत् परमस्ति" (बृ २।३।६) "अथ नामधेयम्" (बृः २।३।६)

"तदव्यक्तमाह हि" ३।२।२३ इति सूत्रे "न चक्षुषा गृह्यते नापि वाचा, नान्यैर्देवैस्तपसा कर्मणा वा" (मु ३।१।८)

"अपि च संराधने प्रत्यक्षानुमानाभ्याम्" ३।२।२४ इति सूत्रे "कश्चिद् धीरः प्रत्यगात्मानमैक्षत् आवृत्तचक्षुरमृतत्वमिच्छन् ।" (कठ ४।१) "यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥" (महा शा ४८।५४)

"प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्म्मण्यभ्यासात्" ३।२।२५ इति सूत्रे "तत्त्वमसि" (छा ६।८।७)

"अतोऽनन्तेन तथाहि लिंगम्" ३।२।२६ इति सूत्रे "स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति" (मुः ३।२।९)

"प्रतिषेधाच्च" ३।२।३० इति सूत्रे "नान्योऽतोऽस्ति द्रष्टा" (बृ. ३।७।२३) "नेति नेति" (बृः २।३।६)

सप्तमाधिकरणे

"परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः" ३।२।३१ इति सूत्रे "अथ य आत्मा स सेतुः" (छा ८।४।१) "ब्रह्म चतुष्पात्" (मा· १२ छा· ३।१८।२) "प्राज्ञेनात्मना सम्परिष्वक्तः" (बृ ४।३।२१) "शारीर आत्मा" (तै. २।३।१)

"बुद्ध्यर्थः पादवत्" ३।२।३३ इति सूत्रे "ब्रह्म चतुष्पात्" (छा. ३।१८।२)

"उपपत्तेश्च" ३।२।३५ इति सूत्रे "स्वमपीतो भवति" (छा· ६।८।१)

"तथान्यप्रतिषेधात्" ३।२।३६ इति सूत्रे "आत्मैव अधस्तात्" (छा ७।२५।२)

"अनेन सर्वगतत्वमायामशब्दादिभ्यः" ३।२।३७ इति सूत्रे "आकाशवत् सर्वगतश्च नित्यः" (शतपथ ब्रा· १) "नित्यः सर्वगतः स्थाणुः" (गी २।२४)

अष्टमाधिकरणे—

"श्रुतत्वाच्च" ३।२।३९ इति सूत्रे "स वा एष महानज आत्मा अन्नादो वसुदान" (बृ ४।४।२४)

"धर्मं जैमिनिरत एव" ३।२।४० इति सूत्रे 'स्वर्गकामो यजेत' (?)

"पूर्वं तु बादरायणो हेतुव्यपदेशात्" ३।२।४१ इति सूत्रे "एष ह्येव साधु कर्म्म कारयति" (कौ ३।८) "अन्नादो वसुदान (बृ ४।४।२४) "लभते च ततः कामान् मयैव विहितान् हि तान्" (गी ७।२१)

इदानीं द्रष्टव्यं एतादृशसूत्रोपजीव्यश्रुतिबलेन—

## (४) कीदृशी अस्य पादसङ्गतिः ।

उदाहृतश्रुतयः शङ्करमतानुयायिन्यः । भाष्यान्तरे अत्र विषये महान् मतभेद एव दृश्यते । बहुषु स्थलेषु एकमत्यसत्त्वेऽपि स्व-स्व सिद्धान्तानुकूल्याय श्रुत्यन्तरं गृहीतम् । पूर्वपूर्व पादेषु यथा सर्वेषु भाष्येषु भावभेदसत्त्वेऽपि प्रायेण मतसाम्यं दृष्टम्, अत्र न तथा । अत्र मत भेदस्तु तत्त्वत एव अतीव प्रबलः प्रतीयते । यथा—

शङ्करमते अत्र प्रसङ्गे निर्विशेषत्व-बोधकश्रुतयः समुद्धृता, रामानुजादीनां मते तु सविशेषत्व-ज्ञापकश्रुतयः समाश्रिताः । एवं तु तत्त्वांशे एव अयं मतभेदः सञ्जातः, अतः कल्प्यते—एतन्मतभेदमीमांसा सूत्रार्थविचारं विना न सम्भवति । परन्तु सूत्रार्थविचारस्यापि स्व-स्व-सिद्धान्ताधीनत्वात् ततोऽपि मतभेदमीमांसा सुदूरपराहतैव प्रतिभाति । तर्कयुक्तिबलेन असम्भावितमपि सम्भावितत्वेन, असंगतमपि संगतत्वेन प्रतिपादयितुं शक्यते । अतः अत्र सूत्रार्थविचारं विहाय अन्यः पन्था अवलम्बनीयः । स च पन्थाः अत्र संगतिचरणमाति । सा तु इत्थम्—अध्यायसंगत्यनुरोधेन एतत्पादप्रतिपाद्यं साधनमेव । एतत् तु प्रागेव उक्तम् । तदेवात्र संगतित्वेन ज्ञेयम् । तच्च साधनत्वं सविशेषब्रह्मणि यथा सम्भवति, तथा निर्विशेषब्रह्मण्यपि । तेन साधनरूपाध्यायसंगत्या नायं मतभेदः निराकर्तुं शक्यते । अतः अध्यायसंगतेः व्यापकीभूता या शास्त्रसंगतिः तया समाधातुं शक्यते नवेति अत्र चिन्तनीयम् । वस्तुतस्तु शास्त्रसंगतिबलेन एतत्पादस्यापि निर्विशेषब्रह्मपरत्वं साधनीयम् इति भूमिकाग्रन्थे प्रागेव उक्तम् । तात्पर्य्यनिर्णायकलिङ्गबलेन एतच्छास्त्रस्य निर्विशेषब्रह्मपरत्वप्रतिपादनात् । तथा सति एतत्पाद-प्रतिपाद्यरूप-पादसंगतिः निर्विशेषब्रह्मवादिशङ्करमत-सम्मता इति कल्पयितुम् उचितम् । तथापि अत्र विभिन्नभाष्याणाम् अनुमोदितम् एतत् पादप्रतिपाद्यरूप-पादसंगतिः अधस्तात् प्रदर्श्यते—

शङ्करमते—पूर्वभागेन त्वं-पदार्थस्य, उत्तरभागेन तत् पदार्थस्य शोधनरूप-साधननिर्देशः ।

भास्करमते—आद्येन तथैव ।

रामानुजमते पुरुषोत्तमस्य सर्वदा हेय-प्रत्यनीकत्व-कल्याणगुण-गणाकरत्व-रूपोभयलिंगत्व-प्रतिपादनम् ।

निम्बार्कमते विवेकवैराग्यदार्ढ्याय स्वप्नावस्थाविचारः ।

माध्वमते भक्तिनिरूपणम् ।

श्रीकण्ठमते जीवावस्था-निरूपण-पूर्वकेश्वर-स्वरूप-लक्षणोक्तिः ।

श्रीपतिमते परमशिव-ब्रह्मस्वरूप-लक्षणादीनि प्रपञ्चितानि ।

अत्र विषयान्तरमेकं विज्ञेयं दृश्यते । अत्र साधनाध्याये साधन-वर्णन-प्रसंगेन द्वितीयपादस्य पञ्चम-षष्ठ-सप्तमाधिकरणेषु ब्रह्मणः नीरूपभावस्य वेदान्तसम्मतत्वं, ब्रह्मणः निषेधातीतत्वेन सत्यत्वस्थापनं तथा ब्रह्मभिन्नस्य अवस्तुत्वव्यवस्थापनादिकं वर्णितम् । यद्यपि एतत् सर्वं तत्त्वनिर्णायक-प्रथम-द्वितीयाध्याययोः वक्तव्यं भवति, तथापि यथा एतदध्यायस्य प्रथमपादे वर्णितं यत् फलवर्णनाङ्गीभूत-परलोक-गमनागमन-प्रकारादिकं, तत् सर्वं वैराग्योत्पादनार्थं इति कृत्वा साधनत्वेन कल्पनीयं, तथा अत्रापि यत् तत्त्ववर्णनादिकं तत् सर्वं साधनांगत्वेन ग्रहणीयम् । तथा सत्यपि नास्य स्वार्थे तात्पर्यशून्यत्वं शङ्कनीयम् । यतः स्वरूप-चिन्तनमेव साधनत्वेन अत्र अभिमन्यते । अतः अत्र नास्य अप्रासंगिकत्वं न वा अतात्त्विकत्वम् ।

# अथ तृतीयाध्याये तृतीयपादः ।

## प्रथमं सर्ववेदान्तप्रत्ययाधिकरणम्

अत्र "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" ३।३।१ (३६०) इति सूत्रस्य "सर्ववेदान्तप्रत्ययम्" इति पदात् अस्य "सर्ववेदान्तप्रत्ययाधिकरण" नाम । तत्र शङ्कर-भास्कर-श्रीकण्ठ-भाष्येषु चत्वारि सूत्राणि, रामानुज-मध्व-निम्बार्क-श्रीपति-भाष्येषु पञ्च सूत्राणि, तथा वल्लभभाष्ये पञ्चदश सूत्राणि गृहीतानि । तच्च च सूत्रचतुष्टयम्

| | |
|---|---|
| १ । "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" ३।३।१ (३६०) | ३ । "स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः" ३।३।३ (३६२) |
| २ । "भेदान्नेति चेन्नैकस्यामपि" ३।३।२ (३६१) | ४ । "दर्शयति च" ३।३।४ (३६३) |

अत्र ( १ ) "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" ३।३।१ (३६०) इत्यत्र "सर्ववेदान्तप्रत्ययम्" इति प्रथमान्तपदस्य सत्त्वात् तथा पादारम्भात् अत्र अधिकरणारम्भः संगतः एव । चतुर्थसामान्यनियमात्, द्वितीयविशेषनियमाच्च ।

(२) "भेदान्नेति चेन्नैकस्यामपि" ३।३।२ इत्य। प्रथमान्तपदाभावात् तथा "इति चेन्" इति पदमध्यात् नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात्, पञ्चमविरोधनियमाच्च भास्करमते अत्र "स्यात्" इति शब्दस्य पाठ दृश्यते। तथा सति द्वन्द्वविरोधविरोधनियमात् न अधिकरणारम्भ।

(३) "स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियम" ३।३।३ (२६२) इत्यत्र 'तन्नियम' इति प्रथमान्तपदसत्त्वेऽपि, च-कारयोगात् नास्य अधिकरणारम्भकत्व, चतुर्थसामान्यनियमात्, पञ्चविरोधनियमाच्च। अत्र मध्व-बलदेव-भाष्यद्वयमध्ये "सववच्च तन्नियम" इत्यंशेन सूत्रद्वय पठितम्। तन्न युक्तम्। "सववच्च तन्नियम" इत्यत्र च-कारस्य सत्त्वात्, अत्यन्त पृथग्विषयस्य सूचनाच्च। चतुर्थसामान्यनियमात्। चतुर्थपञ्चविरोधनियमाभ्यां च।

(४) "दर्शयति च" ३।३।४ (२६३) इत्यत्र प्रथमान्त-पदाभावात् च-काराच्च नास्य अधिकरणारम्भकत्वं, चतुर्थसामान्यनियमात्, पञ्चविरोधनियमाच्च। परसूत्रे चतुर्षु भाष्येषु अधिकरणारम्भात् नियमानुगतत्वाच्च अत्रैव अधिकरणसमाप्ति संगता एव।

## द्वितीयम् उपसंहाराधिकरणम्

अत्र "उपसंहारोऽर्थाभेदाद् विधिशेषवत् समाने च" ३।३।५ (२६४) इति सूत्रस्य "उपसंहार" इति पदात् अस्य "उपसंहाराधिकरणं" नाम। तत्र शंकर-भास्कर-श्रीकण्ठ-भाष्येषु एतद् एकं सूत्रं गृहीतम्, माध्वभाष्ये तु सूत्रचतुष्टयमेव। तत्र रामानुज-निम्बार्क-श्रीपति-भाष्येषु एतत् सूत्रं तदीयप्रथमाधिकरणस्य पञ्चसु सूत्रेषु पञ्चमं सूत्रम्। वल्लभभाष्ये तदीयप्रथमाधिकरणस्य पञ्चदशसु सूत्रेषु एतद्धि पञ्चमं सूत्रम्। परसूत्रे अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति।

तत्र "उपसंहार" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्व युक्तमेव। चकारस्य अत्र विशेषान्तरज्ञापकत्वात् अधिकरणारम्भे न बाधकत्वम्। चतुर्थसामान्यनियमात्, द्वादशविरोधनियमाच्च। रामानुज निम्बार्क-श्रीपति-वल्लभ-भाष्येषु नात्र अधिकरणं रचितम्। अत रा-नि-श्रीप-व-भाष्येषु अधिकरणस्य अनारम्भात् तेषामेव दोष।

## तृतीयम् अन्यथाधिकरणम्

अत्र "अन्यथात्वं शब्दादिति चेन्नाविशेषात्" ३।३।६ (२६५) इति सूत्रस्य "अन्यथात्वम्" इति पदात् अस्य "अन्यथात्वाधिकरणं" नाम। तत्र शंकर-भास्कर-श्रीकण्ठ-भाष्येषु त्रीणि सूत्राणि, रामानुज-निम्बार्क-श्रीपति भाष्येषु चत्वारि सूत्राणि द्वितीयाधिकरण च, मध्व-वल्लभ-भाष्ययो अधिकरणं न आरब्धम्। तत्र माध्वभाष्ये एतत् सूत्रं तदीयद्वितीयाधिकरणस्य चतुर्षु सूत्रेषु द्वितीयं सूत्रम्। तथा वल्लभभाष्ये एतत् सूत्रं तदीयप्रथमाधिकरणस्य पञ्चदशसु सूत्रेषु षष्ठं सूत्रम्। तानि च त्रीणि सूत्राणि—

१ । "अन्यथात्वं शब्दादिति चेन्नाविशेषात्" ३।३।६ (३६५)
२ । "न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्" ३।३।७ (३६६)
३ । "सञ्ज्ञातश्चेत् तदुक्तमस्ति तु तदपि" ३।३।८ (३६७)

अत्र ( १ ) "अन्यथात्वं शब्दादिति चेन्नाविशेषात्" ३।३।६ (३६५) इत्यत्र "अन्यथात्वम्" इति प्रथमान्तपदस्य सत्त्वात् अत्र अधिकरणारम्भः संगच्छते एव । चतुर्थसामान्यनियमात् । अत्र "इति चेन्न" इति पदात् अपि पञ्चमविशेषनियमात् न तत्त्वे बाधा, प्रथमान्तपदात् परं पञ्चम्यन्तपदं, ततः "इति चेन्न" इति पदस्य सत्त्वात् । चतुर्दशविशेषनियमात् । तेन मध्व-वल्लभ-भाष्ययोः अधिकरणस्य अनारम्भात् दोषः ।

( २ ) "न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्" ३।३।७ (३६६) इत्यत्र "परोवरीयस्त्वादिवत्" इति पदात् कस्यचित् प्रथमान्तपदस्य अध्याहर्त्तव्यत्वेऽपि "न वा" इति पदेन साकाक्षत्वविधानात् चतुर्थसामान्यनियमात् षष्ठविशेषनियमाच्च नास्य अधिकरणारम्भकत्वम् ।

( ३ ) "संज्ञातश्चेत् तदुक्तमस्ति तु तदपि" ३।३।८ इत्यत्र (३६७) "तदुक्त" मिति प्रथमान्त-पदद्वय-सत्त्वेऽपि चतुर्थसामान्यनियमात्, "चेत्" इति शब्दयोगात् पञ्चमविशेषनियमात्, तथैव "तदपि" इत्यत्र प्रथमान्तपदसत्त्वेऽपि "अपि" इति शब्दयोगात् साकाक्षत्वविधानात् षष्ठविशेषनियमात् नास्य अधिकरणारम्भकत्वम् । परसूत्रे चतुर्षु मतेषु अधिकरणारम्भात्, तथैव नियमानुमतत्वेन तादृशाधिकरणारम्भस्य सागत्यात् अत्रैव अधिकरणसमाप्तिः संगता एव ।

## चतुर्थं व्याप्त्यधिकरणम्

अत्र "व्याप्तेश्च समञ्जसम्" ३।३।९ (३६८) इति सूत्रस्य "व्याप्ति"-पदात् अस्य "व्याप्त्यधिकरण" नाम । तत्र शंकर-भास्कर-मध्व-श्रीकण्ठ-भाष्येषु एतेन एकेनैव सूत्रेण अधिकरणं रचितम् । माध्वभाष्ये तृतीयम् अधिकरणम्, शिष्टेषु चतुर्थम् ।
श्रीपति-वल्लभ-भाष्येषु अधिकरणं न आरब्धम् । तेषु भाष्येषु एतत् सूत्रं तदीयद्वितीयाधिकरणस्य चतुर्षु सूत्रेषु चतुर्थं सूत्रम् । वल्लभभाष्ये तु तदीयप्रथमाधिकरणस्य पञ्चदशसु सूत्रेषु एतद्धि नवमं सूत्रम् ।

अत्र "समञ्जसम्" इति प्रथमान्तपदात् अत्र अधिकरणारम्भः संगच्छते, चतुर्थसामान्यनियमात् । न तु चकार-योगात् तस्य निषेधः । अर्थतः विधेयस्य वैलक्षण्यात् । द्वादशविशेषनियमात् । तेन रा-नि-श्रीप-व-भाष्याणां अधिकरणस्य अरचनायां दोषः । सूत्राक्षरमात्रतः तु न दोषः । अर्थसाहाय्यस्य आवश्यकत्वात् दोषः । परसूत्रे सप्तसु भाष्येषु अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिः संगच्छते ।

## पञ्चमं सर्वाभेदाधिकरणम्

अत्र "सर्वाभेदादन्यत्रेमे" ३।३।१० (३६९) इति सूत्रस्य "सर्वाभेदात्" इति पदात्

अस्य "सर्वाभेदाधिकरणं" नाम । तत्र येऽत्र वल्लभ-भाष्य भिन्नेषु सर्वत्र अनेन एकेनैव सूत्रेण एतदधिकरणं रचितम् । वल्लभभाष्ये तदीयप्रथमाधिकरणस्य पञ्चदशसु सूत्रेषु एतद्धि दशमं सूत्रम् ।

अत्र "इमे" इति प्रथमान्तपदसत्त्वात् अत्र अधिकरणारम्भ संगत । चतुर्थसामान्य नियमात् । वल्लभभाष्ये अधिकरणस्य अरचनायां दोष प्रसंग । परसूत्रे सप्तसु भाष्येषु अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्ति समुचिता एव ।

## षष्ठम् आनन्दाद्यधिकरणम्

अत्र "आनन्दादय प्रधानस्य" ३।३।११ (३७०) इति सूत्रस्य "आनन्दादय"-पदात् अस्य "आनन्दाद्यधिकरणं" नाम । तत्र शंकर-भास्कर-भाष्यद्वयमध्ये सूत्रत्रयं, रामानुज-निम्बार्क-श्रीपति भाष्येषु सूत्रसप्तक, मध्व-श्रीकण्ठ-भाष्यद्वये तु एकमेव सूत्र गृहीतम् । तथापि रा-नि-श्रीप-भाष्येषु एतद्धि चतुर्थम् अधिकरणम्, माध्वभाष्ये पञ्चमाधिकरणम्, श्रीकण्ठभाष्ये शंकर-भास्कर-भाष्यवत् षष्ठाधिकरणं भवति । वल्लभ-भाष्ये तु अधिकरणं नारब्धम्, तेन अत्र तस्य दोष । तत्र एतत् सूत्रं तदीयप्रथमाधिकरणस्य पञ्चदशसु सूत्रेषु एकादशं सूत्रम् । तानि च सूत्रत्रयम्—

१ । "आनन्दादय प्रधानस्य" ३।३।११ (३७०)

२ । "प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे" ३।३।१२ (३७१)

३ । "इतरे त्वर्थसामान्यात्" ३।३।१३ (३७२)

अत्र ( १ ) "आनन्दादय प्रधानस्य" ३।३।११ (३७०) इत्यत्र 'आनन्दादय" इति प्रथमान्तपदसत्त्वात् अत्र अधिकरणारम्भकत्व युक्तम् । चतुर्थसामान्यनियमात् । वल्लभभाष्ये अधिकरणस्य अरचनायां दोष ।

( २ ) "प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ३।३।१२ (३७१) इत्यत्र 'प्रियशिरस्त्वाद्यप्राप्ति" इति प्रथमान्तपदसत्त्वात् अत्र अधिकरणारम्भ उचित । तथापि 'अप्राप्ति" इति शब्दात् हि शब्दाच्च अर्थत साकांक्षत्वसिद्धे नात्र अधिकरणारम्भ संगत । चतुर्थसामान्य नियमात्, षष्ठ-सप्तम विशेषनियमाभ्याम् । मध्व-श्रीकण्ठ-भाष्ययो षष्ट-सप्तमाधिकरणारम्भात् दोष ।

( ३ ) "इतरे त्वर्थसामान्यात्" ३।३।१३ (३७२) इत्यत्र 'इतरे" इति प्रथमान्तपदस्य सत्त्वात् चतुर्थसामान्यनियमात् अस्य अधिकरणारम्भकत्वं युक्त, तथापि तस्य स्वरूपत साकांक्षत्वात् सप्तमविशेषनियमात्, तत तु-शब्द अत्र तस्य व्याघातक, नवमविशेषनियमात् । अत न अधिकरणारम्भ युक्त । माध्वभाष्ये अधिकरणस्य रचनायां दोष । परसूत्रे चतुर्षु भाष्येषु अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति कल्प्यते ।

## सप्तमम् आध्यानाधिकरणम्

अत्र "आध्यानाय प्रयोजनाभावात्" ३।३।१४ (३७३) इति सूत्रस्य "आध्यानाय"

इति पदात् अस्य "आध्यानाधिकरणं" नाम। तत्र शंकर-भास्कर-मध्व-भाष्येषु सूत्रद्वयं गृहीतम्। माध्वभाष्ये एतत् तु अष्टमम् अधिकरणम्। श्रीकण्ठभाष्ये चत्वारि सूत्राणि गृहीतानि, तत्रापि एतत् अष्टमम् अधिकरणम्। रा नि-श्रीप-व-भाष्येषु अधिकरणं नारब्धम्। तत्र रामानुज-भाष्ये तथा निम्बार्क-भाष्ये श्रीपतिभाष्ये च एतत् सूत्रं तदीयचतुर्थाधिकरणस्य सप्तसु सूत्रेषु चतुर्थं सूत्रम्। वल्लभभाष्ये तु तदीयप्रथमाधिकरणस्य पञ्चदशसु सूत्रेषु चतुर्दशं सूत्रम्।

तत्र सूत्रद्वयम्

१। "आध्यानाय प्रयोजनाभावात्" ३।३।१४ (३७३)

२। "आत्मशब्दाच्च" ३।३।१५ (३७४)

अत्र 'आध्यानाय प्रयोजनाभावात्" ३।३।१४ (३७३) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्व युक्तम्। तथापि तस्य ऊहनीयत्वात् तथा पूर्वाधिकरणत विषयश्रुतिभेदात् पञ्चमसामान्यनियमत्, एकादशविशेषनियमाच्च तत् युक्तमेव। तेन "पुरुष." "अर्थाद्य." इत्येवं प्रथमान्तपदमध्याहर्तव्य भवति। यद्यपि अधिकरणस्य आरम्भे मतभेदस्य समसङ्ख्यकत्वं, चत्वारि आरम्भानुकूलानि, चत्वारि च आरम्भप्रतिकुलानि, तथापि रा-नि-श्रीप-भाष्यैः सह वल्लभ-भाष्यस्य यादृशम् अनैक्य, तादृशम् अनैक्यं नात्र दृश्यते। तेन आरम्भप्रतिकूलपक्षेऽपि मतानैक्यात् तत्-पक्षस्य दुर्बलत्वमेव भवति। ततश्च रामानुजादीना भाष्येषु विषयश्रुते अभेदात्, शङ्करा-दीना तु भाष्येषु तस्या भेदात् यथा तत्र ज्ञातव्यबाहुल्यं, तथा न रामानुजादीना भाष्येषु दृश्यते, अत. अत्र रा-नि-श्रीप-व-भाष्याणाम् अधिकरणस्य अरचनाया दुष्टत्वकल्पनं युक्तम्।

( २ ) "आत्मशब्दाच्च" ३।३।१५ (३७४) इत्यत्र प्रथमान्तपदाभावात् नास्य अधि-करणारम्भकत्वम्। चतुर्थसामान्यनियमात्। च-योगाच्च तथा षष्ठविशेषनियमात्। परसूत्रे चतुर्षु भाष्येषु अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिः सगच्छते।

## अष्टमम् आत्मगृहीत्यधिकरणम्

अत्र "आत्मगृहीतिरितरवदुत्तरात्" ३।३।१६ (३७५) इति सूत्रस्य "आत्मगृहीति"-पदात् अस्य "आत्मगृहीत्यधिकरणं" नाम। तत्र शङ्कर-भास्कर-मध्व-मल्लभ-भाष्येषु अधिकरणम् आरब्धम्। शङ्कर-भास्कर-वल्लभ-भाष्येषु सूत्रद्वयं गृहीतम्, माध्वभाष्ये तु एकमेव सूत्रम्। शङ्कर-भास्करयो. अष्टमम् अधिकरणम्, मध्वस्य नवमाधिकरणम्। वल्लभस्य तु द्वितीयम् अधि-करणम्। रामानुज-निम्बार्क-श्रीकण्ठ-श्रीपति-भाष्येषु अधिकरण न आरब्धम्। तत्र रामानुज-निम्बार्क-श्रीपति-भाष्येषु एतत् सूत्रं तदीयचतुर्थाधिकरणस्य सप्तसु सूत्रेषु षष्ठं सूत्रम्, श्रीकण्ठ-भाष्ये तु तदीयाष्टमाधिकरणस्य चतुर्षु सूत्रेषु तृतीय सूत्रम्। तत् च सूत्रद्वयम्।

१। "आत्मगृहीतिरितरवदुत्तरात्" ३।३।१६ (३७५)

२। "अन्वयादिति चेत् स्यादवधारणात्" ३।३।१७ (३७६)

अत्र (१) "आत्मगृहीतिरितरवदुत्तरात्" ३।३।१६ (३७५) इत्यत्र "आत्मगृहीति" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तम्। चतुर्थसामान्यनियमात्। रा नि-श्री-श्रीप-भाष्येषु अधिकरणस्य अरचनायां दोष। समस्तत्वेऽपि नियमविरुद्धत्वात्।

(२) "अन्वयादिति चेत् स्यादवधारणात्" ३।३।१७ (३७६) इत्यत्र प्रथमान्तपदाभावात् "इति चेत" इत्यादि पदसत्त्वाच्च नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात्, पञ्चमविशेषनियमाच्च। ऊनविंशनियमोऽपि अत्र अधिकरणारम्भबाधक। परसूत्रे सर्वसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति। अत अनेनैव माध्वभाष्ये तदीयदशमाधिकरणरचनात् दोष।

## नवम कार्य्याख्यानाधिकरणम्

अत्र "कार्य्याख्यानादपूर्वम्" ३।३।१८ (३७७) इति सूत्रस्य "कार्य्याख्यानात्" इति पदात् अस्य "कार्य्याख्यानाधिकरणं" नाम। अत्र वल्लभभिन्नै सर्वै भाष्यकारै एतेन एकेन सूत्रेण एतद् अधिकरणं रचितम्। वल्लभभाष्ये तु अत्र षट् सूत्राणि गृहीतानि। तत्र भास्कर-श्रीकण्ठ-भाष्येषु नवमम् अधिकरणम्, रामानुज-निम्बार्क-श्रीपति-भाष्येषु पञ्चमम् अधिकरणम्। माध्वभाष्ये एकादशाधिकरणम्। वल्लभभाष्ये तृतीयाधिकरणम्।

अत्र "अपूर्वम्" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तम्, चतुर्थसामान्यनियमात्। परसूत्रे सर्वसम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्तिरपि सगच्छते।

## दशम समानाधिकरणम्

अत्र "समान एवं चाभेदात्" ३।३।१९ (३७८) इति सूत्रस्य 'समान" इति पदात् अस्य "समानाधिकरणं" नाम। तत्र शङ्कर-भास्कर-श्रीकण्ठ-भाष्येषु एतत् सूत्रं तदीयदशमाधिकरणस्य एकमेव सूत्रम्। रामानुज निम्बार्क-श्रीपति-भाष्येषु तदीयषष्ठाधिकरणस्य एतत्तथैव एकमेव सूत्रम्। माध्वभाष्यस्य द्वादशाधिकरणस्य सूत्रद्वयमध्ये प्रथमं सूत्रम्। तेन वल्लभभिन्नेषु सर्वेषु भाष्येषु अनेन अधिकरणं रचितम्, केवलं वल्लभभाष्ये तदीयतृतीयाधिकरणस्य षट्सु सूत्रेषु एतद्धि द्वितीयं सूत्रम्। तेनात्र अधिकरणस्य अरचनायां वल्लभभाष्यस्यैव दोष।

अत्र "समान" "एवम्" इति प्रथमान्तपदद्वयस्य सत्त्वात् अस्य अधिकरणारम्भकत्वं युक्तमेव। चतुर्थसामान्यनियमात्। चकारस्य विधेयान्यत्वबोधनात् न बाधकत्वम्। द्वादशविशेषनियमात्।

## एकादश सम्बन्धाधिकरणम्

अत्र 'सम्बन्धादेवमन्यत्रापि" ३।३।२०, (३७९) इति सूत्रस्य "सम्बन्धात्" इति पदात् अस्य "सम्बन्धाधिकरणं" नाम। अत्र मध्व-वल्लभ-भाष्य-भिन्नेषु सर्वत्र भाष्येषु अधिकरणं रचितम्। तत्र शङ्कर-भास्कर-रामानुज-निम्बार्क-श्रीपति-भाष्येषु सूत्रत्रयं गृहीतम्। श्रीकण्ठ-

भाष्ये सूत्रद्वय गृहीतम् । शङ्कर-भास्कर-श्रीकण्ठ-भाष्येषु एकादशाधिकरणम्, रामानुज-निम्बार्क-श्रीपति-भाष्येषु सप्तमम् अधिकरणम् । वल्लभभाष्ये तदीयतृतीयाधिकरणस्य षट्सु सूत्रेषु तृतीयं सूत्रम् । तानि च त्रीणि सूत्राणि

१ । "सम्बन्धादेवमन्यत्रापि" ३।३।२० (३७९) | ३ । "दर्शयति च" ३।३।२२ (३८१)
२ । "न वा विशेषात्" ३।३।२१ (३८०) |

अत्र ( १ ) "सम्बन्धादेवमन्यत्रापि" ३।३।२० (३७९) इत्यत्र "एवम्" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्वं युक्तम्, चतुर्थसामान्यनियमात । "अपि" पदम् अत्र न बाधकं, विधेयान्तरस्य ज्ञापनात्, द्वादशविशेषनियमात् । माध्वभाष्ये तथा वल्लभभाष्ये च अधिकरणस्य अकरणात् तयोरेव दोषः ।

( २ ) "न वा विशेषात्" ३।३।२१ (३८०) इत्यत्र प्रथमान्तपदाभावात् वा-शब्द-योगाच्च नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च । माध्व-भाष्ये अधिकरणस्य रचनाया दोषः ।

( ३ ) "दर्शयति च" ३।३।२२ (३८१) इत्यत्र प्रथमान्तपदाभावात् च-शब्दयोगाच्च नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च । श्रीकण्ठभाष्ये अधिकरणस्य आरम्भात् दोषः । परसूत्रे अधिकसम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्तिः ।

## द्वादशं संभृत्यधिकरणम्

अत्र "संभृतिद्युव्याप्त्यपि चातः" ३।३।२३ (३८२) इति सूत्रस्य "संभृति" इति पदात् अस्य "संभृत्यधिकरणं" नाम । अत्र वल्लभ-भाष्यभिन्नेषु सर्वेषु भाष्येषु अधिकरणम् आरब्धम् । तत्र एतत् एकमेव सूत्रं च गृहीतम् । वल्लभ-भाष्ये एतत् सूत्रं तदीयतृतीयाधिकरणस्य षट्सु सूत्रेषु षष्ठं सूत्रम् । शङ्कर-भास्कर-भाष्ययोः एतद्धि द्वादशाधिकरणम् । रामानुज-निम्बार्क-श्रीपति-भाष्येषु अष्टमम् अधिकरणम् । माध्वभाष्ये चतुर्दशाधिकरणम् । श्रीकण्ठ-भाष्ये त्रयोदशाधिकरणम् ।

अत्र "संभृतिद्युव्याप्ती" इति प्रथमान्तपदात् अत्र अधिकरणारम्भः युक्तः । पृथक् विधेयत्वात् च-कारस्य तथा "अपि अतः" पदयोरपि तदबाधकत्वम् । चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च । वल्लभभाष्ये तदकरणात् दोषः वक्तव्यः । परसूत्रे सर्वेषु भाष्येषु अधि-करणस्य आरब्धत्वात् अत्रैव अधिकरणसमाप्तिः युक्ता ।

## त्रयोदशं पुरुषविद्याधिकरणम्

अत्र "पुरुषविद्यायामिव चेतरेषामनाम्नानात्" ३।३।२४ (३८३) इति सूत्रस्य "पुरुष-विद्यायाम्" इति पदात् अस्य "पुरुषविद्याधिकरणं" नाम । तत्र सर्वेषु भाष्येषु एतेन एकेन

सूत्रेण एतदधिकरणं रचितम्'। तत्र शंकर भास्करयो त्रयोदशम् अधिकरणं, रामानुज-निम्बार्क-श्रीपति भाष्येषु नवमम् अधिकरणम्, माध्वभाष्ये पञ्चदशम् अधिकरणम्, श्रीकण्ठभाष्ये चतुर्दशम् अधिकरणम्, वल्लभभाष्ये तु चतुर्थम् अधिकरणम् इति विशेष ।

तत्र अनुषंगणीय प्रथमान्तत्वात् अधिकरणारम्भ सगच्छते । इव-च प्रभृतिपाठनम् अत्र अबाधकत्वम्, विधेयान्तरज्ञापनात् । पञ्चमसामान्यनियमात् तथा षष्ठविशेषनियमात् च । ।रसूत्रे तथैव सर्वेषु भाष्येषु अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिश्च ।

## चतुर्दश वेधाद्यधिकरणम्

अत्र "वेधाद्यर्थभेदात्" ३।३।२५ (३८४) इति सूत्रस्य "वेधादि" शब्दात् अस्य "वेधाद्यधिकरणं" नाम। तत्र सर्वेषु भाष्येषु अत्र अधिकरणम् आरब्धम् । वल्लभ-भाष्य-भिन्नेषु सर्वेषु भाष्येषु एतेन एकनैव सूत्रेण एतद् अधिकरणं रचितम्। वल्लभभाष्ये तु सूत्रद्वयेन इति विशेष ।

अत्र प्रथमान्त-पदाभावात् नास्य अधिकरणारम्भकत्वं युक्त, तथापि सर्वै भाष्यकारै तथा कृतत्वात् प्रथमान्तं किमपि ऊहनीयम् । तद्बलेन च अधिकरणम् आरम्भणीयम् इत्येव समीचीनम्। पञ्चमसामान्यनियमात्। तथापि सर्वस्वीकृत विषय श्रुतिभेद एव अत्र अधिकरणारम्भे कारणम् इत्येव मन्तव्यम् । एकादशविशेषनियमात्। परसूत्रे वल्लभभिन्नै सर्वै अधिकरणस्य आरब्धत्वात् अत्रैव अधिकरणसमाप्ति ।

## पञ्चदश हान्यधिकरणम्

अत्र "हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम्" ३।३।२६ (३८५) इति सूत्रस्य "हानौ" इति पदात् अस्य "हान्यधिकरण' नाम। तत्र वल्लभभिन्नै सर्वै अधिकरणम् आरब्धम्। निम्बार्क-माध्व भिन्नै सर्वै अत्र एकमेव सूत्रं गृहीतम्। अत्र निम्बार्क भाष्ये षट् सूत्राणि गृहीतानि । माध्वभाष्ये तु सूत्रद्वयमेव गृहीतम्। शकर-भास्करमते एतद्धि पञ्चदशम् अधिकरणम्, रामानुज-निम्बार्क-श्रीपति-मतेषु एतत् तु एकादशम् अधिकरणम् । माध्वमते तु सप्तदशम् अधिकरणम् ।

अत्र "तदुक्तम्" इति प्रथमान्तपदस्य सत्त्वात् अस्य अधिकरणारम्भकत्वं संगतमेव। चतुर्थसामान्यनियमात् । तु-शब्दस्य विधेयान्तरबोधकत्वात् न बाधकत्वम् । नवमविशेष नियमात्। वल्लभभाष्ये अधिकरणस्य अरचनायां तस्य दोषो वाच्य । परसूत्रे षट्सु भाष्येषु अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति संगच्छते एव।

## षोडश साम्परायाधिकरणम्

अत्र "साम्पराये तर्तव्याभावात् तथा ह्यन्ये" ३।३।२७ (३८६) इति सूत्रस्य "साम्पराय"-शब्दात् अस्य "साम्परायाधिकरणं" नाम। अत्र निम्बार्क-माध्व-भाष्य-भिन्न-सर्वेषु भाष्येषु अधिकरणम् आरब्धम्। तत्र शंकर भास्करयो भाष्ययो षोडशाधिकरणे सूत्रद्वय गृहीतम्। रामानुज-

श्रीपति-भाष्ययोः द्वादशाधिकरणे सूत्रचतुष्टयं गृहीतम् । निम्बार्क-भाष्ये अधिकरणारम्भात् तस्य एकादशाधिकरणस्य सूत्रषट्क-मध्ये द्वितीयं सूत्रम् । माध्वभाष्ये अधिकरणस्य अनारम्भात् तदीय-सप्तदशाधिकरणस्य सूत्रद्वय-मध्ये द्वितीय सूत्रम् । श्रीकण्ठ-भाष्ये अधिकरणस्य आरम्भात् तस्य एतत् सप्तदशाधिकरणे सूत्रचतुष्टयं गृहीतम्, वल्लभभाष्ये तु षष्ठाधिकरणे सूत्रद्वय गृहीतम् ।

तच्च सूत्रद्वयम्

१ । "साम्पराये तर्त्तव्याभावात् तथा ह्यन्ये" ३।३।२७ (३८६)

२ । "छन्दत उभयाविरोधात्" ३।३।२८ (३८७)

अत्र ( १ ) "साम्पराये तर्त्तव्याभावात् तथा ह्यन्ये" ३।३।२७ (३८६) इत्यत्र "अन्ये" इति प्रथमान्तपदात् अत्र अधिकरणारम्भः सगतः एव । चतुर्थसामान्यनियमात् । हि-शब्दस्य विधेयान्तरज्ञापनात् अबाधकत्वम् । द्वादशविशेषनियमात् । निम्बार्क-मध्व-भाष्यद्वय-मध्ये अधिकरणस्य अरचनाया दोषः कल्पनीयः ।

( २ ) "छन्दत उभयाविरोधात्" ३।३।२८ (३८७) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात् । परसूत्रे नियमबलादेव अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिश्च संगच्छते । माध्वभाष्ये अत्र अधिकरणस्य रचनात् दोष ।

## सप्तदशं गतेरर्थवत्त्वाधिकरणम्

अत्र "गतेरर्थवत्त्वमुभयथान्यथा हि विरोध." ३।३।२९ (३८८) इति सूत्रस्य "गतेः अर्थवत्त्वम्" इति पदद्वयात् अस्य "गतेरर्थवत्त्वाधिकरण" नाम । अत्र शङ्कर-भास्कर-वल्लभ-भाष्येषु अधिकरणं रचितम्, शिष्टेषु तु न । तत्र शङ्कर-भास्कर-भाष्ययो. सप्तदशाधिकरण, वल्लभभाष्ये, तु सप्तमाधिकरणम् । शङ्कर-भास्कर-भाष्ययो. सूत्रद्वय गृहीतम्, वल्लभभाष्ये तु एतत् एकमेव सूत्रम् । रामानुजभाष्ये तथा श्रीपति-भाष्ये एतत् सूत्र तदीय-द्वादशाधिकरणस्य चतुर्षु सूत्रेषु तृतीयं सूत्रम् । निम्बार्क-भाष्ये तदीयैकादशाधिकरणस्य षट्सु सूत्रेषु चतुर्थ सूत्रम्, माध्वभाष्ये तदीयाष्टादशाधिकरणस्य त्रिषु सूत्रेषु द्वितीयं सूत्रं, श्रीकण्ठ-भाष्ये तदीय-सप्तदशाधिकरणस्य चतुर्षु सूत्रेषु तृतीय सूत्रम्, वल्लभभाष्ये तु तदीय-सप्तमाधिकरणस्य एकमेव सूत्रम् । तच्च सूत्रद्वयम्

१ । "गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः" ३।३।२९ (३८८)

२ । "उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्" ३।३।३० (३८९)

अत्र ( १ ) "गतेरर्थवत्त्वमुभयथान्यथा हि विरोध." ३।३।२९ (३८८) इत्यत्र "अर्थवत्त्वम्" 'विरोध" इति प्रथमान्तपदद्वयात् अस्य अधिकरणारम्भकत्व युक्तमेव, चतुर्थ-सामान्यनियमात् । हि-शब्दस्य विधेयान्तरज्ञापकत्वात् न-बाधकत्वम्, द्वादशविशेषनियमात् । रा-नि-म-श्री-श्रीप-भाष्येषु अधिकरणस्य अरचनायां दोष. । एतेषां संख्याबाहुल्यादपि नियम-विरुद्धत्वात् दोष एव वाच्यः ।

(२) "उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्" ३।३।३० (३८९) इत्यत्र "उपपन्न" इति प्रथमान्तपदस्य सत्त्वादपि नास्य अधिकरणारम्भकत्वं, चतुर्थसामान्यनियमात् । यतः "क उपपन्न" इति आकांक्षाया बोधकत्वात् अस्य साकांक्षत्वं सिद्ध्यति । सप्तमविरोधनियमात् । वल्लभभाष्ये अधिकरणस्य आरम्भात् दोषः वक्तव्यः । परसूत्रे अधिकसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिः ।

## अष्टादशम् अनियमाधिकरणम्

अत्र "अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम्" ३।३।३१ (३९०) इति सूत्रस्य "अनियम" इति पदात् अस्य "अनियमाधिकरणं" नाम । तत्र रामानुजनिम्बार्क-श्रीपति-भाष्य-भिन्नेषु सर्वेषु भाष्येषु एतेन एकेनैव सूत्रेण एतद् अधिकरणं रचितम् । तत्रापि रामानुज-भाष्ये सूत्रद्वयेन इति बोद्धव्यम् । शङ्कर-भास्कर-भाष्ययोः एतद्धि अष्टादशाधिकरणम् । रामानुज-भाष्ये त्रयोदशाधिकरणम् । निम्बार्क भाष्ये एकादशाधिकरणस्य षट्सु सूत्रेषु षष्ठं सूत्रम् । माध्वभाष्ये तथा श्रीकण्ठभाष्ये ऊनविंशाधिकरणम् । श्रीपति-भाष्ये तदीय त्रयोदशाधिकरणस्य सूत्रद्वयमध्ये द्वितीयं सूत्रम् । वल्लभभाष्ये एतत्तु नवमाधिकरणम् ।

तत्र "अनियम" 'अविरोध" इति प्रथमान्तपदद्वयसत्त्वात् अस्य अधिकरणारम्भकत्वं युक्तम् । चतुर्थसामान्यनियमात् । निम्बार्क-श्रीपति-भाष्ययोः अधिकरणस्य अनारम्भात् दोषः कल्पनीयः । परसूत्रे अधिकसम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्तिश्च सगच्छते ।

## ऊनविंशं यावदधिकाराधिकरणम्

अत्र "यावदधिकारमवस्थितिराधिकारिकाणाम्" ३।३।३२ (३९१) इति सूत्रस्य "यावदधिकारम्" इति पदात् अस्य "यावदधिकाराधिकरणं" नाम । तत्र शंकर-भास्कर-निम्बार्क-मध्व-श्रीकण्ठ-श्रीपति-वल्लभ-भाष्येषु अधिकरणम् आरब्धम् । केवलं रामानुज-भाष्ये तत् न कृतम् । तत्र एतत् सूत्रं तदीय त्रयोदशाधिकरणस्य सूत्रद्वयमध्ये द्वितीयं सूत्रम् । शङ्कर-भास्कर-भाष्ययोः एतत् ऊनविंशाधिकरणम् । तत्र एतेन एकेनैव सूत्रेण एतदधिकरणं रचितम् । निम्बार्क-भाष्यस्य एतत् द्वादशाधिकरणम् । अत्रापि एतेन एकेन सूत्रेण एतदधिकरणं समाप्तम् । माध्वभाष्यस्य विंशाधिकरणम् । तत्र च सूत्रद्वयेन एतदधिकरणं रचितम् । श्रीकण्ठभाष्यस्य अष्टादशाधिकरणम् । अत्रापि एतेन एकेनैव सूत्रेण एतदधिकरणं रचितम् । श्रीपति भाष्यस्य त्रयोदशाधिकरणम् । तत्र च सूत्रद्वयेन एतदधिकरणं रचितम् । वल्लभ-भाष्यस्य एतद्धि दशमाधिकरणम् । अत्रापि एतेन एकेनैव सूत्रेण एतदधिकरणं सङ्कलितम् ।

अत्र "अवस्थिति" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं संगतमेव । चतुर्थसामान्यनियमात् । रामानुजभाष्ये अधिकरणस्य अरचनायां तस्य दोषः वक्तव्यः । श्रीपति-भाष्ये अत्र सूत्र-क्रमः विपर्यस्तः इति दृश्यते ।

## विंशम् अक्षरध्यधिकरणम्

अत्र "अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम्" ३।३।३३ (३९२) इति सूत्रस्य "अक्षरधियाम्" इति पदात् अस्य "अक्षरध्यधिकरण' नाम। तत्र माध्वभाष्य-भिन्नेषु सर्वेषु भाष्येषु अत्र अधिकरण रचितम्। माध्वमते एतत् सूत्र तदीय-विंशाधिकरणस्य सूत्रद्वयमध्ये द्वितीयं सूत्रम्। येषु भाष्येषु अधिकरणं रचित तत्र शंकर-भास्कर-भाष्ययो. एकं सूत्रं गृहीतम्; रामानुज-निम्बार्क-श्रीकण्ठ-श्रीपति-वल्लभ-भाष्येषु सूत्रद्वयं गृहीतम्। एवं च शंकर-भास्करयो भाष्ययोः विंशाधिकरणम्, रामानुज-श्रीपति-भाष्ययो· चतुर्दशाधिकरणम्, निम्बार्क-भाष्ये त्रयोदशाधिकरणम्, श्रीकण्ट-भाष्ये विंशाधिकरणम्। वल्लभभाष्ये एकादशाधिकरणम्।

तत्र "अवरोध" "तदुक्तम्" इति प्रथमान्तपदद्वयात् अस्य अधिकरणारम्भकत्वं युक्तमेव। चतुर्थसामान्यनियमात्। तु-शब्दस्य पूर्वपक्षीय-शंकानिरासकत्वात् न तत्र बाधकत्वम्; अष्टादशविशेषनियमात्। तथा सति माध्वभाष्ये अधिकरणस्य अनारम्भात् दोषः कल्पनीय। परसूत्रे अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति· कल्पयितुं शक्यते।

## एकविंशम् इयदधिकरणम्

अत्र "इयदामननात्" ३।३।३४ (३९३) इति सूत्रस्य "इयत्" इति पदात् अस्य "इयदधिकरण" नाम। तत्र शंकर-भास्कर-भाष्यद्वये एकविंशाधिकरणे एतद्धि एकमेव सूत्रम्। माध्वभाष्ये एकविंशाधिकरणस्य सूत्रद्वयमध्ये एतच्च प्रथम सूत्रम्। तेन शंकर-भास्कर-माध्व-भाष्येषु एतेन सूत्रेण अधिकरणम् आरब्धम्। अवशिष्टभाष्येषु तन्न कृतम्। तत्र रामानुज-श्रीपति-भाष्ययो. एतत् सूत्रं तदीय-चतुर्दशाधिकरणस्य सूत्रद्वयमध्ये द्वितीयं सूत्रम्। निम्बार्क-भाष्ये तदीय-त्रयोदशाधिकरणस्य सूत्रद्वयमध्ये द्वितीयं सूत्रम्। श्रीकण्ठभाष्ये तदीय-विंशाधिकरणस्य सूत्रद्वयमध्ये एतच्च द्वितीयं सूत्रम्। वल्लभभाष्ये तदीयैकादशाधिकरणस्य सूत्रद्वयमध्ये द्वितीयं सूत्रम्।

अत्र "इयत्" इति प्रथमान्तपदात् अधिकरणारम्भः संगत', चतुर्थसामान्यनियमात्। रा नि-श्री-श्रीप-व-भाष्येषु नियमम् एतम् अनुसृत्य अधिकरणस्य अरचनाया दोषः। परसूत्रे अधिकसम्मतया अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्तिः संगच्छते।

## द्वाविंशम् अन्तराधिकरणम्

अत्र "अन्तरा भूतग्रामवत् स्वात्मन." ३।३।३५ (३९४) इति सूत्रस्य "अन्तरा" इति पदात् अस्य "अन्तराधिकरण" नाम। शङ्कर-मध्व-वल्लभ-भाष्यभिन्नेषु सर्वत्र एतत् सूत्रं परवर्त्ति-सूत्रेण सह एकीकृत्य पठितम्। एवं च शंकरभाष्ये सूत्रद्वयेण एतदधिकरणं रचितम्, भास्करभाष्ये तु तथामिलितेन एकेन सूत्रेण। रामानुज-भाष्ये तथामिलितसूत्रत्रयेण, निम्बार्क-भाष्ये तथैव सूत्रद्वयेन, माध्वभाष्ये अत्र अधिकरणं न रचितम् तत्र तदीयैकविंशाधि-

करणस्य सूत्रत्रयमध्ये द्वितीयं सूत्रम्। श्रीकण्ठ-भाष्ये तथामिलितसूत्रद्वयेन, श्रीपति-भाष्ये पुनः तथैव सूत्रद्वयेन, वल्लभभाष्ये अमिलितसूत्रत्रयेण एतदधिकरणं रचितम्। शङ्कर भास्कर-भाष्ये एतच्च द्वाविंशाधिकरणम्, रामानुज-मते पञ्चदशाधिकरणम्, निम्बार्क-मते चतुर्दशाधिकरणम्, श्रीकण्ठ-मते एकविंशाधिकरणम्, श्रीपति-मते पञ्चदशाधिकरणं, तथा वल्लभमते द्वादशाधिकरणं भवति।

तत्र च सूत्रद्वयम्—

१। "अन्तरा भूतग्रामवत् स्वात्मनः"   ३।३।३५ (३९४)

२। "अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्" ३।३।३६ (३९५)

तत्र (१) "अन्तरा भूतग्रामवत् स्वात्मनः" ३।३।३५ (३९४) इत्यत्र "अन्तरा" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तम्, चतुर्थसामान्यनियमात्। माध्व-भाष्य-भिन्नेषु सर्वत्र तथैव कृतम्। अतोऽत्र माध्वस्यैव दोषः। भा-रा-नि-श्री-श्रीप-भाष्येषु परसूत्रमपि एतच्छेषत्वेन पठ्यते। तत्र युक्तम्। विजातीयविषयान्तरस्य सूचनात्। चतुर्थ विशेषनियमात्।

(२) "अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्" ३।३।३६ (३९५) इत्यत्र भेदानुपपत्ति इति प्रथमान्तपदस्य सत्त्वात् अपि 'इति चेन्न' इति पदसत्त्वात् नास्य अधिकरणारम्भकत्वम्। पञ्चमविशेषनियमात्। भा-रा-नि-श्री-श्रीप भाष्येषु एतत्सूत्रस्य पूर्वसूत्र-शेषत्वं दृश्यते। तत् युक्तम्। विषयभेदात् चतुर्थविशेषनियमात्। परसूत्रे अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिश्च सङ्गता। अतः भास्कर-रामानुज-निम्बार्क-श्रीकण्ठ-श्रीपति-भाष्येषु "इति चेन्न"-पदघटितमिलितसूत्रेण अधिकरणस्य आरम्भात् दोषप्रसक्तिः भवत्येव। तेषु सूत्र-द्वयमेलनादेव अयं दोषः सञ्जातः।

## त्रयोविंशं व्यतिहाराधिकरणम्

अत्र "व्यतिहारो विंशिषन्ति हीतरवत्" ३।३।३७ (३९६) इति सूत्रस्य "व्यतिहार" इति पदात् अस्य "व्यतिहाराधिकरणं" नाम। तत्र शङ्कर-भास्कर-माध्व-भाष्येषु अत्र अधिकरणम् आरब्धम्, सूत्रं च तत्र एकमेव गृहीतम्। शङ्कर-भास्कर-भाष्ययोः एतद्धि त्रयोविंशाधिकरणम्, माध्वमते तु द्वाविंशाधिकरणम्। रामानुज-श्रीपति-भाष्ययोः एतत् सूत्रं तदीय-पञ्चदशाधिकरणस्य सूत्रत्रयमध्ये द्वितीयं सूत्रम्। निम्बार्क-भाष्ये तदीय-चतुर्दशाधिकरणस्य सूत्रद्वयमध्ये द्वितीयं सूत्रम्। श्रीकण्ठ-भाष्ये एतत् च तदीयैकविंशाधिकरणस्य सूत्रद्वयमध्ये द्वितीयं सूत्रम्। तथा वल्लभभाष्ये एतत् सूत्रं तदीय-द्वादशाधिकरणस्य सूत्रत्रयमध्ये द्वितीयं सूत्रम् इति विशेषः।

अत्र "व्यतिहार" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्वं संगच्छते।

चतुर्थसामान्यनियमात्, हि-शब्दस्य विधेयान्तरज्ञापनाच्च, द्वादशविशेषनियमात् । रा-नि-श्री-श्रीप-व-भाष्येषु अधिकरणस्य अरचनायां दोष, नियमविरुद्धत्वात् । परसूत्रे अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्तिः ।

## चतुर्विंशं सत्याद्यधिकरणम्

अत्र "सैव हि सत्यादयः" ३।३।३८ (३९७) इति सूत्रस्य "सत्यादि."-पदात् अस्य "सत्याद्यधिकरण" नाम । तत्र शङ्कर-भास्कर-मतेन एतत् चतुर्विंशाधिकरणम्, रामानुज-निम्बार्क-श्रीपति-मतेषु पञ्चदशाधिकरणम्, माध्वमतेन त्रयोविंशाधिकरणम्, श्रीकण्ठमतेन द्वाविंशाधि-करणम् । वल्लभ-मतेन त्रयोदशाधिकरणम् । शङ्कर-भास्कर-निम्बार्क-मध्व-श्रीकण्ठ-मतेषु अत्र एकमेव सूत्रम् । वल्लभ-मतेन तु सूत्रद्वयम् । श-भा-नि-म-श्री-व-भाष्येषु अत्र अधिकरणम् आरब्धम् । रा-श्रीप-मतद्वये तु अधिकरणं न आरब्धम् । तत्र रामानुज-श्रीपति-भाष्यद्वये एतत् सूत्रं तदीय-पञ्चदशाधिकरणस्य सूत्रत्रयमध्ये तृतीय सूत्रम् ।

अत्र "सत्यादय" इति प्रथमान्तपदात् अधिकरणारम्भ युक्त, चतुर्थसामान्यनियमात् । हि-शब्दस्य विधेयान्तरत्वज्ञापनाच्च । द्वादशविशेषनियमात् । तेन रामानुज-श्रीपति-भाष्ययो. अधिकरणस्य अरचनायां दोष सञ्जातः ।

## पञ्चविंशं कामाद्यधिकरणम्

अत्र "कामादीतरत्र तत्र चायतनादिभ्य" ३।३।३९ (३९८) इति सूत्रस्य "कामादि"-शब्दात् अस्य "कामाद्यधिकरण" नाम । तत्र वल्लभ-भाष्य-भिन्नेषु सर्वेषु भाष्येषु अत्र अधिकरण रचितम् वल्लभभाष्ये एतत् सूत्र तदीय-त्रयोदशाधिकरणस्य सूत्रद्वयमध्ये द्वितीय सूत्रम् । शङ्कर-भास्कर-मतद्वये एतद्धि पञ्चविंशाधिकरण, रामानुज-निम्बार्क-श्रीपति-भाष्येषु तु षोडशाधि-करणम् । माध्वमते चतुर्विंशाधिकरणम् । तथैव श्रीकण्ठमते त्रयोविंशाधिकरणम् । शङ्कर-भास्कर-श्रीकण्ठ-भाष्येषु अत्र एकमेव सूत्रं गृहीतम् । रामानुज-निम्बार्क-मध्व-श्रीपति-भाष्येषु सूत्रत्रयम् इति विशेष' ।

अत्र "कामादि" इति प्रथमान्तपदसत्त्वात् अत्र अधिकरणारम्भः संगत. एव । चकारस्य न साकाङ्क्षत्वसाधकत्वम् । चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च । वल्लभभाष्ये अधिकरणस्य अरचनाया दोष' । परसूत्रे अधिकरणारम्भात् अत्र अधिकरणसमाप्ति' ।

## षड्विंशम् आदराधिकरणम्

अत्र "आदरादलोप." ३।३।४० (३९९) इति सूत्रस्य "आदर"-शब्दात् अस्य "आदरा-धिकरण" नाम । तत्र शंकर-भास्कर-श्रीकण्ठ-वल्लभ-भाष्येषु अधिकरणम् आरब्धम्, शिष्टेषु न । शंकर-भास्कर-वल्लभ-भाष्येषु अत्र सूत्रद्वयं गृहीतम् । श्रीकण्ठ-भाष्ये तु एतदेव एक सूत्रम् । शङ्कर-भास्कर-भाष्ययो षड्विंशाधिकरणम् । श्रीकण्ठभाष्ये चतुर्विंशाधिकरणम् । वल्लभभाष्ये तु

चतुर्थाधिकरणम् । रामानुज निम्बार्क-श्रीपति-भाष्येषु तदीय-षोडशाधिकरणस्य सूत्रत्रयमध्ये एतद्धि द्वितीयं सूत्रम । माध्वभाष्ये तदीय-चतुर्विंशाधिकरणस्य सूत्रत्रयमध्ये द्वितीय सूत्रम् ।

तत्र सूत्रद्वयम्—

१। "आदरादलोप" ३।३।४० (३९९)

२। "उपस्थितेऽतस्तद्वचनात्" ३।३।४१ ३।३।४१ (४००)

अत्र (१) "आदरादलोप" ३।३।४० (३९९) इत्यत्र "अलोप" इति प्रथमान्त-पदस्य सत्त्वात् अधिकरणारम्भ युक्त एव, चतुर्थसामान्यनियमात् । तेन रा-नि-म-श्रीप-भाष्येषु अधिकरणस्य अनारम्भात् दोष ।

(२) "उपस्थितेऽतस्तद्वचनात्" ३।३।४१ (४००) इत्यत्र प्रथमान्तपदाभावात नास्य अधिकरणारम्भकत्वम । चतुर्थसामान्यनियमात् । अत" शब्दस्य साकांक्षत्वात् च । सप्तमविशेषनियमात् । श्रीकण्ठभाष्ये अत्र पञ्चविंशाधिकरणस्य रचनायां दोष वक्तव्य । परसूत्रे अधिकम मत्या अधिकरणस्य आरम्भात अत्रैव अधिकरणसमाप्तिश्च ।

## सप्तविंश तन्निर्धारणाधिकरणम्

अत्र 'तन्निर्धारणानियमस्तद्दृष्टे पृथग्घ्यप्रतिबन्ध फलम्" ३।३।४२ (४०१) इति सूत्रस्य "तन्निर्धारण' शब्दात् अस्य 'तन्निर्धारणाधिकरण" नाम । तत्र सर्वेषु भाष्येषु अनेन एकेनैव सूत्रेण एतदधिकरण रचितम् । शङ्कर-भास्कर-भाष्यद्वये सप्तविंशाधिकरणम् । रामानुज निम्बार्क-श्रीपति-भाष्येषु सप्तदशाधिकरणम्, माध्वभाष्ये पञ्चविंशाधिकरणम् । श्रीकण्ठ भाष्ये षड्विंशाधिकरणम्, तथा बलभभाष्ये पञ्चदशाधिकरणं भवति ।

अत्र "तन्निर्धारणानियम" "पृथग्घ्यप्रतिबन्ध" 'फलम्" इति प्रथमान्तपदात् अत्र अधिकरणारम्भ संगत एव, चतुर्थसामान्यनियमात । तथैव च सर्वेषु भाष्येषु कृतम्, अत अत्र न कस्यापि दोष ।

## अष्टाविंश प्रदानाधिकरणम्

अत्र "प्रदानवदेव तदुक्तम्" ३।३।४३ (४०२) इति सूत्रस्य 'प्रदान" इति शब्दात् अस्य 'प्रदानाधिकरणं" नाम । तत्र सर्वेषु भाष्येषु एतेन एकेन सूत्रेण एतदधिकरणं रचितम् ।

अत्र 'तदुक्तम्" इति प्रथमान्तपदस्य सत्त्वात् अस्य अधिकरणारम्भकत्वं युक्तम्, चतुर्थसामान्यनियमात् । परसूत्रे सर्वसम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्तिश्च संगता । अत्रापि न कस्यापि दोष ।

## ऊनत्रिंश लिङ्गभूयस्त्वाधिकरणम्

अत्र "लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि" ३।३।४४ (४०३) इति सूत्रस्य 'लिङ्गभूयस्त्व"-शब्दात् अस्य "लिङ्गभूयस्त्वाधिकरणं" नाम । तत्र सर्वेषु भाष्येषु अधिकरणम् आरब्धम् ।

तत्र शंकर-भास्कर-भाष्ययोः नव सूत्राणि गृहीतानि, बल्लभभाष्ये तु दश सूत्राणि। अवशिष्टभाष्येषु एतदेव एकं सूत्रं गृहीतम्। एवं च शंकर-भास्कर-भाष्ययोः ऊनत्रिंशाधिकरणम्, रामानुज-निम्बार्क-श्रीपति-भाष्येषु ऊनविंशाधिकरणम्, माध्वभाष्ये सप्तविंशाधिकरणम्, श्रीकण्ठ-भाष्ये अष्टाविंशाधिकरणम्। वल्लभभाष्ये तु सप्तदशाधिकरणम्।

तानि नव सूत्राणि यथा

१। "लिंगभूयस्त्वात् तद्धि बलीयस्तदपि" ३।३।४४ (४०३)

२। "पूर्वविकल्प प्रकरणात् स्यात् क्रिया मानसवत्" ३।३।४५(४०४)

३। "अतिदेशाच्च" ३।३।४६ (४०५)

४। "विद्यैव तु निर्धारणात्" ३।३।४७(४०६)

५। "दर्शनाच्च" ३।३।४८ (४०७)

६। 'श्रुत्यादिवलीयस्त्वाच्च न बाधः" ३।३।४९ (४०८)

७। "अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्" ३।३।५० (४०९)

८। "न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्ति" ३।३।५१ (४१०)

९। "परेण च शब्दस्य ताद्विध्य भूयस्त्वात् त्वनुबन्ध "३।३।५२(४११)

अत्र (१) "लिगभूयस्त्वात् तद्धि बलीयस्तदपि" ३।३।४४ (४०३) इत्यत्र "बलीय." तथा "तत्" इति प्रथमान्तपदद्वयसत्त्वात् अधिकरणारम्भ संगत। चतुर्थसामान्यनियमात्। हि-अपि-शब्दौ न बाधकौ, द्वादशविशेषनियमात्। तथैव कृतं सर्वै. भाष्यकारै।

(२) "पूर्वविकल्प प्रकरणात् स्यात् क्रिया मानसवत्" ३।३।४५ (४०४) इत्यत्र "पूर्वविकल्प." तथा "क्रिया" इति प्रथमान्तपदद्वयसत्त्वात् अत्रापि अधिकरणारम्भः सगतः। चतुर्थसामान्यनियमात। तथैव कृतं रा-नि-म-श्री-श्रीप-भाष्येषु। तथापि "स्यात्"-शब्द योगात् अर्थतः साकाक्षत्वम् अत्र भवत्येव। अत नास्य अधिकरणारम्भकत्वम्। न च "चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" २।३।१६ इति सूत्रे श-भा-नि-श्री-श्रीप-भाष्येषु अधिकरणस्य आरम्भात् तस्य व्यभिचारः इति वाच्यम्। तत्र तु-शब्दस्य साकाक्षत्वबाधकत्वात्। नान्यत्र कुत्रापि अधिकसम्मत्या "स्यात्"-शब्दघटितसूत्रस्य अधिकरणारम्भकत्वं दृष्टम्। अत. अत्र एकः नियमः कर्तव्य, येन अस्य विधेयत्वं स्यात्। स च नियम. एवम् भवतु

"तु-शब्दयुक्त-प्रथमान्तपदात् "स्यात्"-शब्दसत्त्वम् अधिकरणारम्भकम्" इति एकोनविंशः नियमः।

अत्र "पूर्वविकल्प" इति तु-वर्जित-प्रथमान्तपदात्, तत्र स्यात्-शब्दयोगात् नात्र अधिकरणम् आरब्धम्। तेन रा-नि-म-श्री-श्रीप-भाष्यणा दोषः। न. वा "शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदंगतया तेषामवश्यानुष्ठेयत्वात्" ३।३।२७ इति सूत्रे व्यभिचारशङ्का ? "तु-स्यात्"-शब्दयो. साक्षाद् योगाभावात्।

(३) "अतिदेशाच्च" ३।३।४६ (४०५) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च।

(४) "विद्यैव तु निर्द्धारणात्" ३।३।४७ (४०६) इत्यत्र "विद्या" इति प्रथमान्तपदसत्त्वेऽपि तु-शब्दयोगात् नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात्, नवमविशेषनियमाच्च। भाष्यभाष्ये अधिकरणारम्भात् दोषः। अत्र तेन ऊनत्रिंशत् अधिकरणं कृतम्। शा-नि-श्री-श्रीप-भाष्येषु परसूत्रस्य एतत्सूत्रशेषत्वं दृश्यते। तन्न सम्यक्। परसूत्रे च-कारस्य सत्त्वात्। चतुर्थविशेषनियमात्।

(५) "दर्शनाच्च" ३।३।४८ (४०७) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। च-कारस्य न पादपूरकत्वम्, हेतो समुच्चयात्। चतुर्थसामान्यनियमात्, नवमविशेषनियमात् च। शा-नि-श्री-श्रीप-भाष्येषु एतत्सूत्रस्य पूर्वसूत्रशेषत्वं दृश्यते। तत्र युक्तम्, च-कारात् हेतौ विजातीयेन समुच्चयाभावात्। चतुर्थविशेषनियमात्।

(६) "श्रुत्यादिबलीयस्त्वाच्च न बाधः" ३।३।४९ (४०८) इत्यत्र "बाधः" इति प्रथमान्तपदसत्त्वेऽपि च-कारेण साकाङ्क्षत्वविधानात् नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च। भाष्यभाष्ये अधिकरणारम्भात् दोषः। अत्र तन्मते त्रिंशत् अधिकरणम्।

(७) "अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्" ३।३।५० (४०९) इत्यत्र "दृष्टः" तथा "तदुक्तम्" इति प्रथमान्तपदद्वयसत्त्वेऽपि च-कारयोगात् नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात् तथा षष्ठविशेषनियमात्। मध्व-बलदेव भाष्यद्वयमध्ये "अनुबन्धादिभ्यः" इति एकं सूत्रम्, शिष्टम् अपरम्। तत्र युक्तम्, विषयसाजात्यात्। चतुर्थविशेषनियमो द्रष्टव्यः। तत्रापि ताभ्यामेव अधिकरणद्वयमपि रचितम्। ततः तस्य दोषः। तन्मते अत्र एकत्रिंशत् तथा द्वात्रिंशत् इति अधिकरणद्वयम्। "तदुक्तम्" इति पदात् "विकरणत्वान्नेति चेत् तदुक्तम्" २।१।३१ इतिवत् अत्र अधिकरणसमाप्तिः न कथम् इति चेत्। न, अर्थभेदात् परसूत्रे साकाङ्क्षत्वस्य बोधनात् च।

(८) "न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः" ३।३।५१ (४१०) इत्यत्र "लोकापत्तिः" इति प्रथमान्तपदसत्त्वेऽपि "अपि" इति पदसत्त्वात्, अर्थतः साकाङ्क्षत्वस्य विधानाच्च नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च। माध्वभाष्ये त्रयस्त्रिंशदधिकरणारम्भात् दोषः।

(९) "परेण च शब्दस्य ताद्विध्यं भूयस्त्वात् त्वनुबन्धः" ३।३।५२ (४११) इत्यत्र "ताद्विध्यं" तथा "अनुबन्धः" इति प्रथमान्त-पदद्वय-सत्त्वेऽपि च-कारस्य तथा तु-कारस्य योगात् अस्य अधिकरणारम्भकत्वं बाधितम्। माध्वभाष्ये चतुस्त्रिंशदधिकरणस्य रचनायां दोषः।

परसूत्रे सप्तसु भाष्येषु अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति सगता। एवं च अत्र माध्वभाष्यस्य षट् दोषा, रा-नि-श्री-श्रीप-भाष्येषु प्रत्येकं एकैकः दोष।

### त्रिंशत् एकात्म्याधिकरणम्

अत्र "एक आत्मन शरीरे भावात्"- ३।३।५३ (४१२) इति सूत्रस्य "एक आत्मन." इति पदद्वयात् अस्य "एकात्म्याधिकरण" नाम। अत्र बल्लभभाष्य-भिन्नेषु सर्वेषु भाष्येषु अधिकरणम् आरब्धम्। सूत्रद्वयं च तत्र गृहीतम्। तत्र शंकर-भास्कर-श्रीकण्ठ-भाष्येषु त्रिंशत् अधिकरणम्। रामानुज-निम्बार्क-श्रीपति-भाष्येषु एकविंशति अधिकरणम्। माध्वभाष्ये पञ्चत्रिंशत् अधिकरणम् तथा बल्लभभाष्ये सप्तदशाधिकरणम्। तत्र इद सूत्रम् एतदधिकरणान्तर्गतेषु दशसु सूत्रेषु दशम सूत्रम्। तच्च सूत्रद्वयम्

१। "एक आत्मन शरीरे भावात्" ३।३।५३ (४१२)

२। "व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्" ३।३।५४ (४१३)

अत्र (१) "एक आत्मन शरीरे भावात्" ३।३।५३ (४१३) इत्यत्र "एके" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्व युक्तम्। चतुर्थसामान्यनियमात्। बल्लभभाष्ये अधिकरणस्य अनारम्भात् दोष।

(२) "व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्" ३।३।५४ (४१३) इत्यत्र "व्यतिरेक" इति प्रथमान्तपदसत्त्वेऽपि चतुर्थसामान्यनियमात् तु-शब्दयोगाच्च नास्य अधिकरणारम्भकत्वम्. नवमविशेषनियमात्। बल्लभभाष्ये अधिकरणस्य रचनाया दोष। तत्र एतत् सूत्र तदीयाष्टादशाधिकरणस्य सूत्रत्रयमध्ये प्रथम सूत्रम्। परसूत्रे अधिकसम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्ति युक्ता एव।

### एकत्रिंशत् अङ्गावबद्धाधिकरणम्

अत्र "अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्" ३।३।५५ (४१४) इति सूत्रस्य "अङ्गावबद्धा" इति पदात् अस्य "अङ्गावबद्धाधिकरण" नाम। तत्र बल्लभ-भाष्यभिन्नेषु सर्वेषु भाष्येषु सूत्रद्वयेन एतदधिकरण रचितम्। बल्लभभाष्ये एतत् सूत्र तदीयाष्टादशाधिकरणस्य सूत्रत्रयमध्ये द्वितीय सूत्रम्। तत्र शङ्कर-भास्कर-श्रीकण्ठ-भाष्येषु एतद्धि एकत्रिंशद् अधिकरणम्। रामानुज-निम्बार्क-श्रीपति-भाष्येषु द्वाविंशाधिकरणम्। माध्वभाष्ये तु षट्त्रिंशदधिकरणम्। तच्च सूत्रद्वयम्

१। "अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्" ३।३।५५ (४१४)

२। "मन्त्रादिवद् वाऽविरोध" ३।३।५६ (४१५)

तत्र (१) अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्" ३।३।५५ (४२४) इत्यत्र "अङ्गावबद्धा" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तम् चतुर्थसामान्यनियमात्।

शब्दस्तु नात्र तस्य बाधक । अष्टादश विशेषनियमात् । "तत् तु समन्वयात्" १।१।४ इति सूत्रवत् अनुक्त-पूर्वपक्ष-व्यावर्त्तकत्वार्थकत्वात् तु शब्दस्य । वल्लभभाष्ये अधिकरणस्य अनारम्भात् दोष ।

( २ ) "मन्त्रादिवद् वाऽविरोध' ३।३।५६ (४१५) इत्यत्र "अविरोध' इति प्रथमान्तपदसत्त्वेऽपि (चतुर्थसामान्यनियमात्) 'वा"-शब्देन साकांक्षत्वसिद्धे नास्य अधिकरणारम्भकत्वं युक्तम् । पञ्चविरोधनियमात् । परसूत्रे सर्वत्र अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति सगच्छते ।

## द्वात्रिंशत् भूमज्यायस्त्वाधिकरणम्

अत्र "भूम्न क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति" ३।३।५७ (४१६) इति सूत्रस्य "भूम्न क्रतुवज्ज्यायस्त्वम्" इति पदात् अस्य "भूमज्यायस्त्वाधिकरण" नाम । तत्र सर्वेषु भाष्येषु एनेन एकेन सूत्रेण एतदधिकरणम् आरब्धम् । शङ्कर-भास्कर-श्रीकण्ठ-भाष्येषु द्वात्रिंशत् अधिकरणम्, रामानुज-निम्बार्क-श्रीपति-भाष्येषु त्रयोविंशाधिकरणम्, माध्वभाष्ये सप्तत्रिंशत अधिकरणम्, वल्लभभाष्ये ऊनविंशाधिकरणम् ।

अत्र 'क्रतुवज्ज्यायस्त्वम्" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं संगतमेव । चतुर्थसामान्यनियमात्, हि शब्दस्य हेतुबोधकत्वाच्च द्वादशविशेषनियमात् । परसूत्रेण सर्वे अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्तिश्च संगच्छते ।

## त्रयस्त्रिंशत् शब्दादिभेदाधिकरणम्

अत्र "नाना शब्दादिभेदात्" ३।३।५८ (४१७) इति सूत्रस्य 'शब्दादिभेदात" इति पदात् अस्य शब्दादिभेदाधिकरण" नाम । अत्रापि सर्वेषु भाष्येषु एतदेव एकं सूत्रं गृहीतम् । तत्र शङ्कर-भास्कर श्रीकण्ठ-भाष्येषु त्रयस्त्रिंशदधिकरणम् रामानुज निम्बार्क-श्रीपति भाष्येषु चतुर्विंशाधिकरणम् माध्वभाष्ये अष्टत्रिंशदधिकरणम् वल्लभभाष्ये तु विंशाधिकरणम् ।

"नाना" इति प्रथमान्तपदात् अत्र अधिकरणारम्भकत्वं युक्तम् चतुर्थसामान्य नियमात । परसूत्रे अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्ति ।

## चतुस्त्रिंशद् विकल्पाधिकरणम्

अत्र ( १ ) "विकल्पोऽविशिष्टफलत्वात्" ३।३।५९ (४१८) इति सूत्रस्य 'विकल्प" इति पदात् अस्य विकल्पाधिकरणं" नाम । तत्र शङ्कर-भास्कर-श्रीकण्ठ-भाष्येषु एतद्धि चतुस्त्रिंशदधिकरणम् रामानुज-निम्बार्क-श्रीपति भाष्येषु तु पञ्चविंशाधिकरणम् माध्वभाष्ये ऊनचत्वारिंशदधिकरणम् तथैव वल्लभभाष्ये एकविंशाधिकरणम् । शंकर-भास्कर-माध्व श्रीकण्ठ-वल्लभभाष्येषु एनेन एकेन सूत्रेण एतदधिकरणं रचितम् रामानुज निम्बार्क-श्रीपति भाष्येषु सूत्रद्वयेन इति विशेष ।

अत्र "विकल्पः" इति प्रथमान्तपदात् अधिकरणारम्भः संगच्छते । चतुर्थसामान्य-नियमात् । परसूत्रे अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिः ।

## पञ्चत्रिंशत् काम्याधिकरणम्

अत्र "काम्यास्तु यथाकाम समुच्चीयेरन् न वा पूर्वहेत्वभावात्" ३।३।६० (४१९) इति सूत्रस्य 'काम्या" इति पदात् अस्य "काम्याधिकरणं" नाम । तत्र शकर-भास्कर-मध्व-श्रीकण्ठ वल्लभ-भाष्येषु अधिकरणम् आरब्धम् रामानुज-निम्बार्क-श्रीपति-भाष्येषु तु न । शंकर-भास्कर-श्रीकण्ठ-भाष्येषु एतद्धि पञ्चत्रिंशद् अधिकरण, माध्वभाष्ये चत्वारिंशद् अधिकरणम् । वल्लभभाष्ये तु द्वाविंशाधिकरणम् । रामानुज-निम्बार्क-श्रीपति-भाष्येषु तदीय-पञ्चविंशाधिकरणस्य सूत्रद्वयमध्ये एतद्धि द्वितीय सूत्रमेव भवति । तेन रामानुज-निम्बार्क-श्रीपति-भाष्येषु अधिकरणस्य अरचनाया दोष कल्प्यते ।

अत्र 'काम्या" इति प्रथमान्तपदात् अधिकरणारम्भः युक्तः, चतुर्थसामान्यनियमात् तु-वा-शब्दौ नात्र बाधकौ द्वादशविशेषनियमात्, तथा अष्टादशविशेषनियमात् । परसूत्रे सर्व-सम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्तिः युक्ता ।

## षट्त्रिंशत् यथाश्रयभावाधिकरणम्

अत्र "अगेषु यथाश्रयभाव" ३।३।६१ (४२०) इति सूत्रस्य "यथाश्रयभाव." इति पदात् अस्य 'यथाश्रयभावाधिकरण" नाम । अत्र सर्वेषु भाष्येषु अधिकरणारम्भः कृतः । शकर-भास्कर-श्रीकण्ठ-भाष्येषु एतत् षट्त्रिंशद् अधिकरणम् । रामानुज-निम्बार्क-श्रीपति-भाष्येषु षड्विंशाधिकरणम्, माध्वभाष्ये एकचत्वारिंशद् अधिकरणम् वल्लभभाष्ये त्रयोविंशाधिकरणम् । तत्रापि शकर-भास्कर-रामानुज-निम्बार्क-श्रीकण्ठ-भाष्येषु अत्र षट् सूत्राणि गृहीतानि । माध्वभाष्ये चत्वारि सूत्राणि, श्रीपति वल्लभ-भाष्यद्वये तु सूत्रद्वयम् । तानि च षट् सूत्राणि

| | |
|---|---|
| १ । 'अगेषु यथाश्रयभाव" ३।३।६१ (४२०) | ४ । गुणसाधारण्यश्रुतेश्च" ३।३।६४ (४२३) |
| २ । 'शिष्टेश्च" ३।३।६२ (४२१) | ५ । "न वा तत्सहभावाश्रुतेः" |
| ३ । 'समाहारात्" ३।३।६३ (४२२) | ६ । "दर्शनाच्च" ३।३।६६ (४२५) |

अत्र ( १ ) "अगेषु यथाश्रयभाव" ३।३।६१ (४२०) इत्यत्र "यथाश्रयभाव" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्व सगतम् । चतुर्थसामान्यनियमात् ।

( २ ) 'शिष्टेश्च' ३।३।६२ (४२१) इत्यत्र प्रथमान्तपदाभावात् च-काराच्च नास्य अधिकरणारम्भकत्वम् । चतुर्थ सामान्यनियमात् षष्ठविशेषनियमाच्च ।

( ३ ) "समाहारात्" ३।३।६३ (४२२) इत्यत्र प्रथमान्तपदाभावात् नास्य अधि-करणारम्भकत्वम् । चतुर्थसामान्यनियमात् । श्रीपति-वल्लभ-भाष्यद्वये अधिकरणस्य रचनाया दोष । अत्र श्रीपते षड्विंशाधिकरणम्, वल्लभस्य चतुर्विंशाधिकरणम् ।

(४) 'गुणसाधारण्यश्रुतेश्च" ३।३।६४ (४२३) इत्यत्र प्रथमान्तपदाभावात् च-काराच नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात् पञ्चविशेषनियमाच्च।

(५) "न वा तत्सहभावाश्रुते" ३।३।६५ (४२४) इत्यत्र प्रथमान्तपदाभावात् वा शब्दयोगाच्च नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात् पञ्चविशेषनियमाच्च। मध्व-श्रीपति-वल्लभ-भाष्येषु अधिकरणस्य रचनायां दोष। माध्वस्य द्वाचत्वारिंशदधिकरणम्, श्रीपते अष्टाविंशाधिकरणम्, वल्लभस्य पञ्चविंशाधिकरणम् इति विरोध।

(६) दर्शनाच्च" ३।३।६६ (४२५) इत्यत्र प्रथमान्तपदाभावात च-योगाच्च नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात पञ्चविशेषनियमाच्च। पादशेषात अत्रैव अधिकरणसमाप्तिश्च।

## एकादश-पादोपसहार

इदानीं द्रष्टव्यम् अनेन निबन्धेन अस्मिन् पादे अधिकरणस्य रचनायां—

(१) कति कीदृशाश्च नियमा अत्र सङ्कलिता।

(२) कति च दोषा कस्य भाष्यस्य कथं संवृत्ता।

(३) काश्च श्रुतय कैश्च सूत्रैरुपजीव्यत्वेन गृहीता।

(४) उपजीव्यश्रुतिभिन्न कीदृशी च पादसगति संगता इति।

एते चत्वार विषया अधस्तात् क्रमेण प्रदर्श्यन्ते, तत्र प्रथम तावत्—

### (१) कति कीदृशाश्च नियमा अत्र सङ्कलिता

अत्र एक एव नियम सङ्कलित, यथा—

एकविंश नियम—"तु" शब्दवर्जित-प्रथमान्तपदात् स्यात्"-शब्दसत्त्वे न अधिकरणारम्भम्"। एतदर्थं 'पूर्वविकल्प प्रकरणात् स्यात् क्रिया मानसवत्" ३।३।४५ सूत्रं द्रष्टव्यम्।

अधुना द्रष्टव्यम्—

### (२) कति च दोषा कस्य भाष्यस्य कथं संवृत्ता

तत्र ३।३।२ अधिकरणे रा-नि-श्री च भाष्येषु "उपसहारोऽर्थभेदाद् विधिशेषवत् समाने च" ३।३।५ इति सूत्रे अधिकरणस्य अरचनायां दोष।

३।३।३ अधिकरणे मध्व-वल्लभ-भाष्ययो "अन्यथात्व शब्दादिति चेन्नाविशेषात्" ३।३।६ इति सूत्रे अधिकरणस्य अरचनायां दोष।

३।३।४ अधिकरणे रा-नि-श्रीप-म-भाष्येषु 'व्याप्तेश्च समञ्जसम्" ३।३।९ इति सूत्रे अधिकरणस्य अरचनायां दोष।

३।३।५ अधिकरणे वल्लभभाष्ये "सर्वाभेदादन्यत्रेमे" ३।३।१० इति सूत्रे अधिकरणस्य अरचनायां दोष।

३।३।६ अधिकरणे वल्लभभाष्ये "आनन्दादयः प्रधानस्य" ३।३।११ इति सूत्रे अधिकरणस्य अरचनाया दोषः ।

तत्रैव मध्व-श्रीकण्ठ-भाष्ययोः "प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे" ३।३।१२ इति सूत्रे अधिकरणस्य रचनाया दोषः ।

तत्रैव माध्वभाष्ये "इतरे त्वर्थसामान्यात् ३।३।१३ इति सूत्रे अधिकरणस्य रचनायां दोषः ।

३।३।७ अधिकरणे रा-नि-श्रीप-ब-भाष्येषु "आध्यानाय प्रयोजनाभावात्" ३।३।१४ इति सूत्रे अधिकरणस्य अरचनायां दोषः ।

३।३।८ अधिकरणे रा-नि-श्री-श्रीप-भाष्येषु "आत्मगृहीतिरितरवदुत्तरात्" ३।३।१६ इति सूत्रे अधिकरणस्य अरचनाया दोषः ।

तत्रैव माध्वभाष्ये "अन्वयादिति चेत् स्यादवधारणात्" ३।३।१७ इति सूत्रे अधिकरणस्य रचनाया दोषः ।

३।३।१० अधिकरणे वल्लभभाष्ये "समान एवं चाभेदात्" ३।३।१९ इति सूत्रे अधिकरणस्य अरचनाया दोषः ।

३।३।११ अधिकरणे मध्व-वल्लभ-भाष्ययोः "सम्बन्धादेवमन्यत्रापि" ३।३।२० इति सूत्रे अधिकरणस्य अरचनाया दोषः ।

तत्रैव माध्वभाष्ये "न वा विशेषात्" ३।३।२१ इति सूत्रे अधिकरणस्य रचनाया दोषः ।

तत्रैव श्रीकण्ठ-भाष्ये "दर्शयति च" ३।३।२२ इति सूत्रे अधिकरणस्य रचनाया दोषः ।

३।३।१२ अधिकरणे वल्लभ-भाष्ये "सम्भृतिद्युव्याप्त्यपि चातः" ३।३।२३ इति सूत्रे अधिकरणस्य अरचनाया दोषः ।

३।३।१५ अधिकरणे वल्लभ-भाष्ये "हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम्" ३।३।२६ इति सूत्रे अधिकरणस्य अरचनाया दोषः ।

३।३।१६ अधिकरणे निम्बार्क-मध्व-भाष्ययोः "साम्पराये तर्त्तव्याभावात् तथा ह्यन्ये" ३।३।२७ इति सूत्रे अधिकरणस्य अरचनाया दोषः ।

तत्र माध्वभाष्ये "छन्दतउभयाविरोधात्" ३।३।२८ इतिसूत्रे अधिकरणस्य रचनाया दोषः ।

३।३।१७ अधिकरणे रा-नि-म-श्री-श्रीप-भाष्येषु "गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः" ३।३।२९ सूत्रे अधिकरणस्य अरचनाया दोषः ।

तत्रैव वल्लभभाष्ये "उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्" ३।३।३० इति सूत्रे अधिकरणस्य रचनायां दोषः ।

३।३।१८ अधिकरणे निम्बार्क-श्रीपति-भाष्ययोः "अनियमः सर्वेषाम् अविरोधः शब्दानुमानाभ्याम्" ३।३।३१ इति सूत्रे अधिकरणस्य अरचनाया दोषः ।

३।३।१९ अधिकरणे रामानुजभाष्ये "यावदधिकारमवस्थितिराधिकारिकाणाम्" ३।३।३२ इति सूत्रे अधिकरणस्य अरचनायां दोष ।

३।३।२० अधिकरणे माध्वभाष्ये "अक्षरधियां त्ववरोध सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम्" ३।३।३३ इति सूत्रे अधिकरणस्य अरचनायां दोष ।

३।३।२१ अधिकरणे रा-नि-श्री-श्रीप व-भाष्येषु "इयदामननात्" ३।३।३४ इति सूत्रे अधिकरणस्य अरचनायां दोष ।

३।३।२२ अधिकरणे माध्वभाष्ये "अन्तरा भूतग्रामवत् स्वात्मन" ३।३।३५ इति सूत्रे अधिकरणस्य अरचनायां दोष ।

अत्रैव मा-रा नि-श्री-श्रीप भाष्येषु "अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्" ३।३।३६ इति सूत्रे अधिकरणस्य रचनायां दोष ।

३।३।२३ अधिकरणे रा-नि-श्री-श्रीप-व भाष्येषु 'व्यतिहारो विशिंषन्ति हीतरवत्" ३।३।३७ इति सूत्रे अधिकरणस्य अरचनायां दोष ।

३।३।२४ अधिकरणे रा-श्रीप-भाष्ययो "सैव हि सत्यादय" ३।३।३८ इति सूत्रे अधिकरणस्य अरचनायां दोष ।

३।३।२५ अधिकरणे वल्लभभाष्ये "कामादीतरत्र तत्र चायतनादिभ्य" ३।३।३९, इति सूत्रे अधिकरणस्य अरचनायां दोष ।

३।३।२६ अधिकरणे रा-नि-म-श्रीप-भाष्येषु "आदरादलोप" ३।३।४० इति सूत्रे अधिकरणस्य अरचनायां दोष ।

तत्रैव श्रीकण्ठभाष्ये "उपस्थितेऽतस्तद्वचनात्" ३।३।४१ इति सूत्रे अधिकरणस्य रचनायां दोष ।

३।३।२९ अधिकरणे रा-नि-म-श्री-श्रीप-भाष्येषु "पूर्वविकल्प प्रकरणात् स्यात् क्रिया मानसवत्" ३।३।४५ इति सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव माध्वभाष्ये "विद्यैव तु निर्धारणात्" ३।३।४७ इति सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव माध्वभाष्ये "श्रुत्यादिबलीयस्त्वाच्च न बाध" ३।३।४९ इति सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव माध्वभाष्ये "अनुबन्धादिभ्य प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्" ३।३।५० इति सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव माध्वभाष्ये "न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्ति" ३।३।५१ इति सूत्रे अधिकरणस्य रचनायां दोष ।

तत्रैव माध्वभाष्ये "परेण च शब्दस्य ताद्विध्यं भूयस्त्वात् त्वनुबन्धः" ३।३।५२ इति सूत्रे अधिकरणस्य रचनाया दोषः ।

३।३।३० अधिकरणे वल्लभभाष्ये "एक आत्मनः शरीरे भावात्" ३।३।५३ इति सूत्रे अधिकरणस्य अरचनाया दोषः ।

तत्रैव वल्लभभाष्ये "व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्" ३।३।५४ इति सूत्रे अधिकरणस्य रचनाया दोषः ।

३।३।३१ अधिकरणे वल्लभभाष्ये "अंगावबद्धास्तु न शाखासु हि प्रतिवेदम्" ३।३।५५ इति सूत्रे अधिकरणस्य अरचनायां दोषः ।

३।३।३५ अधिकरणे रा-नि-श्रीप-भाष्येषु "काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात्" ३।३।६० इति सूत्रे अधिकरणस्य अरचनाया दोषः ।

३।३।३६ अधिकरणे श्रीप-व-भाष्ययोः "समाहारात्" ३।३।६३ इति सूत्रे अधिकरणस्य रचनाया दोषः ।

तत्रैव म-श्रीप-व-भाष्येषु "न वा तत्सहभावाश्रुतेः" ३।३।६५ इति सूत्रे अधिकरणस्य रचनायां दोषः ।

एवं पादेऽस्मिन् भाष्याणां दोषसमाहारे कृते दृश्यते

| भाष्यनाम | अधिकरणस्य अरचनाया | अधिकरणस्य रचनाया |
|---|---|---|
| भास्करभाष्ये | ० | १ दोषः |
| रामानुजभाष्ये | ११ दोषाः | २ दोषौ |
| निम्बार्कभाष्ये | ११ " | २ " |
| श्रीकण्ठभाष्ये | ५ " | ५ दोषाः |
| वल्लभभाष्ये | १५ " | ४ " |
| माध्वभाष्ये | ७ " | १२ " |
| श्रीपतिभाष्ये | १० " | ४ " |
| | ५९ | ३० |

इति वक्तुं शक्यते, तथा च पादे अस्मिन् शङ्करभाष्यस्यैव दोषाभावः प्रतीयते ।

इदानीं द्रष्टव्यम्

**( ३ ) काश्च श्रुतयः कैश्च सूत्रैः उपजीव्यत्वेन गृहीताः**

तत्र प्रथमाधिकरणे

"सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" ३।३।१ इति सूत्रे "अग्निहोत्रं जुहुयात्" (१) "यो ह वै ज्येष्ठं च श्रेष्ठं च प्राण वेद" "ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति" (बृः ६।१।१)

"मेनानेति चेत्तैकस्यामपि" ३।३।२ इति सूत्रे "तस्य अग्निरेव अग्निर्भवति" (बृ ६।२।१४) "पञ्चाग्नीन् वेद" (छा ५।१०।१०)

"स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियम" ३।३।३ इति सूत्रे 'नैतद् अचीर्णव्रतोऽधीते" (मु ३।२।११)

"दर्शयति च" ३।३।४ इति सूत्रे "सर्वे वेदा यत् पदमामनन्ति" (कठ २०।१५) "यस्तु एतमेव प्रादेशमात्रम् अभिविमानम् आत्मानं वैश्वानरम् उपास्ते" (छा ५।१८।१)

तृतीयाधिकरणे—

"अन्यथात्व शब्दादिति चेन्नाविशेषात" ३।३।६ इति सूत्रे "अथ हेममासन्य प्राणम् ऊचु त्वं न उद्गाय इति तथेति तेभ्य एष प्राण उदगायत" (बृ १।३।७), "अथ ह य एवाय मुख्य प्राणस्तम् उद्गीथम् उपासां चक्रिरे" (छा १।२।७)

"न वा प्रकरणभेदात परोवरीयस्त्वादिवत" ३।३।७ इति सूत्रे "ओमिति एतदक्षर उद्गीथम् उपासीत" (छा १।१।१) "त्व न उद्गाय" (बृ १।३।२) "स एष परोवरीयान उद्गीथ" (छा १।९।२)

चतुर्थाधिकरणे—

"व्याप्तेश्च समञ्जसम्" ३।३।९ इति सूत्रे "ओमिति एतद् अक्षरम् उद्गीथम् उपासीत" (छा १।१।१)

"सर्वाभेदादन्यत्रेमे" ३।३।१० इति सूत्रे "एवं विद्वान्" (छा १।१।८)

सप्तमाधिकरणे—

"आध्यानाय प्रयोजनाभावात्" ३।३।१४ इति सूत्रे "इन्द्रियेभ्य परा ह्यर्था" (कठ. ३।१०) "पुरुषान्न पर किञ्चित् सा काष्ठा सा परा गति" (कठ. ३।११)

"आत्मशब्दाच्च" ३।३।१५ इति सूत्रे "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि" (कठ ३।१२)

अष्टमाधिकरणे—

"आत्मगृहीतिरितरवदुत्तरात्" ३।३।१६ इति सूत्रे "प्रजापते रेतो देवा" (ऐतरेय आर १) "आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्" (ऐत १।१), "आत्मन आकाश सम्भूत ।" (तै २।१।१) "स ईक्षत लोकान् नु सृजा इति" (ऐत १।१) "स इमान् लोकान् असृजत" (ऐत १।२)

"अन्वयादिति चेत् स्यादवधारणात्" ३।३।१७ इति सूत्रे "आत्मा वा इदमेक एवाग्र आसीत्" (बृ १।४।१) "कतम आत्मा" (बृ ४।३।७) "स वा एष महानज

आत्मा" (बृः ४।४।२५) "सदेव सोम्येदमग्र आसीत्" (छाः ६।२।१) "स आत्मा तत्त्वमसि" (छा· ६।८।७)

नवमाधिकरणे

"कार्याख्यानादपूर्वम्" ३।३।१८ इति सूत्रे "आचामन्ति" "आचामेत्" "एवंविदशिष्यन्नाचामेदशित्वा च आचामेद् एतमेव तदनमनग्नं कुरुते" (बृ ६।१।१४, छाः ५।२।२) "द्विजो नित्यम् उपस्पृशेत्" (?)

दशमाधिकरणे

"समान एवं चाभेदात्" ३।३।१९ इति सूत्रे "स आत्मानम् उपासीत मनोमयं प्राणशरीरं भारूपम्" (बृः माध्य. ५।६।१) "मनोमयोऽयं पुरुष· भाः सत्यः" (बृः ५।६।१)

एकादशाधिकरणे

"दर्शयति च" ३।३।२२ इति सूत्रे "तस्य एतस्य तदेव रूपं यद् अमुष्य रूपम्" (छाः १।७।५)

द्वादशाधिकरणम्

"संभृतिद्युव्याप्त्यपि चातः" ३।३।२३ इति सूत्रे "ब्रह्मज्येष्ठा वीर्य्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान" (राणायनीयखिलः)।

त्रयोदशाधिकरणम्

"पुरुषविद्यायामिव चेतरेषामनाम्नानात्" ३।३।२४ इति सूत्रे "पुरुषो वाव यज्ञः" (पैङ्गिरहस्ये) "तस्यैवं विदुषो यज्ञस्यात्मा" (नारा ८०)

चतुर्दशाधिकरणम्

"वेधाद्यर्थभेदात्" ३।३।२५ इति सूत्रे "सर्वं प्रविध्य हृदयं प्रविध्य" (आथर्वणिकानाम् उपनिषदारम्भे) "देवा ह वै सत्रं निषेदुः" (काण्वानाम् उपनिषदि प्रवर्ग्यब्राह्मणम्)

पञ्चदशाधिकरणम्

"हानौतूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम्" ३।३।२६ इति सूत्रे "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्या द्विषन्तः पापकृत्याम्" (शाट्यायनिन)। "अश्व इव रोमाणि विधूय पापम्" (छाः ८।१३।१) "तथा विद्वान् पुण्यपापे विधूय" (मु ३।१।८) "तत् सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतम् उपयन्ति अप्रिया दुष्कृतम्" (कौ·१।४)। "कुशा वानस्पत्याः" (भाल्लविनां श्रुतौ) "देवच्छन्दांसि पूर्वाणि" (पैङ्गिश्रुतौ) "समयाविषिते सूर्ये" (तैत्तिरीयकश्रुतौ) "ऋत्विज उपगायन्ति" (शाखान्तरे), "नाध्वर्युरुपगायति" (तत्रैव)

षोडशाधिकरणम्—

"साम्पराये तर्तव्याभावात् तथा ह्यन्ये" ३।३।२७ इति सूत्रे "विरजां नदीं तां मनसा एव अत्येति तत् सुकृतदुष्कृते विधूनुते" (कौ १।४) "अश्व इव रोमाणि" (छा ८।१३।१)

सप्तदशाधिकरणम्—

"गतेरर्थवत्त्वमुभयथान्यथा हि विरोध" ३।३।२९ इति सूत्रे "विद्वान् पुण्यपापे विधूय निरञ्जन परमं साम्यमुपैति" (मु- ३।१।३)

अष्टादशाधिकरणम्—

"अनियम सर्वेषामविरोध शब्दानुमानाभ्याम्" ३।३।३१ इति सूत्रे "तद् य इत्थं विदु ये च इमे अरण्ये श्रद्धा तप इति उपासते तेऽर्चिषम् अभिसंभवन्ति" (छा ५।१०।१) "शुक्लकृष्णे गती ह्येते जगत शाश्वते मते एकया यात्यनावृत्तिमन्ययावर्तते पुन" (गी ८।२६)

ऊनविंशाधिकरणम्—

"यावदधिकारमवस्थितिराधिकारिकाणाम्" ३।३।३२ इति सूत्रे "अपान्तरतमा नाम कलिद्वापरयो सन्धौ विष्णुनियोगात् कृष्णद्वैपायन संबभूव ।" (महा भा शा ?)

विंशाधिकरणम्—

"अक्षरधियां त्ववरोध सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम्" ३।३।३३ इति सूत्रे "एतद् वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनणु" (बृ ३।८।८) "यत् तदद्रेश्यमग्राह्यम्" (मु १।१।५)

एकविंशाधिकरणम्—

"इयदामननात्" ३।३।३४ इति सूत्रे "द्वा सुपर्णा सयुजा सखाया" (मु ३।१।१) "ऋतं पिबन्तौ" (कठ. ३।१)

द्वाविंशाधिकरणम्—

"अन्तरा भूतग्रामवत् स्वात्मन" ३।३।३५ इति सूत्रे "समिधो यजति" (?) "यत् साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तर" (बृ ३।४।१) "एको देव सर्वभूतेषु गूढ" (श्वे ६।११)

"अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्" ३।३।३६ इति सूत्रे "तत्त्वमसि" (छा ६।८।७) "अतोऽन्यदार्तम्" (बृ ३।४।२)

त्रयोविंशाधिकरणम्—

"व्यतिहारो विंशिषन्ति हीतरवत्" ३।३।३७ इति सूत्रे "तद् योऽहं सोऽसौ, योऽसौ सोऽहम्" (ऐतरेयारण्यक ?) "त्वमहमस्मि अहं च त्वमसि" (तदेव ?)

चतुर्विंशाधिकरणम्

"सैव हि सत्यादय" ३।३।३८ इति सूत्रे 'लोकाञ्जयति" (बृः ५।४ १) "हन्ति पाप्मानम्" (बृः ५।३।४) "महद्यक्षं प्रथमजं वेद सत्य ब्रह्म" (बृ: ५।४।१) "तद् यत् तत् सत्यम् असौ स आदित्यः" (बृ ५।४।२)

पञ्चविंशाधिकरणम्

"कामादीतरत्र तत्र चायतनादिभ्य" ३।३।३९ इति सूत्रे 'दहरोऽस्मिन् अन्तर आकाश." (छा ८।१।१) "य एषोऽन्तर्हृदय आकाश" (बृ ४।४ २२)

षड्विंशाधिकरणम्

'आदरादलोप" ३।३।४० इति सूत्रे "स या प्रथमाम् आहुति जुहुयात् ता जुहुयात् प्राणाय स्वाहा" (छा. ५।१९।१) "पूर्वोऽतिथिभ्योऽश्नीयात" (जाबालश्रुति)

"उपस्थितेऽतस्तद्वचनाच्च" ३।३।४१ इति सूत्रे "तद् यद् भक्त प्रथमम् आगच्छेत् तद् होमीयम्" (छा. ५।१९।१)

सप्तविंशाधिकरणम्

"तन्निर्धारणानियमस्तद्दृष्टे. पृथग्ध्यप्रतिबन्ध. फलम्" ३।३।४२ इति सूत्रे "तेनोभौ कुरुतो यश्चैतद् एवं वेद यश्च न वेद" (छा १।१।१०) "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवति" (छा. १।१।१०)

अष्टाविंशाधिकरणम्

"प्रदानवदेव तदुक्तम्" ३।३।४३ इति सूत्रे "इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजाय इन्द्राय स्वराज्ञे"(?) "नाना वा देवता पृथग् ज्ञानात्" (देवताकाण्डे)

ऊनत्रिंशदधिकरणम्

"लिंगभूयस्त्वात तद्धि बलीयस्तदपि" ३।३।४४ इति सूत्रे "तत षट्त्रिंशत् सहस्राणि अपश्यद् आत्मनोऽग्नीन् अर्कान् मनोमयान् मनश्चित" (वाजसनेयके अग्निरहस्ये) "प्राणचितः" (तत्रैव) "यत् किं च इमानि भूतानि मनसा सकल्पयन्ति" (तत्रैव)

'पूर्वविकल्प' प्रकरणात् स्यात् क्रिया मानसवत् ३।३।४५ इति सूत्रे "इष्टकाभि अग्निं चिनुते" (?) "मनोग्रहं गृह्णामि" (?)

"अतिदेशाच्च" ३।३।४६ इति सूत्रे "एकैक एव तावान् यावानसौ पूर्व" (?)

"विद्यैव तु निर्धारणात्" ३।३।४७ इति सूत्रे "ते हैते विद्याचित एव" (?)

"श्रुत्यादिबलीयस्त्वाच्च न बाध." ३।३।४९ इति सूत्रे "विद्यया हैवैत एवंविदश्चिती भवन्ति" (?)

"अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम्" ३।३।५० इति सूत्रे "ते मनसैवाधीयन्त मनसा चीयन्त मनसैव ग्रहा अगृह्यन्त" (?) इति।

"न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः" ३।३।५१ इति सूत्रे "स एष एव मृत्युः य एष एतस्मिन् मण्डले पुरुषः" (?) "अग्निर्वै मृत्युः (बृ ३।२।१०) "असौ वाव लोको गौतम अग्निस्तस्यादित्य एव समित्" (छा ५।४।१)

पञ्चत्रिंशदधिकरणम्—

"अंगावबद्धास्तु न शाखासु हि प्रतिवेदम्" ३।३।५५ इति सूत्रे "उद्गीथम् उपासीत" (छा १।१।१)

मन्त्रादिवद् वाऽविरोधः" ३।३।५६ इति सूत्रे 'कुटरुरसि" (?)

द्वात्रिंशदधिकरणम्—

"भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति"३।३।५७ इति सूत्रे क त्वम् आत्मानम् उपास्से" (छा ५।१२।१)

त्रयस्त्रिंशदधिकरणम्—

"नाना शब्दादिभेदात्" ३।३।५८ इति सूत्रे 'वेद" "उपासीत" "क्रतुं कुर्वीत" (बृ)

पञ्चत्रिंशदधिकरणम्—

"काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात्" ३।३।६० इति सूत्रे 'नाम ब्रह्मेत्युपासीत" (छा ७।१।५)

षट्त्रिंशदधिकरणम्—

"समाहारात्" ३।३।६२ इति सूत्रे"होतृषदनाद्धैवापि दुरुद्गीथम् अनुसमाहरति"(छा १।५।५)

'दर्शनाच्च" ३।३।६६ इति सूत्रे "एवं विद् ह वै ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विज अभिरक्षति" (छा ४।१७।१०)

इदानीं द्रष्टव्यम् एतादृशसूत्रोपजीव्यश्रुतित्वेन—

## ( ४ ) कीदृशी अस्य पादसंगतिः

प्रतिसूत्रम् उदाहृतश्रुतय तावत् शंकरभाष्यानुयायिन्य, यथा पूर्वपूर्वपादेषु प्रदर्शिता । भाष्यान्तरेषु अत्र मतभेद दृश्यते एव । फलं चास्य शाङ्करमते सगुण-निर्गुणद्विविध ब्रह्मोपासनाया इतस्ततः विक्षिप्ताया क्वचित् एकीकरणं क्वचित् पृथक्करणं यथायोगमिति । मतान्तरे तु निर्गुणब्रह्मासिद्धेः सगुणब्रह्मोपासनाया एव तथा कृतम् इति विशेष । तेन सर्वमतेषु पादेऽस्मिन् साधनमेव वर्णितं निर्णीतं च । अत्र शंकरमतानुसारेण निर्गुणब्रह्मोपास एतत्पादस्य प्रतिपाद्यं न वा तत् तु प्रासंगत्या निर्णेयमिति यथापूर्वस्मिन् पादे प्रदर्शितम् । अत अत्र प्रतिसूत्रं प्रत्यधिकरणं वा याश्च श्रुतय समाश्रिता विभिन्नभाष्येषु ता

खलु सम्प्रदायानुरोधाधीनाः न तु सूत्रार्थानुसारिण्यः । तर्ककौशलेन सर्वं सर्वथैव व्याख्यातुं शक्यते विद्वद्भिः । अतः शास्त्रसंगत्याः एव अत्र शरणं गन्तव्यम् । तत्र निर्गुण-ब्रह्मप्रतिपाद्यत्वम् एतच्छास्त्रस्य युक्तिबलेनैव प्रतिष्ठापितम् इति दृष्टमेव । स्पष्टार्थतः श्रुतीनामपि एतदेव सिध्यति । अतोऽत्र निर्गुणोपासनानिर्णयः नोपेक्षणीयः इति प्रतिभाति । तथापि अधुना विभिन्नभाष्यकर्त्तां मतेन यथा पादस्यास्य प्रतिपाद्यं तदत्र प्रदर्श्यते

शाङ्करमते सगुणविद्यासु गुणोपसंहारस्य निर्गुणे ब्रह्मणि अपुनरुक्तपदोपसंहारस्य च निरूपणद्वारा साधनवर्णनम् ।

भास्करमते प्रायेण तथैव, निर्गुणोपासनं विना ।

रामानुजमते साधनभेदनिरूपणम् ।

निम्बार्कमते ब्रह्मोपासनासु गुणोपसंहारविकल्पनिर्णयाय विद्याभेदविचारः ।

माध्वमते उपासनानिरूपणम् (सर्वपरिज्ञानं प्रथमतः उच्यते अन्ते निर्णयः)

श्रीकण्ठमते उपासनाविशेषाणां गुणोपसंहारः ।

श्रीकरमते परमशिवोपासनविशेषगुणोपलक्षणम् ।

एवं च सर्वमतेषु उपासनानिरूपणम् अस्य पादस्य प्रयोजनम् इत्यत्र न कोऽपि विरोध. ।

इति एकादशपादोपसंहारः ।

## अथ तृतीयाध्याये चतुर्थपादः ।

### प्रथमं पुरुषार्थाधिकरणम्

अत्र "पुरुषार्थोऽत शब्दादिति बादरायणः" ३।४।१ (४२६) इति सूत्रस्य "पुरुषार्थ" पदात् अस्य "पुरुषार्थाधिकरण" नाम । तत्र शङ्कर-भास्कर-श्रीकण्ठ-भाष्येषु सप्तदशभिः सूत्रैः, रामानुज-निम्बार्क-भाष्ययोः विंशति सूत्रैः, माध्वभाष्ये नवभिः सूत्रैः, श्रीपति-भाष्ये षोडशभिः सूत्रैः, तथा वल्लभभाष्ये चतुर्विंशति सूत्रैः एतदधिकरण रचितम् । तानि च सप्तदश सूत्राणि

| | | | |
|---|---|---|---|
| १ । "पुरुषार्थोऽत. शब्दादिति बादरायण." | ३।४।१ (४२६) | । "तद्वतो विधानात्" | ३।४।६ (४३१) |
| २ । "शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनि" | ३।४।२ (४२७) | ७ । "नियमाच्च" | ३।४।७ (४३२) |
| ३ । "आचारदर्शनात्" | ३।४।३ (४२८) | ८ । "अधिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनात्" | ३।४।८ (४३३) |
| ४ । "तच्छ्रुते" | ३।४।४ (४२९) | ९ । "तुल्यं तु दर्शनम्" | ३।४।९ (४३४) |
| ५ । "समन्वारम्भणात्" | ३।४।५ (४३०) | १० । "असार्वत्रिकी" | ३।४।१० (४३५· |
| | | ११ । "विभाग शतवत्" | ३।४।११ (४३६) |

| | |
|---|---|
| १२ । "अध्ययनमात्रवत" ३।४।१२ (४३७) | १६ । "उपमर्दं च" ३।४।१६ (४४१) |
| १३ । "नाविशेषात्" ३।४।१३ (४३८) | १७ । "ऊर्ध्वरेतस्सु च शब्दे हि" ३।४।१७ (४४२) |
| १४ । "स्तुतयेऽनुमतिर्वा" ३।४।१४ (४३९) | |
| १५ । "कामकारेण चैके" ३।४।१५ (४४०) | |

तत्र (१) "पुरुषार्थोऽत शब्दादिति बादरायण" ३।४।१ (४२६) इत्यत्र "पुरुषार्थ" इति प्रथमान्तपदात् पादारम्भाच संगत एव अधिकरणारम्भ । चतुर्थसामान्यनियमात् द्वितीय विशेषनियमाच्च । स्वमतेन विषयान्तरज्ञापनात् च दशमविशेषनियमात् ।

(२) "शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनि" ३।३।२ (४२७) इत्यत्र पुरुषार्थवाद" इति प्रथमान्तपदसत्त्वेऽपि "जैमिनि" इति नाम्ना प्रतिकूलमतान्तरप्रदर्शनात् विधनियमात् नाम्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात् तथा दशमविशेषनियमात् ।

(३) "आचारदर्शनात्" ३।४।३ (४२८) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात् ।

(४) "तच्छ्रुते" ३।४।४ (४२९) इत्यत्रापि तथा । चतुर्थसामान्यनियमात् ।

(५) "समन्वारम्भणात्" ३।४।५ (४३०) इत्यत्रापि तथा । चतुर्थसामान्यनियमात् ।

(६) 'तद्वतो विधानात्" ३।४।६ ४३१) इत्यत्रापि तथा । चतुर्थसामान्यनियमात् ।

(७) "नियमाच्च" ३।४।७ (४३२) इत्यत्रापि तथा । चकारश्चात्र हेतुसमुच्चायक । चतुर्थ सामान्यनियमात् षष्ठविशेषनियमाच्च ।

(८) "अधिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनात्" ३।४।८ (४३३) इत्यत्र "एवं" इति प्रथमान्तपदसत्त्वेऽपि चतुर्थसामान्यनियमात् उक्तपूर्वपक्षव्यावर्तक-तु-शब्दात् अधिकर णारम्भनिषेध, नवमविशेषनियमात् अष्टादशविशेषनियमाच्च । विषयान्तरादृते स्वमतवर्णनात् च, दशमविशेषनियमात् ।

(९) "तुल्यं तु दर्शनम्" ३।४।९ (४३४) इत्यत्र 'तुल्यम्" 'दर्शनम्" इति प्रथमान्त- सत्त्वेऽपि चतुर्थसामान्यनियमात् अनिषेधार्थक-तु-शब्दयोगात् च नास्य अधिकर णारम्भकत्वम् । नवमविशेषनियमात् ।

(१०) "असार्वत्रिकी" ३।४।१० (४३५) इत्यत्र "असार्वत्रिकी" इति प्रथमान्तपदसत्त्वेऽपि चतुर्थसामान्यनियमात् तत तस्य स्वरूपत साकाङ्क्षत्वबोधकत्वात् नात्र अधिकरणारम्भ । सप्तमविशेषनियमात् । माध्वमाष्ये सूत्रत्रयात्मक-द्वितीयाधिकरणारम्भात् दोष ।

(११) "विभाग शतवत्" ३।४।११ (४३६) इत्यत्र प्रथमान्तपदसत्त्वेऽपि 'कृत्स्न- विभाग" इति विभागशब्दस्य स्वरूपत साकाङ्क्षत्वात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्य- नियमात्, सप्तमविशेषनियमात् च ।

(१२) "अध्ययनमात्रवत" ३।४।१२ (४३७) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात्।

(१३) "नाविशेषात्" ३।४।१३ (४३८) इत्यत्रापि तथैव। चतुर्थसामान्यनियमात्। माध्वभाष्ये अनेन एकेनैव तदीयतृतीयाधिकरणस्य रचनात् दोष.।

(१४) "स्तुतयेऽनुमतिर्वा" ४।१४ (४३९) इत्यत्र "अनुमति." इति प्रथमान्तपदसत्त्वेऽपि चतुर्थसामान्यनियमात् तथा "वा" शब्देन साकाङ्क्षत्वविधानात् नास्य अधिकरणारम्भकत्वम्। षष्ठविशेषनियमात्। माध्वभाष्ये तदीयचतुर्थाधिकरणस्य विंशतिसंख्यक-सूत्रात्मकाधिकरणस्य आरम्भात् दोषः।

(१५) "कामकारेण चैके" ३।४।१५ (४४०) इत्यत्र "एके" इति प्रथमान्तपदसत्त्वेऽपि चकार-योगात् नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च।

(१६) "उपमर्दं च" ३।४।१६ (४४१) इत्यत्र "उपमर्द" इति प्रथमान्तपदसत्त्वेपि चकारयोगात् नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात्, षष्ठविशेषनियमाच्च।

(१७) 'ऊर्ध्वरेतःसु च शब्दे हि" ३।४।१७ (४४२) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। चतुर्थसामान्यनियमात्। अध्याहृतेऽपि "च हि" शब्दौ बाधकौ, षष्ठविशेषनियमात्। परसूत्रे अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिश्च युक्ता। श्रीपति-भाष्ये अत्र अधिकरणरचनात् दोषस्पर्शः कल्पनीय। तन्मते एतद् हि तदीयद्वितीयाधिकरणस्य चतुर्षु सूत्रेषु प्रथम सूत्रम्।

**द्वितीयं परामर्शाधिकरणम्**

अत्र 'परामर्शं जैमिनिरचोदना चापवदति हि" ३।४।१८ (४४३) इति सूत्रस्य "परामर्शम्" इति पदात् "परामर्शाधिकरण" नाम। तत्र शङ्कर-भास्कर-श्रीकण्ठ-भाष्येषु अधिकरणम् आरब्धम्। रामानुज-निम्बार्क-मध्व-श्रीपति-वल्लभ-भाष्येषु नारब्धम्। शङ्कर-भास्कर-श्रीकण्ठ-भाष्येषु तदीयद्वितीयाधिकरणस्य त्रिषु सूत्रेषु एतत् सूत्र प्रथमं भवति। रामानुज-निम्बार्क-भाष्ययो. प्रथमाधिकरणस्य विंशतिषु सूत्रेषु अष्टादश सूत्रम्। माध्वभाष्ये विंशति-सूत्रात्मक-चतुर्थाधिकरणस्य पञ्चम सूत्रम्। श्रीपति-भाष्ये सूत्रचतुष्टयात्मक-द्वितीयाधिकरणस्य द्वितीय सूत्रम्। वल्लभभाष्ये चतुर्विंशति-सूत्रात्मक-प्रथमाधिकरणस्य अष्टादश सूत्रम् इति। तच्च सूत्रत्रयम्

१। "परामर्शं जैमिनिरचोदना चापवदति हि" ३।४।१८ (४४३)

२। 'अनुष्ठेयं बादरायणः साम्यश्रुतेः" ३।४।१९ (४४४)

३। "विधिर्वा धारणवत्" ३।४।२० (४४५)

अत्र (१) "परामर्शं जैमिनिरचोदना चापवदति हि" ३।४।१८ (४४३) इत्यत्र 'परामर्शम्" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्वं युक्तम्। चतुर्थसामान्यनियमात्

तथा "जैमिनि" इति प्रथमान्तपदेन स्वमतविरुद्धविषयान्तरस्य ज्ञापनात् अस्य अधिकरणारम्भकत्वं संगच्छते, दशमविशेषनियमात्। चकारयोगस्य अत्रत्याचोदना-हेतुसमुच्चायकत्वम् न पूर्वाधिकरणस्य हेतो, तेन पूर्वाधिकरणस्य अगत्वकल्पनम् एतत्सूत्रस्य न युक्तम्। द्वादशविशेषनियमात्। रा नि-म-श्रीप-व-भाष्येषु अधिकरणस्य अरचनायां तेन दोषप्रसंग। तेषां पक्षे संस्याधिक्येऽपि नियमविरुद्धत्वात् दौर्बल्यम्।

( २ ) "अनुष्ठेय बादरायण साम्यश्रुते" ३।४।१९ ( ४४४ ) इत्यत्र "अनुष्ठेयं" तथा "बादरायण" इति प्रथमान्तपदद्वयसत्त्वेऽपि नास्य अधिकरणारम्भकत्व युक्तं, पूर्वोक्त-जैमिनिमतस्य खण्डनार्थं बादरायणमतस्य सूचनात् साकांक्षत्वसिद्धे दशमविशेषनियमात्।

( ३ ) "विधिर्वा धारणात्" ३।३।२० (४४५) इत्यत्र "विधि" इति प्रथमान्तपदसत्त्वे अपि चतुर्थसामान्यनियमात्, "वा" शब्देन च साकांक्षत्वसिद्धे नास्य अधिकरणारम्भकत्वं, षष्ठ विशेषनियमात्। परसूत्रे अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिश्च।

## तृतीय स्तुतिमात्राधिकरणम्।

अत्र "स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात" ३।४।२१ ( ४४६ ) इति सूत्रस्य "स्तुति मात्रम्" इति पदम् अवलम्ब्य अस्य "स्तुतिमात्राधिकरणं" नाम। तत्र शंकर-भास्कर-श्रीकण्ठ-भाष्येषु एतत् सूत्रं तदीयसूत्रद्वयात्मक-तृतीयाधिकरणस्य प्रथम सूत्रम्। रामानुज-निम्बार्क-भाष्ययो तदीयसूत्रद्वयात्मक द्वितीयाधिकरणस्य प्रथमं सूत्रम्। माध्वभाष्ये तदीयचतुर्थाधिकरणस्य विंशते सूत्राणां मध्ये अष्टम सूत्रम्। वल्लभभाष्ये तदीय प्रथमाधिकरणस्य चतुर्विंशते सूत्राणां मध्ये एकविंशसूत्रम्। तेन अत्र मध्व-वल्लभ-भाष्ययो अधिकरण नारब्धम्। तत् च सूत्रद्वयम्—

"१। स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्" ३।४।२१ (४४६)

२। "भावशब्दाच्च" ३।४।२२ (४४७)

तत्र ( १ ) "स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्" ३।४।२१ (४४६) इत्यत्र "स्तुति मात्रम्" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्व चतुर्थसामान्यनियमात् युक्तमपि, "इति चेत्" इति पदसन्दर्भात् तस्य बाधकत्व स्यात्, पञ्चमविशेषनियमात्, तथापि प्रथमान्तपदानन्तर पञ्चम्यन्तपदसत्त्वात् तस्यापि बाधकम्, चतुर्दशविशेषनियमात। तेन मध्व-वल्लभ-भाष्ययो अधिकरणस्य अनारम्भात् दोष।

( २ ) "भावशब्दाच्च" ३।४।२२ (४४७) इत्यत्र प्रथमा तपदाभावात् नास्य अधिकरणारम्भकत्वम्। च-कारस्य हेतुसमुच्चायकत्वात् न बाध, चतुर्थसामान्यनियमात् षष्ठविशेषनियमात् च। परसूत्रे अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिश्च।

## चतुर्थं पारिप्लवाधिकरणम्।

अत्र "पारिप्लवार्था इति चेन्न विशेषितत्वात्" ३।४।२३ (४४८) इति सूत्रस्य "पारिप्ल

वार्थो" इति पदात् अस्य "पारिप्लवाधिकरण" नाम। तत्र श-भा-रा-नि-श्री-श्रीप-भाष्येषु अधिकरणम् आरब्धम्, भास्कर-भिन्न सर्वेषु भाष्येषु सूत्रद्वयं गृहीतम्। भास्करमते द्वितीयसूत्रस्य प्रथमसूत्राङ्गत्वेन पाठात् एतद् अधिकरणं एकेनैव सूत्रेण रचितम्। तेन एतद्धि श भा-श्री-श्रीप-भाष्येषु चतुर्थाधिकरण रा-नि-भाष्ययोः तृतीयाधिकरणम्। माध्वभाष्ये तदीयचतुर्थाधिकरणस्य विंशते. सूत्राणा मध्ये एतद्धि द्वाविंश सूत्रम्। तत् च सूत्रद्वयम्,

१। "पारिप्लवार्था इति चेन्न विशेषितत्वात्" ३।४।२३ (४४८)

२। "तथा चैकवाक्यतोपबन्धात्" ३।४।२४ (४४९)

अत्र (१) पारिप्लवार्था इति चेन्न विशेषितत्वात्" ३।४।२३ (४४८) इत्यत्र "पारिप्लवार्थो" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्व युक्तम्, चतुर्थसामान्यनियमात। तथापि "इति चेन्न" इति पदसत्त्वं तस्य बाधकम्, पञ्चमविशेषनियमात। तथापि षण्णा भाष्यकृता मते अधिकरणारम्भात् "पारिप्लवार्थो" इति पदेन विषयश्रुतिभेदात् अधिकरणारम्भः कल्पयितु शक्यते। तेन च एकादशविशेषनियमात् अधिकरणारम्भ सगच्छते एव। तेन मध्ववल्लभ-भाष्ययो' अधिकरणस्य अरचनाया दोषः एव वाच्यः। भास्कर-भाष्ये परसूत्रम् अपि एतत सूत्रशेषत्वेन पठ्यते। तन्न युक्तम्। यत परसूत्रे चकारात् हेतोः विजातीयवैलक्षण्यं सूचितम्। चतुर्थविशेषनियमात्।

(२) "तथा चैकवाक्यतोपबन्धात" ३।४।२४ (४४९) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वं, चतुर्थसामान्यनियमात्। चकारयोगाच्च तथा, षष्ठविशेषनियमात। परसूत्रे अधिकसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिः। भास्कर-भास्ये एतत् सूत्र अधिकरणारम्भक-पूर्वसूत्रस्य अङ्गत्वेन पठितम् इति दृश्यते। तन्न सगतम्। चकारात् हेतोः विजातीयवैलक्षण्यस्य सूचनात् चतुर्थविशेषनियमात्।

**पञ्चमम् अग्नीन्धनाद्यधिकरणम्।**

अत्र "अतएव चाग्नीन्धनाद्यनपेक्षा" ३।४।२५ (४५०) इति सूत्रस्य "अग्नीन्धनादि"-पदात् अस्य "अग्नीन्धनाद्यधिकरण" नाम। तत्र एतत् सूत्र शकर-भास्कर-श्रीकण्ठ-श्रीपति-भाष्येषु पञ्चमाधिकरणस्य एकमेव सूत्रम्। रामानुज-भाष्ये तदीयचतुर्थाधिकरणस्य एकमेव सूत्रम्। निम्बार्कभाष्ये तदीयसूत्रत्रयात्मक-चतुर्थाधिकरणस्य विंशते. सूत्राणा मध्ये द्वादशं सूत्रम्। वल्लभभाष्ये तु तदीयप्रथमाधिकरणस्य चतुर्विंशते. सूत्राणा मध्ये अन्तिम सूत्रम्। तेन अत्र मध्ववल्लभ-भिन्नेषु सर्वेषु भाष्येषु अधिकरणम् आरब्धम्। अत्र "अपेक्षा" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्वं युक्तम्, चतुर्थसामान्यनियमात्। "अतएव च" इति पदौ न बाधकौ, षष्ठसप्तमविशेषनियमाभ्याम्। विधेयभेदात तु स एव युक्त, त्रयोदशविशेषनियमात्। मध्व-वल्लभभाष्ययोः तदकरणात् दोषः कल्पनीयः। परसूत्रे अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिः।

तच्च सूत्रचतुष्टयम्

१। "सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्" ३।४।२८ (४५३)

२। "अबाधाच्च" ३।४।२९ (४५४)

३। "अपि च स्मर्य्यते" ३।४।३० (४५५)

४। "शब्दश्चातोऽकामकारे" ३।४।३१ (४५६)

अत्र (१) सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्" ३।४।२८ (४५३) इत्यत्र "सर्वान्नानुमतिः" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तम्, चतुर्थसामान्यनियमात। चकारेण विधेय-भेदात् न बाधकत्वम्। द्वादशविशेषनियमात्। मध्व-वल्लभ-भाष्ययोः अधिकरणस्य अनारम्मात् दोषः।

( २ ) "अबाधाच्च" ३।४।२९ (४५४) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणा-रम्भकत्वम्। चकारस्य हेतुसमुच्चयार्थकत्वात् न बाधकत्वम्, चतुर्थसामान्यनियमात्, तथा षष्ठविशेषनियमाच्च।

( ३ ) 'अपि च स्मर्य्यते" ३।४।३० (४५५) इत्यत्र तथैव। चतुर्थसामान्यनियमात, षष्ठविशेषनियमात् च।

( ४ ) "शब्दश्चातोऽकामकारे" ३।४।३१ (४५६) इत्यत्र "शब्दः" इति प्रथमान्त-पदादपि चतुर्थसामान्यनियमात्, चकारात् अतः-शब्दाच्च नास्य अधिकरणारम्भकत्वम्। षष्ठ-सप्तमविशेषनियमाभ्याम्। चकारस्य हेतुसमुच्चयार्थकत्वात्। परसूत्रे अधिकसम्मत्या अधि-करणस्य आरम्भात् अत्रैव अधिकरणसमाप्तिः युक्ता एव।

## अष्टमम् आश्रमकर्माधिकरणम्

अत्र "विहितत्वाच्चाश्रमकर्म्मापि" ३।४।३२ (४५७) इति सूत्रस्य "आश्रमकर्म्म" इति पदात् अस्य "आश्रमकर्म्माधिकरणं" नाम। तत्र मध्वभिन्नैः सप्तभिः आचार्यैः अनेन अधिकरणारम्भणं कृतम्। माध्वभाष्ये एतत् सूत्रं तदीयचतुर्थाधिकरणस्य विंशतेः सूत्राणां मध्ये ऊनविंशसूत्रम्। शङ्कर-भास्कर-रामानुज-भाष्येषु तदीयाष्टमाधिकरणस्य चतुर्षु सूत्रेषु प्रथमं सूत्रम्। निम्बार्क-भाष्ये तदीयषष्ठाधिकरणस्य चतुर्षु सूत्रेषु प्रथमं सूत्रम्। श्रीकण्ठ-श्रीपति-भाष्ययोः तदीय-नवमाधिकरणस्य तथैव। वल्लभभाष्ये तु तदीयतृतीयाधिकरणस्य अष्टसु सूत्रेषु प्रथमं सूत्रम्। तेन शंकरादिषु पञ्चसु भाष्येषु अत्र चत्वारि सूत्राणि, केवलं वल्लभभाष्ये अष्ट सूत्राणि इति विशेषः। तच्च सूत्रचतुष्टयम्।

१। "विहितत्वाच्चाश्रमकर्म्मापि" ३।४।३२ (४५७)

२। "सहकारित्वेन च" ३।४।३३ (४५८)

३। "सर्वथापि त एवोभयलिंगात्" ३।४।३४ (४५९)

४। "अनभिभवं च दर्शयति" ३।४।३५ (४६०)

अत्र ( १ ) "विहितत्वाच्चाश्रमकर्मापि" ३।४।३२ (४५७) इत्यत्र "आश्रमकर्म" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात्, अपि-शब्देन न साकांक्षत्वशंका, प्रसंगभेदसूचनात्, द्वादशविशेषनियमात्, अधिकरणानारम्भात् माध्वभाष्ये दोष ।

( २ ) "सहकारित्वेन च" ३।४।३३ (४५८) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात, पष्ठविशेषनियमाच्च ।

( ३ ) "सर्वथापि त एवोभयलिंगात्" ३।४।३४ (४५९) इत्यत्र "ते" इति प्रथमान्त पदात् अधिकरणारम्भणीयत्वेऽपि चतुर्थसामान्यनियमात्, "अपि"- "च" पदाभ्यां नास्य अधिकरणारम्भकत्वम्, पष्ठविशेषनियमात्। माध्वभाष्ये ५।७।१ अधिकरणारम्भात दोष ।

( ४ ) "अनभिभवं च दर्शयति" ३।४।३५ (४६०) इत्यत्र "अनभिभवं" इत्यस्य द्वितीयान्तत्वात् प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्यनियमात, पष्ठविशेष नियमात् च । परसूत्रे षड्भि आचार्यै अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्तिश्च ।

## नवमं विधुराधिकरणम्

अत्र "अन्तरा चापि तु तद्दृष्टे" ३।४।३६ (४६१) इति सूत्रस्थस्य 'अन्तरा" इति शब्दस्य अर्थम् अवलम्ब्य एतस्य "विधुराधिकरण" नाम । तत्र शङ्कर-भास्कर-रामानुज-निम्बार्क-श्रीकण्ठ-श्रीपति भाष्येषु चतुर्भि सूत्रै एतदधिकरण रचितम् । माध्व-वल्लभ-भाष्ययो तु अधिकरण नारब्धम् । तत्र शङ्कर-भास्कर-रामानुज-भाष्येषु एतद्धि नवमम् अधिकरण निम्बार्कभाष्ये सप्तमम् अधिकरण, श्रीकण्ठ-श्रीपति-भाष्ययोस्तु दशमम् अधिकरणम । माध्व-भाष्ये एतत् सूत्रं तदीये सप्तमि सूत्रै आरब्धस्य पञ्चमाधिकरणस्य तृतीयं सूत्रम्, वल्लभ-भाष्ये तु तदीये अष्टमि सूत्रै आरब्धस्य तृतीयाधिकरणस्य पञ्चमं सूत्रम् । तच्च सूत्रचतुष्टयम्—

| | |
|---|---|
| १। "अन्तरा चापि तु तद्दृष्टे" ३।४।३६ (४६१) | ३। "विशेषानुग्रहश्च" ३।४।३८ (४६३) |
| २। "अपि च स्मर्य्यते" ३।४।३७ (४६२) | ४। "अतस्त्वितरज्ज्यायो लिंगाच्च" ३।४।३९ (४६४) |

अत्र ( १ ) "अन्तरा चापि तु तद्दृष्टे" ३।४।३६ (४६१) इत्यत्र 'अन्तरा" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तम्, चतुर्थसामान्यनियमात् । 'च अपि"-पदाभ्यां पूर्वेण सह साकांक्षत्वबोधनेऽपि तु शब्देन तद्व्याघातात्, द्वादशाष्टादशविशेष-नियमाभ्याम् । माध्व-वल्लभ-भाष्ययो अधिकरणस्य अनारम्भाच्च दोष ।

( २ ) 'अपि च स्मर्य्यते" ३।४।३७ (४६२) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । चतुर्थसामान्यनियमात् पष्ठविशेषनियमात् च ।

( ३ ) "विशेषानुग्रहश्च" ३।४।३८ (४६३) इत्यत्र "विशेषानुग्रह" इति प्रथमान्तपद-सत्त्वेऽपि चकार-योगेन तस्य हेत्वर्थबोधकत्वात् प्रसंगान्तरत्वाभावात् न अधिकरणारम्भकत्वम्

संगच्छते । एतदर्थं चतुर्थसामान्यनियमः तथा षष्ठविशेषनियमश्च अत्र अनुसंधेयौ ।

(४) "अतस्त्वितरज्ज्यायो लिङ्गाच्च" ३।४।३९ (४६४) इत्यत्र "इतरत्" तथा "ज्यायः" इति प्रथमान्तपदद्वयसत्त्वेऽपि नास्य अधिकरणारम्भकत्वम् । "अतः" "चकारः" तथा "इतरत्" इति शब्दत्रयेण साकाङ्क्षत्वविधानात्, षष्ठसप्तमविशेषनियमाभ्याम् । परसूत्रेण मध्व-भिन्नैः सर्वैः अधिकरणस्य आरम्भात् अत्रैव समाप्तिः सङ्गच्छते ।

## दशमं तद्भूताधिकरणम्

अत्र "तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः" ३।४।४० (४६५) इति सूत्रस्य "तद्भूतस्य" इति पदात् अस्य "तद्भूताधिकरणं" नाम । अत्र माध्वभाष्यभिन्नेषु सर्वेषु भाष्येषु अधिकरणम् आरब्धम् । तन्मते एतत् सूत्र तदीयपञ्चमाधिकरणस्य सप्तसु सूत्रेषु अन्तिमम् । शङ्कर-भास्कर-भाष्ययोः एतेन एकेन सूत्रेण दशमम् अधिकरणं रचितम् । रामानुजमते दशमाधिकरणस्य चतुर्षु सूत्रेषु प्रथमं सूत्रम्, निम्बार्कमते अष्टमाधिकरणस्य तथैव । श्रीकण्ठ-श्रीपति-भाष्ययोः एकादशाधिकरणस्य तथैव । वल्लभभाष्ये चतुर्थाधिकरणस्य च तथैव । तेन माध्वभाष्ये अधिकरणस्य अरचनाया दोषः । अत्र "अतद्भाव" इति प्रथमान्तपदात् चतुर्थसामान्यनियमात् अस्य अधिकरणारम्भकत्व युक्तम् । विषयान्तरज्ञापनेन तस्य स्वमतानुकूलजैमिनीयमतत्वात् न दोष, दशमविशेषनियमात् । अन्यप्रथमान्तपदेन अधिकरणस्य विधानात् , तथा तु-अपि-पदयोः अबाधकत्वात् । द्वादशाष्टादशविशेषनियमाभ्याम् ।

## एकादशम् आधिकारिकाधिकरणम्

अत्र "न चाधिकारिकमपि पतनानुमानात् तदयोगात्" ३।४।४१ (४६६) इति सूत्रस्य "आधिकारिक"-पदात् अस्य "आधिकारिकाधिकरणं" नाम । तत्र शंकर-भास्कर-मध्व-वल्लभ-भाष्येषु अधिकरणम् आरब्धम् । न तु शिष्टेषु तथा । एतदारभ्य सूत्रद्वयेन एतदधिकरणम् आरब्धम् । शंकर-भास्कर-भाष्ययो मध्ये माध्वभाष्ये च एतत् सूत्रं सूत्रत्रयात्मक-षष्ठाधिकरणस्य प्रथमं सूत्रम् । वल्लभभाष्ये तथैव सूत्रद्वयात्मक-पञ्चमाधिकरणस्य प्रथमं सूत्रम् । रामानुजभाष्ये सूत्र-चतुष्टयात्मक-दशमाधिकरणस्य द्वितीय सूत्रम् । निम्बार्कभाष्ये सूत्रचतुष्टयात्मकाष्टमाधि-करणस्य द्वितीय सूत्रम् । श्रीकण्ठ-श्रीपति-भाष्ययोः सूत्रचतुष्टयात्मकैकादशाधिकरणस्य द्वितीयं सूत्रम् । तच्च सूत्रद्वयम्

१। "न चाधिकारिकमपि पतनानुमानात् तदयोगात्" ३।४।४१ (४६६)

२। "उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम्" ३।४।४१ (४६७)

तत्र ( १ ) "न चाधिकारिकमपि पतनानुमानात् तदयोगात्" ३।४।४१ (४६६) इत्यत्र "आधिकारिकम्" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तम्, चतुर्थसामान्यनियमात् ।

"न" "च" 'अपि" इति पदानां तस्य न बाधकत्वम्, प्रसंगभेदस्य सूचनात् द्वादशविशेष नियमात्। तेन रा नि-श्री श्रीप-माध्येषु अधिकरणस्य अनारम्भात् दोष ।

( २ ) "उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम्" ३।४।४२ (४६७) इत्यत्र "एके" तथा "भावम्" इति प्रथमान्तपदसत्त्वेऽपि चतुर्थसामान्यनियमात् नास्य अधिकरणारम्भकत्वम्। "अपि-तु" पदाभ्यां साकांक्षत्वविधानात्, षष्ठविशेषनियमात् तथा नवमविशेषनियमात्। भास्कर-भाष्ये एतत् सूत्र न पठितम् इति दृश्यते। अत्र 'तदुक्तम्" इति पदात् अत्र अधिकरण-समाप्तिरपि कल्पनीया पञ्चदशविशेषनियमात्। "विकरणत्वान्नेति चेत् तदुक्तम्" २।१।३१ इति सूत्रवत्। नात्र "अनुबन्धादिभ्य प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्" ३/३/५० इतिवत् तद्बाधकत्वं कल्पनीयम्। परसूत्रस्य निराकांक्षत्वात् ।

## द्वादशं बहिरधिकरणम्

अत्र "बहिस्तूभयथापि स्मृतेराचाराच्च" ३।४।४३(४६८) इति सूत्रस्य "बहि" पदात् अस्य 'बहिरधिकरणं" नाम। तत्र शङ्कर-भास्कर-वल्लभ-भाष्येषु अधिकरणं रचितम्, न तु अन्येषु भाष्येषु इति। अत्र शंकर-भास्कर भाष्ययो एतेन एकेन सूत्रेण द्वादशाधिकरणं रचितम्। वल्लभ-भाष्ये तु सूत्रचतुष्टयात्मक-षष्ठाधिकरणस्य प्रथम सूत्रम्। रामानुजभाष्ये सूत्रचतुष्टयात्मक-दशमाधिकरणस्य चतुर्थं सूत्रम्, निम्बार्कभाष्ये सूत्रचतुष्टयात्मकाष्टमाधिकरणस्य चतुर्थं सूत्रम्। माध्वभाष्ये सूत्रत्रयात्मक-षष्ठाधिकरणस्य तृतीय सूत्रम्। श्रीकण्ठ-श्रीपति-भाष्ययो सूत्रचतुष्टयात्मकैकादशाधिकरणस्य चतुर्थं सूत्रम्। अत्र "बहि" इति प्रथमान्तपदस्य सत्वात् अधिकरणारम्भ युक्त एव, चतुर्थसामान्यनियमात्। तु-शब्द तु न तस्य बाधक, अनुक्तपूर्वपक्षस्य निषेधात्। अष्टादश विशेषनियमात्। प्रसंगभेदात् च" "अपि" पदयोरपि न बाधकत्व द्वादशविशेषनियमात्। रा नि-म श्री-श्रीप-भाष्येषु अधिकरणस्य अनारम्भात् दोष। तेषाम् अधिकसंख्यकत्वेऽपि नियमाननुगतत्वात्।

## त्रयोदश स्वाम्यधिकरणम्

अत्र "स्वामिन फलश्रुतेरित्यात्रेय" ३।४।४४ (४४९) इति सूत्रस्य स्वामिन" इति पदात् अस्य 'स्वाम्यधिकरणं" नाम। तत्र वल्लभ-भाष्य-भिन्नेषु सर्वेषु भाष्येषु अत्र अधिकरणं रचितम्। वल्लभभाष्ये एतत् सूत्र सूत्रचतुष्टयात्मक-षष्ठाधिकरणस्य द्वितीय सूत्रम्। शांकर-भाष्ये सूत्रत्रयात्मकस्य त्रयोदशाधिकरणस्य, भास्करभाष्ये सूत्रद्वयात्मकस्य त्रयोदशाधिकरणस्य रामानुजभाष्ये सूत्रद्वयात्मकस्य एकादशाधिकरणस्य, निम्बार्कभाष्ये सूत्रद्वयात्मकस्य नवमाधिकरणस्य, माध्व भाष्ये सूत्रत्रयात्मकस्य सप्तमाधिकरणस्य, श्रीकण्ठ-भाष्ये सूत्रद्वयात्मकस्य द्वादशाधिकरणस्य, श्रीपतिभाष्ये सूत्रत्रयात्मकस्य द्वादशाधिकरणस्य, एतत् सूत्रं प्रथमम्। तच्च सूत्रत्रयम्—

१। "स्वामिन फलश्रुतेरित्यात्रेय" ३।४।४४ (४६९)

२। 'आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते" ३।४।४५ (४७०)

३। "श्रुतेश्च" ३।४।४६ (४७१)

तत्र ( १ ) "स्वामिन फलश्रुतेरित्यात्रेय." ३।४।४४ (४६९) इत्यत्र "आत्रेयः" इति प्रथमान्तपदात् अधिकरणारम्भः संगतः, चतुर्थसमान्यनियमात् । नाम्ना स्वमतप्रतिकूलपरमतनिर्देशेन विषयान्तरज्ञापनेन च स च युक्तः एव, विंशविशेषनियमात् । समग्रसूत्रस्य पूर्वपक्षरूपत्वात् । अतेऽयम् अत्र एको नियमः सङ्कलनीय.

"पूर्वपक्षसूत्रीय-प्रथमान्तनामपदेन परमतनिर्देशे कृते तथा विषयान्तरे सूचिते पृथग् अधिकरणारम्भः करणीय" इति ।

अत्र "आत्रेय" इति पदेन विषयान्तरसूचितपूर्वपक्षसूत्ररचनाया अधिकरणारम्भः संगच्छते । तेन वल्लभ-भाष्ये अधिकरणस्य अरचनाया दोषः ।

( २ ) "आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते" ३।४।४५ (४७०) इत्यत्र "आर्त्विज्यम्" तथा "औडुलोमि" इति प्रथमान्तपदद्वयात् अत्र अधिकरणारम्भः युज्यते एव, चतुर्थसामान्यनियमात् स्वमतानुकूलपरमतेन विषयान्तरस्य अज्ञापनात् च, दशमविशेषनियमात् ।

( ३ ) "श्रुतेश्च" ३।४।४६ (४७२) इत्यत्र प्रथमान्तपदाभावात नास्य अधिकरणारम्भकत्वम् चतुर्थसामान्यनिययात् । चकारस्य हेतुसमुच्चायकार्थत्वात्, षष्ठविशेषनियमात् । भा-रा-श्री-नि-भाष्येपु अस्य अग्रहण दृश्यते । तेन भा-रा-नि-म-श्री-मतेपु सूत्रद्वयेन एतदधिकरणं, माध्वमते तु एतस्यापि परवर्त्तिसूत्रेण अधिकरणकरणात् तन्मते सूत्रत्रयात्मकम् एतदधिकरणम् । परसूत्रे सप्ताना सम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिः ।

## चतुर्दशं सहकार्य्यन्तरविध्यधिकरणम्

अत्र "सहकार्य्यन्तरविधि पक्षेण तृतीय तद्वतो विध्यादिवत् ३।४।४७ (४७२) इति सूत्रस्य "सहकार्य्यन्तर"-पदात् अस्य "सहकार्य्यन्तरविध्यधिकरणं" नाम । तत्र मध्वभाष्यभिन्नेपु सर्वेपु भाष्येपु अत्र अधिकरणम् आरब्धम् । माध्वमते एतत सूत्र सूत्रत्रयात्मक-सप्तमाधिकरणस्य तृतीय सूत्रम् । ततश्च शंकर-भास्कर-भाष्ययोः सूत्रत्रयात्मक-चतुर्द्दशाधिकरणस्य, रामानुजभाष्ये सूत्रत्रयात्मक-द्वादशाधिरकणस्य, निम्बार्कभाष्ये सूत्रत्रयात्मक-दशमाधिकरणस्य, श्रीकण्ठभाष्ये सूत्रैकात्मक त्रयोदशाधिकरणस्य, श्रीपतिभाष्ये सूत्रद्वयात्मक-त्रयोदशाधिकरणस्य, वल्लभभाष्ये च सूत्रैकात्मक-सप्तमाधिकरणस्य प्रथमं सूत्रम् । तच्च सूत्रत्रयम्

१। "सहकार्य्यन्तरविधि. पक्षेण तृतीया तद्वतो विध्यादिवत्" ३।४।४७ ( ४७२ )

२। "कृत्स्नभावात् तु गृहिणोपसहार" ३।४।४८ ( ४७३ )

३। "मौनवदितरेषामप्युपदेशात्" ३।४।४९ ( ४७४ )

अत्र ( १ ) "सहकार्य्यन्तरविधि. पक्षेण तृतीया तद्वतो विध्यादिवत्" ३।४।४७ (४७२) इत्यत्र "सहकार्य्यन्तरविधि" इति प्रथमान्तपदात् अस्य अधिकरणारम्भः सगतः एव । चतुर्थसामान्यनियमात् । माध्वभाष्ये अधिकरणस्य अनारम्भात् दोष. ।

( २ ) "कृत्स्नभावात् तु गृहिणोपसंहार" ३।४।४८ (४७३) इत्यत्र "उपसंहार" इति प्रथमान्तपदसत्त्वेऽपि तु शब्दयोगात् साकांक्षत्वसिद्धेः अधिकरणारम्भस्य व्याघात । चतुर्थसामान्य-पञ्चविशेषनियमाभ्याम् । मध्व-श्रीकण्ठ-वल्लभ-भाष्येषु अधिकरणारम्भात् दोष ।

( ३ ) 'मौनवदितरेषामप्युपदेशात्" ३।४।४९ ( ४७४ ) इत्यत्र प्रथमान्तपदाभावात्, तस्य अध्याहारेऽपि अपि शब्देन साकांक्षत्वविधानात् नास्य अधिकरणारम्भकत्वम्, चतुर्थसामान्य-पञ्चविशेषनियमाभ्याम् । श्रीकण्ठ-श्रीपति-भाष्ययो अधिकरणस्य आरम्भात दोष । परसूत्रे पट्सु भाष्येषु अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्ति ।

## पञ्चदशम् अनाविष्काराधिकरणम् ।

अत्र "अनाविष्कुर्वन्नन्वयात्" ३।४।५० (४७५) इति सूत्रस्य "अनाविष्कुर्वन्" इति पदात् अस्य "अनाविष्काराधिकरणं" नाम । तत्र श्रीकण्ठ-वल्लभ भिन्नेषु सर्वेषु भाष्येषु अनेन एकेनैव सूत्रेण पत्न्धिकरणं रचितम् । श्रीकण्ठभाष्ये एतत् सूत्रं तदीयसूत्रद्वयात्मकपञ्चदशाधिकरणस्य द्वितीयं सूत्रम् । वल्लभभाष्ये तु तदीय सूत्रचतुष्टयात्मकाष्टमाधिकरणस्य तृतीयं सूत्रम् । शङ्कर-भास्कर-भाष्ययो पञ्चदशाधिकरणं, रामानुजभाष्ये त्रयोदशाधिकरणं, निम्बार्कभाष्ये एकादशाधिकरणम्, माध्वभाष्ये नवमाधिकरणं, श्रीपतिभाष्ये पञ्चदशाधिकरणं रचितम् ।

अत्र "अनाविष्कुर्वन्" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तमेव । चतुर्थ सामान्यनियमात् । श्रीकण्ठ-वल्लभ-भाष्ययो अधिकरणस्य अनारम्भात् दोषो वाच्य । परसूत्रे अधिकसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति संगता एव ।

## षोडशम् ऐहिकाधिकरणम् ।

अत्र "ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्" ३।४।५१ ( ४७६ ) इति सूत्रस्य "ऐहिकम्" इति पदात् अस्य "ऐहिकाधिकरणं" नाम । अत्र वल्लभ-भाष्यभिन्नेषु सर्वेषु भाष्येषु अधिकरणम् आरब्धम् । वल्लभभाष्ये तु एतत् सूत्रं तदीयसूत्रचतुष्टयात्मकाष्टमाधिकरणस्य चतुर्थं सूत्रम् । शङ्कर-भास्कर-भाष्ययो एतेनैव षोडशाधिकरणम्, रामानुजभाष्ये तथैव चतुर्दशाधिकरणम्, निम्बार्कभाष्ये तु तदीयसूत्रद्वयात्मकद्वादशाधिकरणस्य प्रथमं सूत्रम्, माध्वभाष्ये अनेनैव एकेन सूत्रेण दशमाधिकरणम्, श्रीकण्ठभाष्ये सूत्रद्वयात्मकषोडशाधिकरणस्य प्रथमं सूत्रम्, श्रीपति भाष्ये अनेन एकेनैव सूत्रेण षोडशाधिकरणं रचितम् ।

अत्र "ऐहिकम्" इति प्रथमान्तपदात् अधिकरणारम्भ संगच्छते, चतुर्थसामान्यनियमात् । "अपि"-पदेन प्रसंगमेवात् तत् न बाधकम् । पञ्चविशेषनियमात् । वल्लभभाष्ये अधिकरणस्य अनारम्भात् दोष । परसूत्रे अधिकसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति युक्ता ।

## सप्तदशम् मुक्तिफलानियमाधिकरणम् ।

अत्र "एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृते" ३।४।५२ ( ४७७ ) इति

सूत्रस्य "मुक्तिफलानियमः" इति पदात् अस्य "मुक्तिफलानियमाधिकरण" नाम । तत्र निम्बार्क-श्रीकण्ठ-भिन्नेषु सर्वेषु भाष्येषु सर्वत्र अनेन एकेनैव सूत्रेण एतदधिकरणं रचितम् । निम्बार्कभाष्ये तदीयसूत्रद्वयात्मक-द्वादशाधिकरणस्य द्वितीयं सूत्रम्, श्रीकण्ठभाष्ये तदीयसूत्रद्वयात्मक-षोडशाधिकरणस्य द्वितीयं सूत्रम् । तेन निम्बार्क-श्रीकण्ठ-भाष्ययोः अधिकरणस्य अनारम्भात् दोषः ।

अत्र "मुक्तिफलानियमः" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तमेव । चतुर्थ-सामान्यनियमात् । अत्रैव अध्यायपादसमाप्तेः अधिकरणसमाप्तिश्च ।

## द्वादशपादोपसंहारः ।

इदानीं द्रष्टव्यम् अनेन निबन्धेन अस्मिन् पादे अधिकरणरचनाया

( १ ) कति कीदृशाश्च नियमा अत्र सकलिताः

( २ ) कति च दोषा कस्य भाष्यस्य कथं संवृत्ताः

( ३ ) काश्च श्रुतयः कैश्च सूत्रैरुपजीव्यत्वेन गृहीताः

( ४ ) उपजीव्यश्रुतिबलेन कीदृशी च पादसंगतिः समुचिता इति । एते चत्वारः विषयाः अधस्तात् क्रमेण प्रदर्शनीयाः । तत्र प्रथमस्तावत्

### ( १ ) "कति कीदृशाश्च नियमा अत्र सङ्कलिताः ।"

अत्रापि द्वौ नियमौ सकलितौ, यथा-

२१शः नियमः "पूर्वपक्षसूत्रे प्रथमान्तनामपदेन परमतनिर्देशे अधिकरणारम्भः करणीयः।" एतदर्थं "स्वामिन फलश्रुतेरित्यात्रेय" ३।४।४४ सूत्रं द्रष्टव्यम् ।

२२शः नियमः "परमतेन स्वसिद्धान्तकथने प्रथमान्तपदस्य साकाङ्क्षत्वसिद्धेः अधिकरणं नारम्भणीयम् ।" एतदर्थम् "आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते" ३।४।४५ सूत्रं द्रष्टव्यम् इति ।

अधुना द्रष्टव्यम्

### ( २ ) "कति च दोषाः कस्य भाष्यस्य कथं संवृत्ताः" ।

तत्र ३।४।११ अधिकरणे माध्वभाष्ये "असार्वत्रिकी" ३।४।१० इति सूत्रे अधिकरणस्य रचनायां दोषः ।

तत्रैव माध्वभाष्ये "नाविशेषात्" ३।४।१३ इति सूत्रे अधिकरणस्य रचनाया दोषः ।

तत्रैव माध्वभाष्ये "स्तुतयेऽनुमतिर्वा" ३।४।१४ इति सूत्रे अधिकरणस्य रचनाया दोषः ।

तत्रैव श्रीपतिभाष्ये "ऊर्ध्वरेतःसु च शब्दे हि" ३।४।१७ इति सूत्रे अधिकरणस्य रचनाया दोषः ।

३।४।१२ अधिकरणे रा नि म श्रीप व-भाष्येषु "परामर्शं जैमिनिरचोदना चापवदति हि" ३।४।१८ इति सूत्रे अधिकरणस्य अरचनाया दोषः ।

३।४।३ अधिकरणे माध्व-वल्लभभाष्ययोः "स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्" ३।४।२१ इति सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

३।४।४ अधिकरणे माध्व-वल्लभभाष्ययोः "पारिप्लवार्था इति चेन्न विशेषितत्वात्" ३।४।२३ इति सूत्रे अधिकरणस्य अरचनायां दोषः ।

३।४।५ अधिकरणे माध्व-वल्लभ-भाष्ययोः "अतएव चाग्नीन्धनाद्यनपेक्षा" ३।४।२५ इति सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

३।४।६ अधिकरणे निम्बार्कभिन्नभाष्ययोः "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" ३।४।२६ इति सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

तत्रैव रा श्री श्रीप-भाष्येषु "शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्" ३।४।२७ इति सूत्रे अधिकरणस्य आरम्भात् दोषः ।

३।४।७ अधिकरणे माध्व-वल्लभ-भाष्ययोः "सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्" ३।४।२८ इति सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

३।४।८ अधिकरणे माध्वभाष्ये "विहितत्वाच्चाश्रमकर्मापि" ३।४।३२ इति सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

तत्रैव माध्वभाष्ये "सर्वथापि त एवोभयलिङ्गात्" ३।४।३४ इति सूत्रे अधिकरणस्य आरम्भात् दोषः ।

३।४।९ अधिकरणे माध्व-वल्लभ-भाष्ययोः "अन्तरा चापि तु तद्दृष्टेः" ३।४।३६ इति सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

३।४।१० अधिकरणे माध्वभाष्ये "तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः" ३।४।४० इति सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

३।४।११ अधिकरणे रा नि श्री श्रीप-भाष्येषु "न चाधिकारिकमपि पतनानुमानात् तदयोगात्" ३।४।४१ इति सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

३।४।१२ अधिकरणे रा नि म श्री श्रीप-भाष्येषु "बहिस्तूभयथापि स्मृतेराचाराच्च" ३।४।४३ इति सूत्रे अधिकरणस्य अरचनायां दोषः ।

३।४।१३ अधिकरणे वल्लभभाष्ये "स्वामिनः फलश्रुतेरित्यात्रेयः" ३।४।४४ इति सूत्रे अधिकरणस्य अरचनायां दोषः ।

३।४।१४ अधिकरणे माध्वभाष्ये "सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्" ३।४।४७ इति सूत्रे अधिकरणस्य अरचनायां दोषः ।

तत्रैव म श्री व-भाष्येषु "कृत्स्नभावात् तु गृहिणोपसंहारः" ३।४।४८ इति सूत्रे अधिकरणस्य आरम्भात् दोषः ।

तत्रैव श्री श्रीप-भाष्ययोः "मौनवदितरेषामप्युपदेशात्" ३।४।४९ इति सूत्रे अधिकरणस्य रचनायां दोषः ।

३।४।१५ अधिकरणे श्रीकण्ठ-वल्लभ-भाष्ययोः "अनाविष्कुर्वन्नन्वयात्" ३।४।५० इति सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

३।४।१६ अधिकरणे वल्लभभाष्ये "ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्" ३।४।५१ इति सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

३।४।१७ अधिकरणे निम्बार्कश्रीकण्ठभाष्ययोः "एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः" ३।४।५२ इति सूत्रे अधिकरणस्य अरचनाया दोषः ।

एवं च अस्मिन् पादे भाष्याणां दोषसमाहारे कृते दृश्यते

| भाष्यनाम | अधिकरणस्य अरचनाया | अधिकरणस्य रचनाया |
|---|---|---|
| माध्वभाष्ये | ११ दोषाः | ५ दोषाः |
| श्रीपति ,, | २ ,, | २ ,, |
| रामानुज ,, | ३ ,, | १ दोषः |
| निम्बार्क ,, | ५ ,, | ० ,, |
| वल्लभ ,, | ९ ,, | १ ,, |
| श्रीकण्ठ ,, | ४ ,, | ३ दोषाः |

इति वक्तु शक्यते । तथाच अस्मिन् पादे शङ्कर-भास्कर-भाष्ययोः दोषाभावः परिलक्ष्यते । इदानीं द्रष्टव्यम्

**( ३ ) "काश्च श्रुतयः कैश्च सूत्रैरुपजीव्यत्वेन गृहीताः ।"**

तत्र प्रथमाधिकरणे

"पुरुषार्थोऽतः शब्दादिति बादरायणः" ३।४।१ इति सूत्रे "तरति शोकम् आत्मवित्" ( छाः ७।१।३ ) "ब्रह्म वेद ब्रह्मैव भवति" ( मुः ३।२।९ )

"शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः" ३।४।२ इति सूत्रे "तरति शोकम् आत्मवित्" ( छाः ७।१।३ )

"आचारदर्शनात्" ३।४।३ इति सूत्रे "जनको ह वैदेहो बहुदक्षिणेन यज्ञेन ईजे" ( बृः ३।१।१ )

"तच्छ्रुतेः" ३।४।४ इति सूत्रे "यदेव विद्यया करोति तदेव वीर्य्यवत्तरं भवति" ( छाः १।१।१० )

"समन्वारम्भणात्" ३।४।५ इति सूत्रे "त विद्याकर्म्मणी समन्वारभेते" ( बृः ४।४।२ )

"तद्वतो विधानात्" ३।४।६ इति सूत्रे "आचार्य्यकुलाद् वेदमधीत्य" ( छाः ८।१५।१ )

"नियमाच" ३।४।७ इति सूत्रे "कुर्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः" (ईश २)

"अधिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनात्" ३।४।८ इति सूत्रे "य सर्वज्ञ सर्ववित्" ( मु १।१।९ )

"तुल्यं तु दर्शनम्" ३।४।९ इति सूत्रे "एतद् ह स्म वै तत् पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रिरे" ( बृ ३।५।१ )

"असार्वत्रिकी" ३।४।१० इति सूत्रे "यदेव विद्यया करोति" ( छा १।१।१० )

"विभाग शतवत्" ३।४।११ इति सूत्रे "तं विद्याकर्म्मणी समन्वारभेते" (बृ ४।४।२)

"अध्ययनमात्रवत" ३।४।१२ इति सूत्रे "आचार्य्यकुलाद् वेदमधीत्य" (छा ८।१५।१)

"नाविशेषात्" ३।४।१३ इति सूत्रे "कुर्वन्नेवेह कर्म्माणि" ( ईश २ )

"कामकारेण चैके" ३।४।१५ इति सूत्रे एतद् ह स्म वै तत् पूर्वे विद्वांस प्रजां न कामयन्ते" ( बृ ४।४।२२ )

"उपमर्दं च" ३।४।१६ इति सूत्रे "यत्र तु अस्य सर्वम् आत्मा एव अभूत् तत् केन कं पश्येत्" ( बृ २।४।१४ )

"ऊर्द्ध्वरेतःसु च शब्दे हि" ३।४।१७ इति सूत्रे "त्रयो धर्म्मस्कन्धा" (छा २।२३।१) "ब्रह्म संस्थोऽमृतत्वमेति" ( छा २।२३।१ )

द्वितीयाधिकरणे—

"परामर्शं जैमिनिरचोदना चापवदति हि" ३।४।१८ इति सूत्रे 'त्रयो धर्म्मस्कन्धा" ( छा २।२३।१ ) "वीरहा वा एष देवानां योऽग्निम् उद्वासयते" ( तै १।१।१ )

'अनुष्ठेयं बादरायण साम्यश्रुते" ३।४।१९ इति सूत्रे "त्रयो धर्म्मस्कन्धा" (छा २।२३।१)

"विधिर्वा धारणवत्" ३।४।२० इति सूत्रे "अधस्तात् समिधं धारयन् अनुद्रवेत् उपरि हि देवेभ्यो धारयति" (?)

तृतीयाधिकरणे—

'स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्" ३।४।२१ इति सूत्रे "इयमेव जुहुरादित्य" (?) "स एष रसानां रसतम परम" ( छा १।१।३ )

"भावशब्दाच" ३।४।२२ इति सूत्रे "उद्गीथमुपासीत" ( छा १।१।१ ) 'सामोपासीत" ( छा २।२।१ )

चतुर्थाधिकरणे—

"पारिप्लवार्था इति चेन्न विशेषितत्वात्" ३।४।२३ इति सूत्रे "अथ ह याज्ञवल्क्यस्य द्वे भार्य्ये बभूवतु" (बृ ४।५।१) 'पारिप्लवम् आचक्षीत" "मनुर्वैवस्वतो राजा" (?)

"तथा चैकवाक्यतोपबन्धात्" ३।४।२४ इति सूत्रे "आत्मा वा अरे द्रष्टव्यः" ( बृः ४।५।६ ) "वायुर्वाव संवर्गः" ( छा. ४।३।१ )

पञ्चमाधिकरणे

"अतएव चाग्नीन्धनाद्यनपेक्षा" ३।४।२५ इति सूत्रे "तरति शोकम् आत्मवित्" ( छाः ७।१।३ )

षष्ठाधिकरणे

"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" ३।४।२६ इति सूत्रे "विविदिषन्ति यज्ञेन दानेन" ( बृः ४।४।२२ )

"शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ३।४।२७ इति सूत्रे "तस्मादेवंविच्छान्तो दान्त उपरत" ( बृः ४।४।२३ )

सप्तमाधिकरणे

"सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्" ३।४।२८ इति सूत्रे "न ह वा अस्यानन्नं जग्धं भवति" ( बृः ६।१।१४ ) "प्राणमात्रस्य अन्नमिदं सर्वम्" (?)

"अपि च स्मर्य्यते" ३।४।३० इति सूत्रे "जीविताल्ययमापन्नो योऽन्नमत्ति यतस्ततः। "लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥" (?) "मद्यं नित्यं ब्राह्मणो वर्जयेत्" (?)

"शब्दश्चातोऽकामकारे" ३।४।३१ इति सूत्रे "तस्माद् ब्राह्मणः सुरा न पिबेत्" (?)

अष्टमाधिकरणे

"विहितत्वाच्चाश्रमकर्म्मापि" ३।४।३२ इति सूत्रे "यावज्जीवमग्निहोत्रं जुहुयात्" (?)

"सहकारित्वेन च" ३।४।३३ इति सूत्रे "तमेतं वेदानुवचनेन ब्राह्मणाः" (बृः ४।४।२२)

"सर्वथापि त एवोभयलिंगात्" ३।४।३४ इति सूत्रे "यज्ञेन विविदिषन्ति" (बृः ४।४।२२) "अनाश्रितः कर्म्मफलं कार्य्यं कर्म्म करोति यः" ( गीः ६।१ )

"अनभिभवं च दर्शयति" ३।४।३५ इति सूत्रे "एष ह्यात्मा न नश्यति यं ब्रह्मचर्य्येणानुविन्दते" ( छाः ८।५।३ )

नवमाधिकरणे

"विशेषानुग्रहश्च" ३।४।३८ इति सूत्रे "जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः" (?)

"अतस्त्वितरज्ज्यायो लिंगात् च" ३।४।३९ इति सूत्रे "तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च" ( बृः ४।४।९ )

दशमाधिकरणे

"तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः" ३।४।४० इति सूत्रे "अत्यन्तमात्मानम् आचार्यकुले अवसादयन्" ( छाः २।२३।१ ) "आरण्य-

मियात् इति पर्द ततो न पुनरेयात्" (?) "ब्रह्मचर्यं समाप्य गृही भवेत्"
( जाबाल ४ ) "ब्रह्मचर्यादेव प्रव्रजेत्" ( जाबाल ४ )

एकादशाधिकरणे—

"न चाधिकारिकमपि पतनानुमानात् तदयोगात्" ३।४।४१ इति सूत्रे

"आरूढो नैष्ठिक धर्म्मं यस्तु प्रच्यवते पुन ।
प्रायश्चित्त न पश्यामि येन शुध्येत् स आत्महा" ॥ (?)

जैमिनि-सूत्रञ्च १।३।७ संस्यकम् ।

द्वादशाधिकरणे—

"बहिस्तूभयथापि स्मृतेराचाराच्च" ३।४।४३ इति सूत्रे

"प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा" (?)
"आरूढपतितं विप्रं स्पृष्ट्वा चान्द्रायणं चरेत्" (?)

त्रयोदशाधिकरणे—

'स्वामिन फलश्रुतेरित्यात्रेय" ३।४।४४ इति सूत्रे "वर्षति हास्मै" ( छा २।३।२ )
"आत्मने वा यजमानाय वा" ( बृ १।३।२८ )

"आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते" ३।४।४५ इति सूत्रे "तं ह बको दाल्भ्यो" ( छा १।२।१३ )

"श्रुतेश्च" ३।४।४६ इति सूत्रे "यां वै काचन यज्ञे ऋत्विज आशिषम् आशासते इति यजमानायैव तामाशिषमाशासते इति होवाच" (?) "अथ मुनि" "अथ ब्राह्मण" ( बृ ३।५।१ )

चतुर्दशाधिकरणे—

"सहकार्य्यन्तरविधि पक्षेण तृतीयं तद्वतो विध्यादिवत् ३।४।४७ इति सूत्रे
"बाल्यं च पाण्डित्यं च निर्विद्याथ मुनि" ( बृ ३।५।१ ) 'गार्हस्थ्यमाचार्य्य-कुलं मौनं वानप्रस्थम्" (?) "आत्मानं विदित्वा भिक्षाचर्यं चरन्ति" ( बृ ३।५।१ )

"कृत्स्नभावात्तु गृहिणोपसहार" ३।४।४८ इति सूत्रे 'अभिसमावृत्य कुटुम्बे" ( छा ८।१५।१ )

"मौनवदितरेषामप्युपदेशात्" ३।४।४९ इति सूत्रे "तप एव द्वितीय ब्रह्मचारी आचार्यकुलवासी तृतीय" ( छा २।२३।१ )

पञ्चदशाधिकरणे—

"अनाविष्कुर्वन्नन्वयात्" ३।४।५० इति सूत्रे "तस्माद् ब्राह्मण पाण्डित्यं निर्विद्य"

( बृः ३।५।१ ) "अव्यक्तलिंगा अव्यक्ताचारा" ( जाबाल ६ ), "यं न सन्तं न चासन्तं . स ब्राह्मणः" (?)

षोड़शाधिकरणे

"ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्" ३।४।५१ इति सूत्रे "गर्भे एव एतच्छयानो वामदेव एवमुवाच" ( ऐत. ४।५ ) "श्रवणयापि बहुभिर्य्यो न लभ्यः" ( कठ. २।७ )

सप्तदशाधिकरणे

"एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृते." ३।४।५२ इति सूत्रे "ब्रह्म वेद ब्रह्मैव भवति" ( मु. ३।२।९ ) "अस्थूलमनणु" ( बृ ३।८।८ ), "स एष नेति" ( बृ· ३।९।२६ ) "यत्र नान्यत् पश्यति" ( छाः ७।२४।१ ), "ब्रह्मैवेदममृतं पुरस्तात्" ( मुः २।२।११ ), "इदं सर्वं यदयमात्मा" ( बृ २।४।६ ), "स वा एष महानजः" ( ब्र ४।४।२५ ) "यत्र त्वस्य सर्वमात्मैवाभूत्" ( बृः ४।५।१५ )

इदानीं द्रष्टव्यम् एतादृशसूत्रोपजीव्य-श्रुतिबलेन

**( ४ ) "कीदृशी अस्य पादसंगतिर्भविष्यति।"**

यद्यपि उदाहृतश्रुतय. सर्वा. शाङ्करभाष्यानुसारेण, तथापि अत्र मतभेदो न महान् वर्त्तते। तेन पादसगतिरुपपाद्यप्रतिपाद्यमपि प्रायेण अभिन्नमेव। यस्तु प्रभेद अत्र दृश्यते, स तु प्रायेण वाक्यभेदमात्रम्। तात्पर्य्यांशे प्रायेण ऐक्यमेव अत्र सर्वेषाम् इत्येव प्रतिभाति। तथा च प्रतिभाष्यम् प्रतिपाद्यरूपेण अत्र यथा निर्देश. क्रियते स इत्थम्

शङ्करभाष्ये निर्गुण-ब्रह्मविद्यायाः बहिरंगसाधनान्याश्रमधर्मयज्ञदानादीनि अन्तरंग-साधन-शमदमनिदिध्यासनादीनि निरूपितानि।

भास्करभाष्ये प्रायेण तथैव।

रामानुजभाष्ये साधनाङ्गनिरूपणम्।

निम्बार्कभाष्ये विद्यातः तदङ्गात् कर्म्मणो वा पुरुषार्थविचार'।

माध्वभाष्ये—ज्ञानसामर्थ्यनिरूपणम्।

श्रीकण्ठभाष्ये विद्यासहकार्य्याश्रमधर्म्मनिरूपणम्।

श्रीकरभाष्ये ब्रह्मचर्य्याश्रमचतुष्टयनिरूपणम्।

अत्रापि शाकरभाष्येण सह यो मतभेदः, स तु प्राधान्येनैव ब्रह्मणः सगुणत्व-निर्गुणत्व-विषयकः। एतस्य यद् रहस्य तत्तु उक्तमेव। तथापि मध्वभाष्ये यज्ज्ञानसामर्थ्यनिरूपणम् अस्य पादस्य विषयत्वेन तत्तु चिन्तनीयं दृष्टिभेदरूपं, न तु विषयभेदात्मकम् इत्येव अस्माकं प्रतिभाति। उपासनाजन्यं ज्ञानं, ज्ञानफल च दुःखध्वसरूपा मुक्तिः इत्यादिकं लक्ष्यीकृत्य ज्ञान-

नवमाधिकरणस्य द्वितीयं सूत्रम्, श्रीकण्ठभाष्ये अष्टमम् अधिकरणम्। वल्लभभाष्ये षष्ठाधिकरणम्। तच्च सूत्रद्वयम्—

१। "रश्म्यनुसारी" ४।२।१८ (५१४)

२। 'निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वात् दर्शयति च" ४।२।१९ (५१५)

अत्र (१) "रश्म्यनुसारी" ४।२।१८ (५१४) इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तम्। ४र्थ सामान्यनियमात्। नि-म-भाष्यद्वये अधिकरणस्य अनारम्भात् दोष।

(२) "निशि नेति चेन्न सम्बन्धस्य यावद् देहभावित्वात् दर्शयति च" ४।२।१९ (५१५) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। ४र्थ सामान्यनियमात्, ५म विशेषनियमात्। रा-नि श्रीप-व-भाष्येषु अधिकरणस्य आरम्भात् दोष। माध्वभाष्ये एतत् सूत्रं च द्विधा विभक्तम्। परसूत्रे अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति संगच्छते।

## एकादशं दक्षिणायनाधिकरणम्।

अत्र "अतश्चायनेऽपि दक्षिणे" ४।२।२० (५१६) इति सूत्रस्य "अयने दक्षिणे" इति पदद्वयात् अस्य "दक्षिणायनाधिकरणं" नाम। तत्र श-भा-रा-श्री-श्रीप-भाष्येषु एतदारम्य सूत्रद्वयेन एतदधिकरण रचितम्। नि-म-व भाष्येषु तु न तथा कृतम्। श-भा-रा-श्री-प भाष्येषु एतद् एकादशाधिकरणम्। श्रीकण्ठभाष्ये तु नवमाधिकरणम्। निम्बार्कभाष्ये सूत्रत्रयात्मकतदीयपञ्चमाधिकरणस्य द्वितीय सूत्रम्, माध्वभाष्ये तु सूत्रपञ्चात्मक तदीयनवमाधिकरणस्य पञ्चमं सूत्रम्। वल्लभभाष्ये सूत्रत्रयात्मकतदीयसप्तमाधिकरणस्य द्वितीयं सूत्रम्। तच्च सूत्रद्वयम्—

१। "अतश्चायनेऽपिदक्षिणे" ४।२।२० (५१६)

२। 'योगिन प्रति च स्मर्यते स्मार्ते चैते" ४।२।२१ (५१७)

अत्र (१) अतश्चायनेऽपि दक्षिणे" ४।२।२० (५१६) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वं सङ्गतम्, तथापि "अतश्च" इति पदात् "विद्याफलम्" इत्येवं कस्यचित् प्रथमान्तपदस्य अध्याहार कर्त्तव्य इति प्रतिभाति। ५म सामान्यनियमात् ततश्च विधेयमेवावपि अत्र अधिकरणारम्भ सगच्छते। च अपि-हि शब्दानां न बाधकत्व विधेयमेवात् १२श विशेषनियमात्। नि-म-व-भाष्येषु अधिकरणस्य अनारम्भात्-तेषां दोष एव वक्तव्य।

(२) 'योगिन प्रति च स्मर्यते स्मार्ते चैते" ४।२।२१ (५१७) इत्यत्र "एते" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तं, तथापि चकारस्य प्रकृतविषयत्वप्रसंगात् तस्य निषेध। ४र्थ सामान्यनियमात ६ष्ठ विशेषनियमाच्च। अत नास्य अधिकरणारम्भकत्वं संगच्छते। माध्वभाष्ये तदीयदशमाधिकरणस्य आरम्भात् तस्यैव दोष वाच्य। पादशेषात् अत्रैव अधिकरणसमाप्तिश्च बोद्धव्या।

इदानीं द्रष्टव्यम् अनेन निवन्धेन अस्मिन् पादे अधिकरणरचनायाम्

( १ ) कति कीदृशा नियमा अत्र सङ्कलिताः ।

( २ ) कति च दोषाः कस्य भाष्यस्य कथं संवृत्ताः ।

( ३ ) काश्च श्रुतयः कैश्च सूत्रैः उपजीव्यत्वेन गृहीताः ।

( ४ ) उपजीव्यश्रुतिबलेन कीदृशी च पादसंगतिर्भविष्यति इति ।

एते च चत्वारः विषयाः अधस्तात् क्रमेण प्रदर्श्यन्ते, तत्र प्रथमस्तावत्

**( १ ) कति च कीदृशा नियमा अत्र संकलिताः ।**

अत्र न कोऽपि नियमः संकलितः, अतो द्रष्टव्यम्

**( २ ) कति च दोषाः कस्य भाष्यस्य कथं संवृत्ताः ।** इति ।

तत्र ४।२।२ अधिकरणे नि-व-भाष्ययोः "तन्मनः प्राणः उत्तरात् ४।२।३ सूत्र अधिकरणस्य अनारम्भात् दोषः ।

४।२।३ अधिकरणे नि-व-भाष्ययो "सोऽध्यक्षे तदुपगमादिभ्यः" ४।२।४ सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

तत्रैव रा-म-श्रीप-व-भाष्येषु "भूतेषु तच्छ्रुतेः" ४।२।५ सूत्रे अधिकरणस्य आरम्भात् दोषः ।

तत्रैव माध्वभाष्ये "नैकस्मिन् दर्शयतो हि" ४।२।६ सूत्रे अधिकरणस्य आरम्भात् दोषः।

४।२।५ अधिकरणे रा-नि-म-श्रीप-व-भाष्येषु "तदपीतेः संसारव्यपदेशात्" ४।२।८ सूत्रे अधिकरणस्य अरचनाया दोषः ।

४।२।६ अधिकरणे रा-नि-म-श्री-श्रीप-व-भाष्येषु "प्रतिषेधात् इति चेन्न शारीरात्" ४।२।१२ सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

४।२।७ अधिकरणे वल्लभभाष्ये "तानि परे तथा ह्याह" ४।२।१५ सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

४।२।८ अधिकरणे नि-श्री-भाष्ययोः "अविभागो वचनात्" ४।२।१६ सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

४।२।१० अधिकरणे म-नि-भाष्ययोः "रश्म्यनुसारी" ४।२।१८ सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

तत्रैव रा-नि-श्रीप-व-भाष्येषु "निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वात् दर्शयति च" ४।२।१९ सूत्रे अधिकरणस्य आरम्भात् दोषः ।

४।२।११ अधिकरणे नि-म-व-भाष्येषु "अतश्चायनेऽपि दक्षिणे" ४।२।२० सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

तत्रैव माध्वभाष्ये "योगिन प्रति च स्मर्य्यते स्मार्ते चैते" ४।२।२१ सूत्रे अधिकरणस्य आरम्भात् दोष ।

एव च अस्मिन् पादे भाष्याणां दोषसमाहारे कृते दृश्यते—

| भाष्यनाम | अधिकरणस्य अरचनायां | अधिकरणस्य रचनायां |
|---|---|---|
| निम्बार्कभाष्ये | ७ दोषा | १ दोष |
| वल्लभभाष्ये | ६ " | २ दोषौ |
| रामानुजभाष्ये | २ दोषौ | २ " |
| माध्वभाष्ये | ४ दोषा | ३ दोषा |
| श्रीपतिभाष्ये | २ दोषौ | २ दोषौ |
| श्रीकण्ठभाष्ये | २ " | ० |

इति वक्तु शक्यते। तथा च अस्मिन् पादे शङ्कर भास्करभाष्ययो दोषाभाव ।

इदानी द्रष्टव्यम्—

**( १ ) काश्च श्रुतयः कैश्च सूत्रैः उपजीव्यत्वेन गृहीताः ।**

तत्र प्रथमाधिकरणे—

"वाङ्मनसि दर्शनाच्छब्दाच्च" ४।२।१ इति सूत्रे

"अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते
मन प्राणे, प्राणस्तेजसि, तेज परस्यां देवतायाम्" ( छा० ६।८।६ )

द्वितीयाधिकरणे—

"तन्मन प्राण उत्तरात्" ४।२।३ इति सूत्रे

"अन्नमयं हि सोम्य मन आपोमय प्राण" ( छा० ६।५।४ )

"मन प्राणे" ( छा० ६।८।६ )

तृतीयाधिकरणे—

"सोऽध्यक्षे तदुपगमादिभ्य" ४।२।४ इति सूत्रे

'एवमेव इमम् आत्मानम् अन्तकाले सर्वे प्राणा अभिसमायन्ति" (बृ० ४।३।३८)

'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" (बृ० ४।४।२)

"स विज्ञानो भवति"( बृ० ४।४।२ )

"भूतेषु तच्छ्रुते" ४।२।५ इति सूत्रे

"प्राणस्तेजसि" ( छा० ६।८।६ )

चतुर्थाधिकरणे—

"समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य" ४।२।७ इति सूत्रे

"तयोर्ध्वमायन्नमृतत्वमेति" ( छा० ६।८।६ )

पञ्चमाधिकरणे

"तदापीतेः संसारव्यपदेशात्" ४।२।८ इति सूत्रे

"तेजः परस्यां देवतायाम्" ( छा० ६।८।६ )

"योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः" ( कठ० ५।७ )

षष्ठाधिकरणे

"प्रतिषेधादिति चेन्न शारीरात्" ४।२।१२ इति सूत्रे

"न तस्य प्राणा उत्क्रामन्ति" ( बृ० ४।४।६ )

"न तस्मात् प्राणा उत्क्रामन्ति" ( बृ० माध्य० ४।४८ )

"स्पष्टो ह्येकेषाम्" ४।२।१३

"स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते" ( बृ० ३।२।११ )

"स्मर्य्यते च" ४।२।१४

"देवापि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः" ( महा० १२।२७२।२२ )

सप्तमाधिकरणे

"तानि परे तथा ह्याह" ४।२।१५ इति सूत्रे

"गताः कलाः पञ्चदश प्रतिष्ठाः" ( मु० ३।२।७ )

"एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः
पुरुषायणाः पुरुषं प्राप्य अस्तं गच्छन्ति ।" ( प्र० ६।५ )

अष्टमाधिकरणे

"अविभागो वचनात्" ४।२।१६ इति सूत्रे

"भिद्यते चासां नाम रूपे" ( प्र० ६।५ )

"स एषोऽकलोऽमृतो भवति" ( प्र० ६।५ )

नवमाधिकरणे

"तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्
तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥" ४।२।१७ इति सूत्रे

"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥" (छा० ८।६।७)

दशमाधिकरणे

"रश्म्यनुसारी" ४।२।१८ इति सूत्रे

"अथ तैरेव रश्मिभिरूर्ध्वम् आक्रमते" ( छा० ८।६।५ )

"निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद् दर्शयति च" ४।२।१९ इति सूत्रे
'अमुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता
आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन् आदित्ये सृप्ता" (छा० ८।६।२)

एकादशाधिकरणे—

"योगिनः प्रति च स्मर्यते स्मार्ते चैते" ४।२।२१ इति सूत्रे
"अनाश्रितः कर्म्मफलं कार्य्यं कर्म्म करोति यः" ( गी० ६।१ )
"इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन् ।" ( गी० ५।९ )

इदानीं द्रष्टव्यम् एतादृशसूत्रोपजीव्यश्रुतिबलेन—

( ४ ) कीदृशी अस्य पादसङ्गतिः भविष्यति ।

अत्र प्रायेण सर्वैः सूत्रैः परलोकगमनप्रकारः एव वर्णितः, तथा कतिपयैः सूत्रैः मुक्तौ देहेन्द्रियाणां लयक्रमोऽपि दर्शितः । "अविभागो वचनात्" ( ४।२।१६ ) इति एकस्मिन् सूत्रे विदेहकैवल्यस्वरूपमपि विवृतमेव । अत्र रामानुजादिभाष्ये व्याख्याकौशलेन जीवब्रह्मणो मुक्तौ विभाग एव वर्त्तते—इत्येव प्रतिपादितम् । हेतुश्चात्र स्वमतानुरागमात्रमित्येव कल्प्यते ।
तथा च तेषां यन्निरूपणं, तत् प्रदर्श्यते—

शाङ्करमते—म्रियमाणस्य उत्क्रान्तिप्रकारदर्शनम् ।
भास्करमते प्रायेण तथैव ।
रामानुजमते—उत्क्रान्तिप्रकारः ।
निम्बार्कमते—विद्वदविद्वत्साधारणोत्क्रान्तिनिरूपणम् ।
माध्वमते—देवानां मोक्षोत्क्रान्तिनिरूपणम् ।
श्रीकण्ठमते—उपासकस्य विदुषः शरीरात् उत्क्रान्तिनिरूपणम् ।
श्रीपतिमते—त्वं-पदार्थभूतजीवोत्क्रान्त्यादिदशाविशेषकथनम् इति ।

वस्तुतः अत्र मतभेदः नाममात्रेण पर्यवसितः ।

## चतुर्थाध्याये तृतीयपादे
## प्रथमम् अर्चिराद्यधिकरणम् ।

अत्र "अर्चिरादिना तत्प्रथितेः" ४।३।१ (५१८) इतिसूत्रस्य "अर्चिरादिना" इति पदात् अस्य "अर्चिराद्यधिकरणं" नाम । तत्र एकं वल्लभभाष्यं विहाय सर्वेषु भाष्येषु एतेन एकेन सूत्रेण एतदधिकरणं रचितम् । वल्लभभाष्ये एतदधिकरणे सूत्रचतुष्टयं गृहीतम् ।

अत्र प्रथमान्तपदस्य ऊहनीयत्वात् पादारम्भात् अधिकरणारम्भः सङ्गच्छते। २य सामान्यनियमात् । परसूत्रे अधिकसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिश्च समुचिता ।

## द्वितीयं वाय्वधिकरणम् ।

अत्र "वायुमब्दादविशेषविशेषाभ्याम्" ४।३।२ (५१९) इति सूत्रस्य "वायु"-शब्दात् अस्य "वाय्वधिकरणं" नाम। तत्र वल्लभभाष्यभिन्नेषु सर्वेषु भाष्येषु एतेन एकेनैव सूत्रेण एतद् द्वितीयम् अधिकरणं रचितम्। वल्लभभाष्ये एतत् सूत्र सूत्रचतुष्टयात्मक-तदीयप्रथमाधिकरणस्य द्वितीयं सूत्रम्। तेन अत्र अधिकरणस्य अनारम्भात् तस्य दोषः।

अत्र अस्य विषयश्रुतिवाक्यात् "वायुः" इति प्रथमान्तपदस्य ऊहनीयत्वात् प्रथमान्त-पदाभावेऽपि विधेयभेदात् अधिकरणारम्भः सङ्गच्छते। ५म सामान्यनियमात्। ११श विशेष-नियमाच्च। परसूत्रे अधिकसम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरणस्य समाप्तिरपि बोद्धव्या।

## तृतीयं तडिदधिकरणम् ।

अत्र "तडितोऽधि वरुणः सम्बन्धात्" ४।३।३ ( ५२० ) इति सूत्रस्य "तडितः" इति पदात् अस्य "तडिदधिकरणं" नाम। तत्र वल्लभभाष्यभिन्नेषु सर्वेषु भाष्येषु अनेन एकेन सूत्रेण एतदधिकरणं रचितम्। वल्लभभाष्ये तु एतत् सूत्रं तदीयप्रथमाधिकरणस्य चतुर्षु सूत्रेषु तृतीयं सूत्रम्।

अत्र "वरुणः" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तम्। ४र्थ सामान्य-नियमात्। वल्लभभाष्ये अधिकरणस्य अकरणात् दोषः। तत्र पुनः एकम् अधिकं सूत्र पठितम्। तच्च सूत्रम् "वरुणाच्चाधीन्द्रः प्रजापतिः" इति। परसूत्रे अधिकसम्मत्या अधि-करणस्य आरम्भात् अत्रैव अधिकरणसमाप्तिश्च सङ्गच्छते एव।

## चतुर्थम् आतिवाहिकाधिकरणम् ।

अत्र "आतिवाहिकास्तल्लिङ्गात्" ४।३।४ (५२१) इति सूत्रस्य "आतिवाहिकः" इति पदात् अस्य "आतिवाहिकाधिकरण" नाम। अत्र सर्वेषु भाष्येषु चतुर्थम् अधिकरणम् आरब्धम्। वल्लभभाष्ये तु द्वितीयम् अधिकरणम्। तत्र शंकर-श्रीपति-वल्लभभाष्येषु अत्र सूत्रत्रयं गृहीतम्, भा-रा-नि-श्री-भाष्येषु तु सूत्रद्वयम्, "उभयव्यामोहात् तत्सिद्धेः" (४।३।५) इति सूत्रस्य वर्जनात्। माध्वभाष्ये पुनः सूत्रद्वयं गृहीतम्। तत्र "उभयव्यामोहात् तत्सिद्धेः" (४।३।५) इति सूत्र न वर्जितम्। तच्च सूत्रत्रयम्

१। "आतिवाहिकास्तल्लिङ्गात" ४।३।४ ( ५२१ )
२। "उभयव्यामोहात् तत्सिद्धे" ४।३।५ ( ५२२ )
३। "वैद्युतेनैव ततस्तच्छ्रुतेः" ४।३।६ ( ५२३ )

अत्र ( १ ) "आतिवाहिकास्तल्लिङ्गात्" ४।३।४ (५२१) इत्यत्र "आतिवाहिका" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं संगतमेव। ४र्थ सामान्यनियमात्।

( २ ) "उभयव्यामोहात् तत्सिद्धेः" ४।३।५ (५२२) इत्यत्र प्रथमान्तपदाभावात्

नास्य अधिकरणारम्भकत्वम्। ४र्थ सामान्यनियमात्। "तत्"-पदस्य साकांक्षत्वविधानात् ७म विशेषनियमाच्च। भा-रा-नि-श्री भाष्येषु एतत् सूत्र न पठितम्।

( ३ ) "वैद्युतेनैव ततस्तच्छ्रुते" ४।३।६ (५२३) इत्यत्र प्रथमान्तपदाभावात् तथैव नास्य अधिकरणारम्भकत्वम्। ४र्थ सामान्यनियमात्, ७म विशेषनियमाच्च। परसूत्रे अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्ति सङ्गच्छते एव। अत्र माध्वभाष्ये अधिकरणस्य आरम्भात् दोष।

पञ्चम कार्य्याधिकरणम्।

अत्र 'कार्य्यं बादरिरस्य गत्युपपत्ते" ४।३।७ (५२४) इति सूत्रस्थ "कार्य्यं" पदात् अस्य "कार्य्याधिकरण" नाम। अत्र सर्वेषु भाष्येषु अधिकरणम् आरब्धम्। तत्र श-भा-रा-नि-श्री-श्रीप-भाष्येषु पञ्चमाधिकरणं, माध्वभाष्ये षष्ठाधिकरण, वल्लभभाष्ये तु तृतीयाधिकरणम्, शध्व वल्लभभाष्ययो सूत्राष्टक गृहीतम्। भा रा-नि-म-श्री-श्रीप-भाष्येषु सूत्रदशक गृहीतम्। तच्च सूत्राष्टक—

१। "कार्य्यं बादरिरस्य गत्युपपत्ते" ४।३।७ (५२४)
२। "विशेषितत्वाच्च" ४।३।८ (५२५)
३। "सामीप्यात् तु तद्व्यपदेश" ४।३।९ (५२६)
४। "कार्य्यात्यये तदध्यक्षेण सहात परमभिधानात्" ४।३।१० (५२७)
५। 'स्मृतेश्च" ४।३।११ (५२८)
६। "परं जैमिनिर्मुख्यत्वात्" ४।३।१२ (५२९)
७। "दर्शनाच्च" ४।३।१३ (५३०)
८। "न च कार्य्ये प्रतिपत्त्यभिसन्धि" ४।३।१४ (५३१)

अत्र ( १ ) "कार्य्यं बादरिरस्य गत्युपपत्ते" ४।३।७ (५२४) इत्यत्र "कार्य्यम्" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वम्। ४र्थ सामान्यनियमात्। स्वमतानुकूलविषयान्तर ज्ञापक-बादरिमतात् अधिकरणारम्भ युक्त एव। १०म विशेषनियमात्।

( २ ) "विशेषितत्वाच्च" ४।३।८ (५२५) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। ४र्थ सामान्यनियमात् च-कारात् साकांक्षत्वमपि, ६ष्ठ विशेषनियमात्। इति सूत्रद्वय तु पूर्वपक्षसूत्रम्।

( ३ ) "सामीप्यात् तु तद्व्यपदेश" ४।३।९ (५२६) इत्यत्र 'तद्व्यपदेश" इति प्रथमान्तपदसत्त्वेऽपि तु-शब्दयोगात् नास्य अधिकरणारम्भकत्वम्। तु-शब्देन सिद्धान्तपक्षारम्भ। उक्तपूर्वपक्षव्यावृत्तत्वात् नात्र अधिकरणारम्भ। ४र्थ सामान्यनियमात्, ९म १८श विशेषनियमाभ्याम्।

( ४ ) "कार्य्यात्यये तदध्यक्षेण सहात परमभिधानात्" ४।३।१० (५२७) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। अत शब्देन साकांक्षत्वविधानात् ७म विशेषनियमाच्च। ४र्थ सामान्यनियमात्।

( ५ ) "स्मृतेश्च" ४।३।११ (५२८) इति अत्रापि तथा। इति एतत्सूत्रयं सिद्धान्त-सूत्रम् । प्रथमान्तपदाभावात् हेतुसमुच्चायक-च-कारात् न अधिकरणारम्भः, ४र्थ सामान्यनियमात् ६ष्ठ विशेषनियमाच्च । अतः परं सूत्रत्रयं पूर्वपक्षज्ञापकम् ।

( ६ ) "परं जैमिनिर्मुख्यत्वात्" ४।३।१२ (५२९) इत्यत्र "परं" "जैमिनिः" इति प्रथमान्तपदद्वयसत्त्वेऽपि नाम्ना परमतकीर्तनात्, तथा च "कस्मात् परं" इति आकांक्षाया साकांक्षत्वात् नास्य अधिकरणारम्भकत्वम् । एतत् जैमिनेर्मतम् विषयान्तरस्य अज्ञापक-प्रतिकूलार्थक-पूर्वपक्षसूत्रम् । ४र्थ सामान्यनियमात्, १०म विशेषनियमाच्च ।

( ७ ) "दर्शनाच्च" ४।३।१३ (५३०) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणा-रम्भकत्वम् । च-कारस्य हेतुसमुच्चयार्थकत्वाच्च। ४र्थ सामान्यनियमात्, ६ष्ठ विशेषनियमाच्च ।

( ८ ) "न च कार्य्ये प्रतिपत्त्यभिसन्धिः" ४।३।१४ (५३१) इत्यत्र "प्रतिपत्त्यभिसन्धिः" इति प्रथमान्तपदसत्त्वेऽपि "न च"-पदसमभिव्याहारात् नास्य अधिकरणारम्भकत्वम् । च-कारस्य हेतुसमुच्चायकार्थकत्वात् । ४र्थ सामान्यनियमात्, ६ष्ठ विशेषनियमाच्च । परसूत्रे अधिकरणा-रम्भात् अत्र अधिकरणसमाप्तिः कल्पयितुं शक्यते। इति एतत्सूत्रयं पुनः पूर्वपक्षसूत्रम् । पूर्वपक्षेण अधिकरणसमाप्तिसाङ्गत्यम् उत्तराधिकरणे विचारयिष्यते ।

## षष्ठम् अप्रतीकालम्बनाधिकरणम् ।

अत्र "अप्रतीकालम्बनान् नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च" ४।३।१५ (५३२) इति सूत्रस्य "अप्रतीकालम्बनान्"-पदात् अस्य "अप्रतीकालम्बनाधिकरण" नाम । तत्र शंकर-वल्लभ-भाष्ययोः अधिकरणारम्भः दृश्यते, अन्येषु तु न तथा। तेन शांकरभाष्ये सूत्रद्वयात्मक-तदीयषष्ठाधिकरणस्य प्रथम सूत्रम्, वल्लभभाष्ये सूत्रद्वयात्मकतदीयचतुर्थाधिकरणस्य प्रथम सूत्रम् । भा-रा-नि-श्री-श्रीप-भाष्येषु सूत्रदशकात्मकतदीयपञ्चमाधिकरणस्य नवमं सूत्रम् । माध्वभाष्ये तु सूत्रदशकात्मकतदीय-षष्ठाधिकरणस्य नवमं सूत्रम् । तच्च सूत्रद्वयम्

१। "अप्रतीकालम्बनान् नयतीति बादरायण
उभयथाऽदोषात तत्क्रतुश्च" ४।३।१५ (५३२)

२। "विशेषं च दर्शयति" ४।३।१६ (५३३)

अत्र (१) अप्रतीकालम्बनान् नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च" ४।३।१५ (५३२) इत्यत्र "बादरायण" "तत्क्रतु" इति प्रथमान्तपदाभ्याम् अस्य अधिकरणारम्भ-कत्वं सम्पद्यते । स्वमतख्यापनाय विषयान्तरज्ञापनाय च बादरायण इति प्रथमान्त-"नाम"-पदेन सूत्रस्य रचितत्वात् न दोषः । ततश्च "अमानवः पुरुषः" इति प्रथमान्तपदस्य अत्र ऊहनीय-त्वात् । अतः अत्र अधिकरणारम्भः युज्यते । ४र्थ सामान्यनियमात् १०म विशेषनियमात् १२श विशेषनियमाच्च। भा-रा-नि-म-श्री-श्रीप भाष्येषु अत्र अधिकरणं न रचितम् । तत्र एतदधि-

करणम् आरब्धाधिकरणस्य अङ्गत्वेन गृहीतम्। तत् तु आपातदृष्ट्या संगतमेव प्रतिभाति। यत पूर्ववर्तिकार्य्याधिकरणे 'कार्य्यं बादरिरस्य गत्युपपत्ते" तथा "विशेषितत्वाच्च" इति प्रथमसूत्रद्वयेन बादरिमतं विवृत्य पूर्वपक्षत्वावर्तकन्तु शब्दघटितं यत "सामीप्यात् तु तद्-व्यपदेशः" इति सूत्रं, तद् आरभ्य सूत्रत्रयेण तन्मतं निरस्य "परं जैमिनिर्मुख्यत्वात्" इत्यादि-सूत्रत्रयेण पुन मतान्तरं विवृतम् इति। तत "अप्रतीकालम्बनान् नयति इति बादरायण उभयथाऽदोषात् तत्क्रतुश्च" इति परवर्त्तिसूत्रेण यत् स्वमतवर्णनं तत् जैमिनिमतस्य अभ्यासस्यपरम् इत्येव सङ्गतम्। तथापि पूर्वपक्षमतेन अधिकरणसमापनं न सगतम्। अत आपातदृष्ट्या एतदधिकरणस्य पूर्वाधिकरणाङ्गत्वमेव संगतम् इत्येव अनुमीयते। अन्यथा दोषापत्ते। सत्यम् एतत्। परन्तु "अप्रतीकालम्बनान् नयति" इति विविच्य निर्देशात् उपासकसामान्येन अनिर्देशात् विधेयभेदस्य अवश्यम्भावित्वात्, विधेयभेदात् च अस्य पृथगधिकरणत्वं युक्ततरमेव भवति। यदि अत्र एतादृशविशेषनिर्देशः न कृत स्यात्, तदा एतदधिकरणस्य पूर्वाधिकरणाङ्गत्वं संगतमेव आसीत्, नात्र सन्देह। परन्तु तथा न कृतम् अत्र। अत विधेयभेदात् अस्य पृथगधिकरणत्वं संगतमेव। परन्तु तथा सत्यपि पूर्ववर्ति-'कार्य्याधिकरणस्य" पूर्वपक्षसूत्रे समाप्तिकल्पनं न सगतम्, ग्रन्थे अस्मिन् कुत्रापि इयं शैली न अनुसृता। एतदपि सत्यम्, तथापि सूत्राक्षरलब्धस्य अर्थस्य प्राधान्यात्, एतदेव आस्था स्वीकरणीयम् इति। अत अत्र अधिकरणारम्भ समुचित एव। तथा च भा-रा-नि-म-श्री-श्रीप-भाष्येषु अधिकरणस्य अनारम्भात् दोष एव कल्पनीय इति।

अत्र इदमपि बोद्धव्यम्—जैमिनिमतेन अधिकरणसमापनं न तावत् सम्पूर्णतया व्याससूत्ररचनाशैलीविरुद्धम्। जैमिने अन्यत्र तथाकरणं वैयासिकरीतिविरुद्धम्—इति सत्यम्। जैमिनिमतस्य अंशत ग्रहणदर्शनात्। यथा—"तद्भूताधिकरणम्" ३।४।१०। अत्र यत् अधिकरणारम्भकसूत्रम् 'तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमा-तद्रूपाभावेभ्य" ३।४।४० इति, तत्र "अपि"-शब्देन भगवतो बादरायणस्य अपि तत्र सम्मति दर्शनात्"—इति वृत्तौ स्पष्टतयैव उक्तम्। अत व्यासीयसूत्ररचनाशैलीविरोध न कल्पनीय। ततश्च जैमिनीयपूर्वमीमांसाप्रतिपादितशास्त्रतात्पर्य्यनिर्णयकौशलमपि अत्र उत्तरमीमांसाया-मपि सर्वत्र गृहीतमेव। तत्र पूर्वमीमांसाया या न्यूनता तस्या परिहारार्थैव व्यासस्य उत्तरमीमांसा-रम्भ इत्यपि विदितमेव विदुषाम्। अत जैमिनीयमत न सर्वतोभावेन व्यासदेवेन वर्जितं निराकृतं वा, कपिलकणादादीनां मतनिराकरणमिव। तेन अत्र जैमिनीयमतेन एतत् कार्य्याधिकरणस्य समापनं न असंगतम्, न वा वैयासिकसूत्ररचनापद्धतिविरुद्धम्। यद्यपि अत्र जैमिनिमत वृत्तौ पूर्वपक्षत्वेन उपन्यस्तं दृश्यते, तथापि अत्र कथञ्चित् व्याससम्मतिकल्पनं न भृशं दोषाय भवितुम् उचितम् इत्येव अनुमीयते। अत प्रथमान्तपदबलेन विधेयभेदाच्च अत्र

पृथगधिकरणरचन न असंगतम् इति प्रतिभाति। सिद्धान्तम् अनुक्त्वा पूर्वपक्षेण अधिकरण-समापनमेव दोषावहं तथा व्यासशैलीविरुद्धम्। अत्र न तथा दृश्यते। अतः नात्र दोषः।

( २ ) "विशेषं च दर्शयति" ४।३।१६ (५२३) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। च-कारस्य हेतुसमुच्चयार्थकत्वात्। ४र्थ सामान्यनियमात् ६ष्ठ विशेषनियमाच्च, पादशेषात् तत्रैव अधिकरणसमाप्ति संगच्छते।

## चतुर्थाध्याये तृतीयपादसमालोचनम्।

इदानीं द्रष्टव्यम् अनेन निवन्धेन अस्मिन् पादे अधिकरणरचनाया

(१) कति कीदृशाः नियमाः अत्र सङ्कलिता।

(२) कति च दोषाः कस्य भाष्यस्य कथ संवृत्ताः।

(३) काश्च श्रुतय कैश्च सूत्रै उपजीव्यत्वेन गृहीता।

(४) उपजीव्यश्रुतिबलेन कीदृशी च पादसंगतिर्भविष्यति इति।

एते च चत्वारः विषया अधस्तात् क्रमेण प्रदर्श्यन्ते, तत्र प्रथम तावत्

### ( १ ) कति कीदृशाः च नियमाः सङ्कलिताः।

अत्र न कोऽपि नियमः सकलितः।

### ( २ ) कति च दोषाः कस्य भाष्यस्य कथं संवृत्ताः।

अत्र ४।३।२ अधिकरणे वल्लभभाष्ये "वायुमब्दादविशेषविशेषाभ्याम्" ४।३।२ इति सूत्रे अधिकरणस्य अनारम्भात् दोषः।

४।३।३ अधिकरणे वल्लभभाष्ये "तडितोऽधि वरुणः सम्बन्धात्" ४।३।३ इति सूत्रे अधिकरणस्य अनारम्भात् दोषः।

४।३।४ अधिकरणे माध्वभाष्ये "वैद्युतेनैव ततस्तच्छ्रुते" ४।३।६ इति सूत्रे अधि-करणस्य आरम्भात् दोषः।

४।३।६ अधिकरणे भा-रा-नि-म-श्री-श्रीप-भाष्येषु "अप्रतीकालम्बनान् नयति इति वादरायण उभयथाऽदोषात् तत्क्रतुश्च" ४।३।१५ इति सूत्रे अधिकरणस्य अरचनाया दोषः।

एव च अस्मिन् पादे भाष्याणा दोषसमाहारे कृते दृश्यते

| भाष्यनाम | अधिकरणस्य अरचनाया | अधिकरणस्य रचनाया |
|---|---|---|
| भास्करभाष्ये | १ दोषः | ० |
| रामानुजभाष्ये | १ ,, | ० |
| निम्बार्कभाष्ये | १ ,, | ० |
| माध्वभाष्ये | १ ,, | १ दोषः |
| श्रीकण्ठभाष्ये | १ ,, | ० |

| भाष्यनाम | अधिकरणस्य अरचनायां | अधिकरणस्य रचनायां |
|---|---|---|
| श्रीपतिभाष्ये | १ दोष | ० |
| मध्वभाष्ये | २ दोषौ | ० |

इति वक्तु पार्यते । तथा च अस्मिन् पादे शङ्कराचार्यस्यैव दोषाभाव ।

इदानीं द्रष्टव्यम्—

( ३ ) कास्ता श्रुतयः कैश्च सूत्रै उपजीव्यत्वेन गृहीता ।

तत्र प्रथमाधिकरणे—

"अर्चिरादिना तत्प्रथिते" ४।३।१ इति सूत्रे

"अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभि ऊर्ध्वम् आक्रमते" ( छा० ८।६।५ )

"ते अर्चिषम् अभिसम्भवन्ति" ( बृ० ६।२।१५ )

"ये च इमे अरण्ये श्रद्धा तप इत्युपासते ।" ( बृ० ६।२।१५ )

द्वितीयाधिकरणे—

"वायुमब्दादविशेषविशेषाभ्याम्" ४।३।२ इति सूत्रे

"स एतं देवयानं पन्थानम् आपद्य अग्निलोकम् आगच्छति, स वायुलोकं, स आदित्यलोकं, स वरुणलोकं, स इन्द्रलोकं, स प्रजापतिलोकं, स ब्रह्मलोकम् ।" (कौ० १।३)

"ते अर्चिषम् अभिसम्भवन्ति अर्चिषोऽहः, अह आपूर्यमाणपक्षम्, आपूर्यमाणपक्षाद् यान् षडुदङ्ङेति मासान् तान् । ( छा० ५।१०।१ )

"मासेभ्य संवत्सरं, संवत्सरात् आदित्यम्, आदित्यात् चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुष अमानव स एनान् ब्रह्म गमयति ।" (छा० ५।१०।२)

"यदा वै पुरुषोऽस्मात् लोकात् प्रैति स वायुम् आगच्छति, तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं, तेन स ऊर्ध्वम् आक्रमते, स आदित्यम् आगच्छति ।" ( बृ० ५।१०।१ )

तृतीयाधिकरणे—

"तडितोऽधि वरुण सम्बन्धात्" ४।३।३ इति सूत्रे

चतुर्थाधिकरणे—

"आतिवाहिकास्तल्लिङ्गात्" ४।३।४ इति सूत्रे

"अग्निलोकं वायुलोकम् ।" ( कौ० १।३ )

"तत् पुरुषोऽमानव स एनान् ब्रह्म गमयति ।" (छा० ४।१५।५)

"वैद्युतेनैव ततस्तच्छ्रुते" ४।३।६ इति सूत्रे

"अमानव स एत्य ब्रह्मलोकं गमयति ।" ( ? )

पञ्चमाधिकरणे

"कार्य्यं वादरिरस्य गत्युपपत्तेः" ४।३।७ इति सूत्रे

"स एतान् ब्रह्म गमयति।" ( छा० ४।१५।५ )

"विशेषितत्वाच्च" ४।३।८ इति सूत्रे

"ब्रह्मलोकान् गमयति।" ( बृ० ६।२।१५ )

"स्मृतेश्च" ४।३।११ इति सूत्रे

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥" ( महा ? )

"दर्शनाच्च" ४।३।१२ इति सूत्रे

"तयोर्ध्वम् आयन् अमृतत्वमेति।" ( छा० ८।६।६ )

"न च कार्य्ये प्रतिपत्त्यभिसन्धिः।" ४।३।१४ इति सूत्रे

"प्रजापतेः सभा वेश्म प्रपद्ये।" ( छा० ८।१८।१ )

"ये यदन्तरा तद् ब्रह्म।" ( छा० ८।१४।१ )

षष्ठाधिकरणे

"अप्रतीकालम्बनान् नयतीति वादरायण उभयथाऽदोषात् तत्क्रतुश्च" ४।३।१५ इति सूत्रे

"नाम ब्रह्म।" ( छा० ७।१।५ )

"विशेष च दर्शयति" ४।३।१६ इति सूत्रे

"यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति।" ( छा० ७।१।५ )

"वाग्वाव नाम्नो भूयसी।" ( छा० ७।२।१ )

इदानीं द्रष्टव्यम् एतादृशसूत्रोपजीव्यश्रुतिबलेन

**( ४ ) कीदृशी अस्य पादसंगतिः भविष्यति।**

( ४ ) पादोऽयम् उपासकानाम् उत्क्रान्तिमार्गनिरूपणपरः इति सूत्रतः श्रुतितश्च अवगम्यते। एतदेव यथा विभिन्नभाष्येषु वर्णित तद् अधस्तात् प्रदर्श्यन्ते। यथा

शांकरमतेन सगुणब्रह्मविदः मृतस्य उत्तरमार्गाभिगमनम्।

भास्करमतेन प्रायेण तथैव ब्रह्मणः सगुणनिर्गुणभेदानङ्गीकारः इत्येव अत्र मतभेदकारणम्।

रामानुजमतेन -- अर्चिरादिगतिः।

निम्बार्कमतेन विदुषो ब्रह्मप्राप्तये गतिनिरूपणम्।

मध्वमतेन स्वर्गगम्ययोः निरूपणम्।

श्रीकण्ठमतेन अर्चिरादिगतिनिरूपणम्।

श्रीकरमतेन अर्चिरादिना मार्गेण गत्यागतिफलम्।

अत्र शङ्करमते यत् "सगुणब्रह्मविद् मृतस्य उत्तरमार्गाभिगमनम्" इति उक्तम्, तत् तु तन्मते ब्रह्मण तादृशभेदस्वीकारादेव। अन्यै ब्रह्मण निर्गुणत्व न स्वीक्रियते। अतोऽत्र अयं प्रभेद।

इति चतुर्थाध्याये तृतीय पाद।

## चतुर्थाध्याये चतुर्थपादः।

### प्रथम सम्पद्याविर्भावाधिकरणम्।

अत्र "सम्पद्याविर्भाव स्वेन शब्दात्" ४।४।१ (५३४) इति सूत्रस्य "सम्पद्याविर्भाव" इति पदेन अस्य "सम्पद्याविर्भावाधिकरणं" नाम। अत्र श-भा-रा-नि-श्री-श्रीप-भाष्येषु सूत्रत्रयं गृहीतम्। माध्वभाष्ये एक, वल्लभभाष्ये सूत्रचतुष्टयम् इति। तत् च सूत्रत्रयं—

१। "सम्पद्याविर्भाव स्वेन शब्दात्" ४।४।१ (५३४)
२। "मुक्त प्रतिज्ञानात्" ४।४।२ (५३५)
३। 'आत्मा प्रकरणात्" ४।४।३ (५३६)

अत्र (१) "सम्पद्याविर्भाव स्वेन शब्दात्" ४।४।१ (५३४) इत्यत्र "सम्पद्याविर्भाव" इति प्रथमान्तपदात् तथा पादारम्भात् अस्य अधिकरणारम्भकत्वं युक्तमेव। ४र्थ सामान्यनियमात् २य विशेषनियमाच्च।

(२) "मुक्त प्रतिज्ञानात्" ४।४।२ (५३५) इत्यत्र "मुक्त" इति प्रथमान्तपदात् अस्यापि अधिकरणारम्भकत्वं युक्तमेव, तथापि अर्थत साकाङ्क्षत्वस्य प्राधान्यात् विधेयान्तरत्वाभावाच्च, तन्न युक्तम्। माध्वभाष्ये तथैव कृतमिति दृश्यते। तथापि नियमानुगृहीतत्वात् सर्वासाम् आचार्याणां मतविरुद्धत्वात् नास्य अधिकरणारम्भकत्वकल्पनं समुचितम्। अत माध्वभाष्ये अधिकरणारम्भात् दोष। ४र्थ सामान्यनियमात् ४र्थ विशेषनियमाच्च।

(३) "आत्मा प्रकरणात्" ४।४।३ (५३६) इत्यत्रापि तथैव। "आत्मा" इति प्रथमान्त पदस्य सत्त्वात् अत्र अधिकरणारम्भ समुचित, माध्वभाष्ये तथैव कृतम्। परन्तु पूर्वसूत्रवत् अस्य साकाङ्क्षत्वसिद्धे विधेयान्तरत्वाभावाच्च नास्य अधिकरणारम्भकत्वं युक्तम्। ४र्थ सामान्य नियमात्, ४र्थ विशेषनियमाच्च। माध्वभाष्ये अधिकरणस्य आरम्भात् दोष। परसूत्रे अधिक-सम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्ति संगच्छते।

### द्वितीयम् अविभागेन दृष्टत्वाधिकरणम्।

अत्र 'अविभागेन दृष्टत्वात्" ४।४।४ (५३७) इति सूत्रस्य पदद्वयात् अस्य "अविभागेन दृष्टत्वाधिकरणं" नाम। अत्र श-भा-रा नि-म-श्री-भाष्येषु एतदेव एकं सूत्रं

गृहीतम्। श्रीपतिभाष्ये तु एतदारम्य सूत्रचतुष्टयं गृहीतम्। वल्लभभाष्ये अधिकरणं न आरब्धम्। तत्र एतत् सूत्रं तदीयसूत्रचतुष्टयात्मकप्रथमाधिकरणस्य चतुर्थं सूत्रम्। माध्व-भाष्ये अनेन चतुर्थाधिकरणं रचितम्।

अत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्व युक्तम्। तथापि पूर्वसूत्रात् "मुक्त." "आत्मा" इति एकस्य प्रथमान्तपदस्य अध्याहारात्, अर्थतः विषयभेदात्, विधेयान्तर-त्वात् ऊहनीयप्रथमान्तपदाच्च तद् युक्तमेव। ५म सामान्यनियमात्, ४र्थ विशेषनियमाच्च, अन्वयप्रकार. वृत्तौ द्रष्टव्य। अत्र वल्लभभाष्ये अधिकरणस्य अनारम्भात् दोषः एव वाच्यः। परसूत्रे अधिकसम्मत्या अधिकरणारम्भात् अत्रैव तस्य समाप्ति.।

## तृतीयं ब्राह्माधिकरणम्।

अत्र "ब्राह्मेण जैमिनिरुपन्यासादिभ्य." ४।४।५ ( ५३८ ) इति सूत्रस्य "ब्राह्मेण" इति पदात् अस्य "ब्राह्माधिकरणं" नाम। अत्र श-भा-रा-नि-म-श्री-व-भाष्येषु अधिकरणम् आरब्धम्। श्रीपतिभाष्ये तु एतत सूत्रं तदीयद्वितीयाधिकरणस्य चतुर्षु सूत्रेषु द्वितीयं सूत्रम्। श-भा-रा-म-श्री-भाष्येषु सूत्रत्रय गृहीतम्। निम्बार्कभाष्ये तु सूत्रपञ्चकं, वल्लभभाष्ये च सूत्राष्टकम् इति विशेषः। श-भा-रा-नि-श्री-भाष्येषु एतद्धि तृतीयम् अधिकरणम्, माध्वभाष्ये तु पञ्चमम् अधिकरणम्, वल्लभभाष्ये च द्वितीयम् अधिकरणम्। तच्च सूत्रत्रयम्

१। "ब्राह्मेण जैमिनिरुपन्यासादिभ्य" ४।४।५ ( ५३८ )

२। "चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः" ४।४।६ ( ५३९ )

३। "एवमप्युपन्यासात् पूर्वभावादविरोध बादरायणः" ४।४।७ ( ५४० )

अत्र (१) "ब्राह्मेण जैमिनिरुपन्यासादिभ्यः" ४।४।५ (५३८) इत्यत्र "जैमिनि" इति मतान्तरज्ञापकप्रथमान्त-नाम-पदसत्त्वात् अत्र अधिकरणारम्भ युक्तः। २०श विशेषनियमात, तथापि अस्य विधेयभेदात् "मुक्त" इति प्रथमान्त किञ्चित् पदम् अध्याहृत्य तत् करणीयम्। अन्वयार्थ वृत्ति द्रष्टव्या, ५म सामान्यनियमात, ४र्थ विशेषनियमात्। श्रीपतिभाष्ये अधिकरणस्य अनारम्भात् दोष.।

( २ ) "चिति तन्मात्रेण तदात्मकत्वाद् औडुलोमि" ४।४।६ (५३९) इत्यत्र "औडुलोमि" इति प्रथमान्तपदसत्त्वेऽपि ४र्थ सामान्यनियमात्, प्रथमान्तनाम-पदेन प्रतिकूल-मतान्तरस्य निर्देशात् नास्य अधिकरणारम्भकत्वं युक्तम्। १०म विशेषनियमात्।

(३) "एवमप्युपन्यासात् पूर्वभावादविरोध बादरायण" ४।४।७ (५४०) इत्यत्र "बादरायण" इति प्रथमान्तपदेन पूर्वपक्षवर्णनानन्तर स्वमतप्रदर्शनात "एवमपि इति" पदाभ्यां च मतान्तरेसिद्धे नास्य अधिकरणारम्भकत्वम्। ४र्थ सामान्यनियमात्, ६ष्ठ, १०म विशेष-नियमाभ्याम्। परसूत्रे अधिकसम्मत्या अधिकरणस्य आरम्भात् अत्रैव अधिकरणसमाप्तिश्च।

## चतुर्थं सङ्कल्पाधिकरणम् ।

अत्र "सङ्कल्पादेव तु तच्छ्रुते" ४।४।८ (५४१) इति सूत्रस्य "सङ्कल्पात्" इति पदात् अस्य "संकल्पाधिकरण" नाम । निम्बार्क-वल्लभ भिन्नेषु सर्वेषु भाष्येषु अत्र अधिकरण रचितम् । तत्र श-भा-रा श्री-भाष्येषु तदीयचतुर्थाधिकरणे सूत्रद्वयं गृहीतम् । माध्वभाष्ये तदीयषष्ठाधिकरणस्य एतदेव एक सूत्रम्, श्रीपतिभाष्ये तदीयपञ्चमाधिकरणे पञ्च सूत्राणि । निम्बार्कभाष्ये सूत्रपञ्चकात्मकतदीयतृतीयाधिकरणस्य चतुर्थं सूत्रम् । वल्लभभाष्ये सूत्राष्टकात्मकतदीयद्वितीयाधिकरणस्य चतुर्थं सूत्रम् । तच्च सूत्रद्वयम्—

१। "संकल्पादेव तु तच्छ्रुते" ४।४।८ (५४१)

२। "अतएव चानन्याधिपति" ४।४।९ (५४२)

अत्र (१) "सङ्कल्पादेव तु तच्छ्रुते" ४।४।८ (५४१) इत्यत्र प्रथमान्तपदाभावेऽपि "आविर्भाव" इति एकं प्रथमान्तपदम् अध्याहृत्य अधिकरणं रचनीयम्, अन्वयानुरोधात् । ५म सामान्यनियमात् । तु शब्द अनुक्तपूर्वपक्षस्य व्यावर्त्तक, अत अधिकरणारम्भ युक्त । १८श विशेषनियमात् । निम्बार्कवल्लभभाष्ययो अधिकरणस्य अनारम्भात् दोष ।

(२) "अतएव चानन्याधिपति" ४।४।९ (५४२) इत्यत्र "अनन्याधिपति" इति प्रथमान्तपदसत्त्वेऽपि चकारात् नास्य अधिकरणारम्भकत्वम् । ४र्थ सामान्यनियमात् । ६ष्ठ विशेषनियमाच्च । माध्वभाष्ये अत्र सप्तमाधिकरणस्य आरम्भात् दोष । परसूत्रे अनिच्छसम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्तिश्च ।

## पञ्चमम् अभावाधिकरणम् ।

अत्र "अभावं बादरिराह ह्येवम्" ४।४।१० (५४३) इति सूत्रस्य "अभाव"-पदात् अस्य "अभावाधिकरणं" नाम । अत्र श्रीपतिवल्लभभाष्यद्वयभिन्नेषु सर्वेषु भाष्येषु अधिकरणम् आरब्धम् । श्रीपतिभाष्ये एतत् सूत्रं सूत्रपञ्चात्मकतदीयतृतीयाधिकरणस्य तृतीयं सूत्रम्, वल्लभभाष्ये तु सूत्राष्टकात्मकतदीयद्वितीयाधिकरणस्य षष्ठं सूत्रम् । श-भा-श्री-भाष्येषु सूत्रपञ्चकात्मकतदीयपञ्चमाधिकरणस्य प्रथमं सूत्रम् । रामानुजभाष्ये सूत्रसप्तकात्मकतदीयपञ्चमाधिकरणस्य प्रथमं सूत्रम्, निम्बार्कभाष्ये सूत्रसप्तकात्मकतदीयचतुर्थाधिकरणस्य प्रथमं सूत्रम्, माध्वभाष्ये सूत्रसप्तकात्मकतदीयाष्टमाधिकरणस्य प्रथम सूत्रम् । तच्च सूत्रपञ्चकम्—

१। "अभावं बादरिराह ह्येवम्" ४।४।१० (५४३)

२। "भावं जैमिनिर्विकल्पामननात्" ४।४।११ (५४४)

३। "द्वादशाहवदुभयविधं बादरायणोऽतः" ४।४।१२ (५४५)

४। "तन्वभावे सन्ध्यवदुपपत्ते" ४।४।१३ (५४६)

५। "भावे जाग्रद्वत् ४।४।१४ (५४७)

अत्र ( १ ) "अभावं वादरिराह ह्येवम्" ४।४।१० (५४३) इत्यत्र "वादरिः" इति प्रथमान्त-नाम-पदेन पूर्वपक्षावतारणेन विषयान्तरनिर्देशात् अधिकरणारम्भस्य युक्तत्वं, तथैव "एवम्" इति अपरप्रथमान्तपदेन तस्य युक्ततरत्वं कल्पयितुं शक्यते। ४र्थ सामान्यनियमात् ४र्थ विशेषनियमात् २०श विशेषनियमाच्च। श्रीप-व-भाष्ययोः अधिकरणस्य अनारम्भात् दोष.।

( २ ) "भावं जैमिनिर्विकल्पामननात्" ४।४।११ (५४४) इत्यत्र "जैमिनिः" इति प्रथमान्तनामपदेन विषयान्तरनिर्देशं विनापि पूर्वपक्षकरणात् नास्य अधिकरणाम्भकत्वम्। ४र्थ सामान्यनियमात्, २०श विशेषनियमाच्च।

( ३ ) "द्वादशाहवदुभयविधं वादरायणोऽतः" ४।४।१२ (५४५) इत्यत्र "वादरायणः" इति प्रथमान्तपदसत्त्वेऽपि "अतः" इति पदेन साकाङ्क्षत्वसिद्धेः नास्य अधिकरणारम्भकत्वम्, विषयान्तरस्य अज्ञापनाच्च १०म विशेषनियमात्, ४र्थ सामान्यनियमात्, ७म विशेषनियमाच्च।

( ४ ) "तन्वभावे सन्ध्यवदुपपत्तेः" ४।४।१३ (५४६) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम्। ४र्थ सामान्यनियमात्, "सन्ध्यवत्" इत्यस्य प्रथमान्तत्वकल्पनेऽपि साकाङ्क्षत्वम् अनिवार्य्यम्, अतो न अधिकरणारम्भकत्व युक्तम्, ७म विशेषनियमात्। श्रीप-व-भाष्ययो. अधिकरणस्य आरम्भात् दोषः।

( ५ ) "भावे जाग्रद्वत्" ४।४।१४ (५४७) इत्यत्रापि तथैव ४र्थ सामान्यनियमात्, ७म विशेषनियमाच्च। अत· नास्य अधिकरणारम्भकत्वम्। परसूत्रे अधिकरणारम्भदर्शनात् अत्रैव अधिकरणसमाप्तिः।

## षष्ठं प्रदीपाधिकरणम्।

अत्र "प्रदीपवदावेशस्तथा हि दर्शयति" ४।४।१५ (५४८) इति सूत्रस्य "प्रदीप"-शब्दात् अस्य "प्रदीपाधिकरण" नाम। अत्र श-भा-श्री-भाष्येषु सूत्रद्वयेन एतत् षष्ठम् अधिकरणम् आरब्धम्। वल्लभभाष्ये तु एतत्सूत्रद्वयेन चतुर्थम् अधिकरणम् आरब्धम्। रा-भाष्ये सूत्रसप्तकात्मकतदीयपञ्चमाधिकरणस्य षष्ठ सूत्रम्, निम्बार्कभाष्ये सूत्रसप्तकात्मकतदीयचतुर्थाधिकरणस्य षष्ठ सूत्रम्। माध्वभाष्ये तथैव अष्टमाधिकरणस्य। श्रीप-भाष्ये सूत्रचतुष्टयात्मकतदीयचतुर्थाधिकरणस्य तृतीय सूत्रम्। तेन रा-नि-म-श्रीप-भाष्येषु अधिकरणं न आरब्धम्। तच्च सूत्रद्वयम्

१। "प्रदीपवदावेशस्तथा हि दर्शयति" ४।४।१५ ( ५४८ )

२। "स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि" ४।४।१६ ( ५४९ )

अत्र ( १ ) "प्रदीपवदावेशस्तथा हि दर्शयति" ४।४।१५ (५४८) इत्यत्र "आवेश."

इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं युक्तम्। "तथा हि" इति पदेन हेतुप्रदर्शनात्। ४र्थ सामान्यनियमात्, १२श विशेषनियमाच्च। रा नि म-श्रीप-माध्वेषु अधिकरणस्य अनारम्भात् दोष।

( २ ) "स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि" ४।४।१६ (५४९) इत्यत्र "अन्यतरापेक्षम्" इति प्रथमान्तपदात् अस्यापि अधिकरणारम्भकत्व युक्तं, तथापि "हि"-शब्देन साकांक्षत्वविधानात् न युक्तम्। ४र्थ सामान्यनियमात्, ६ष्ठ विशेषनियमाच्च। परसूत्रे सर्व सम्मत्या अधिकरणारम्भात् अत्रैव अधिकरणसमाप्ति संगच्छते।

## सप्तम जगद्व्यापाराधिकरणम्।

अत्र "जगद्व्यापारवर्ज्जं प्रकरणादसन्निहितत्वाच्च" ४।४।१७ (५५०) इति सूत्रस्य "जगद्व्यापार" इति शब्दात् अस्य "जगद्व्यापाराधिकरण" नाम। अत्र सर्वे अधिकरणम् आरब्धम्। श-भा-श्री-भाष्येषु सप्तमम् अधिकरण, रा-भाष्ये षष्ठाधिकरणं, नि-श्रीप-व-भाष्येषु पञ्चमाधिकरणं, माध्वभाष्ये नवमाधिकरणम्। श-भ-रा-व-भाष्येषु षट् सूत्राणि गृहीतानि, नि-श्री-श्रीप-भाष्येषु पञ्च सूत्राणि, माध्वभाष्ये चत्वारि सूत्राणि गृहीतानि। तत्रापि एतत् सूत्रं द्विधाकृतमपि दृश्यते। तानि च षट् सूत्राणि—

१। 'जगद्व्यापारवर्ज्जं प्रकरणाद् असन्निहितत्वाच्च" ४।४।१७ ( ५५० )

२। "प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्योक्ते" ४।४।१८ ( ५५१ )

३। 'विकारावर्त्ति च तथा हि स्थितिमाह" ४।४।१९ ( ५५२ )

४। "दर्शयतश्चैवं प्रत्यक्षानुमाने" ४।४।२० ( ५५३ )

५। "भोगमात्रसाम्यलिङ्गाच्च" ४।४।२१ ( ५५४ )

६। "अनावृत्ति शब्दात् अनावृत्ति शब्दात्" ४।४।२२ ( ५५५ )

अत्र ( १ ) 'जगद्व्यापारवर्ज्जं प्रकरणाद् असन्निहितत्वाच्च" ४।४।१७ (५५०) इत्यत्र "जगद्व्यापारवर्ज्जम्" इति प्रथमान्तपदात् अस्य अधिकरणारम्भकत्वं संगतमेव। ४र्थ सामान्यनियमात्, १२श विशेषनियमाच्च। माध्वभाष्ये इत्यनेनैव एकं सूत्रम् उत्तरार्द्धेन अपर सूत्रं पठ्यते। परन्तु तेन अधिकरणरचनाविषये न कोऽपि लाभालाभ दृश्यते। च-कारात् पृथग्हेतुत्वस्य सूचनात् पृथक्सूत्रत्व युक्तम्, तथापि विजातीयवैलक्षण्याभावात् तन्न युक्तम्। ४र्थ सामान्यनियमात्।

( २ ) "प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्योक्ते" ४।४।१८ (५५१) इत्यत्र प्रथमान्तपदाभावात् तथा "इति चेन्न" इति पदद्वयसत्त्वात् नास्य अधिकरणारम्भकत्वम्। ४र्थ सामान्यनियमात्, ५म विशेषनियमाच्च।

( ३ ) "विकारावर्त्ति च तथा हि स्थितिमाह" ४।४।१९ (५५२) इत्यत्र 'विकारावर्त्ति"

इति प्रथमान्तपदसत्त्वेऽपि च-कारात् नास्य अधिकरणारम्भकत्वम् । ४र्थ सामान्यनियमात्, ६ष्ठ विशेषनियमाच्च ।

( ४ ) "दर्शयतश्चैवं प्रत्यक्षानुमाने" ४।४।२० (५५३) इत्यत्र "प्रत्यक्षानुमाने" इति प्रथमान्तपदसत्त्वेऽपि च-कारात् नास्य अधिकरणारम्भकत्वम् । ४र्थ सामान्यनियमात्, ६ष्ठ विशेषनियमाच्च । माध्वभाष्ये सूत्रद्वयात्मकदशमाधिकरणारम्भे तस्य दोषः ।

( ५ ) "भोगमात्रसाम्यलिंगाच्च" ४।४।२१ (५५४) इत्यत्र प्रथमान्तपदाभावात् नास्य अधिकरणारम्भकत्वम् । ४र्थ सामान्यनियमात्, ६ष्ठ विशेषनियमाच्च ।

( ६ ) "अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्" ४।४।२२ (५५५) इत्यत्र "अनावृत्तिः" इति प्रथमान्तपदसत्त्वात् अस्य अधिकरणारम्भकत्व युक्तमपि, "अनावृत्तिः"-शब्देन साकाक्षत्व-विधानात् नास्य अधिकरणारम्भकत्वम् । ४र्थ सामान्यनियमात् । म-नि-श्री-श्रीप-भाष्येषु यथा-क्रमं षष्ठैकादशाष्टमषष्ठाधिकरणानि रचितानि, तेन तेषामेव दोषः । मुक्तपुरुषरूपोद्देश्यस्य ऐक्यात् अनावृत्तिरूपविधेयस्य प्रकृतात् वैजात्याभावात् नास्य पृथगधिकरणारम्भकत्वं युक्तम्, तथैव ग्रन्थसमाप्तेश्च अधिकरणसमाप्तिश्च सुसङ्गता इति ।

## चतुर्थाध्यायचतुर्थपाद-समालोचनम् ।

इदानीं द्रष्टव्यम् अनेन निबन्धेन अस्मिन् पादे अधिकरणरचनाया

१। कति कीदृशाः नियमाः अत्र सङ्कलिताः ।

२। कति च दोषाः कस्य भाष्यस्य कथ संवृत्ताः ।

३। काश्च श्रुतयः कैश्च सूत्रैः उपजीव्यत्वेन गृहीता ।

४। उपजीव्यश्रुतिबलेन कीदृशी च पादसंगतिः संगता इति ।

एते च चत्वारः विषयाः अधस्तात् क्रमेण प्रदर्श्यन्ते, तत्र प्रथमस्तावत्—

### ( १ ) कति च कीदृशाः नियमाः अत्र संकलिताः ।

अत्रापि न कोऽपि नूतनो नियमः संकलितः । अत. द्रष्टव्यम्

### ( २ ) कति च दोषाः कस्य भाष्यस्य कथं संवृताः ।

तत्र ४।४।१ अधिकरणे माध्वभाष्ये "मुक्तः प्रतिज्ञानात्" ४।४।२ सूत्रे अधिकरणस्य आरम्भात् दोषः ।

तत्रैव माध्वभाष्ये "आत्मा प्रकरणात्" ४।४।३ सूत्रे अधिकरणस्य आरम्भात् दोषः ।

४।४।२ अधिकरणे वल्लभभाष्ये "अविभागेन दृष्टत्वात्" ४।४।४ सूत्रे अधिकरणस्य अनारम्भात् दोषः ।

४।४।३ अधिकरणे श्रीपतिभाष्ये "ब्राह्मेण जैमिनिरुपन्यासादिभ्यः" ४।४।५ सूत्रे अधिकरणस्य अनारम्भात् दोष. ।

४।४ अधिकरणे निम्बार्कवल्लभभाष्ययो "संकल्पादेव तु तच्छ्रुते" ४।४।८ सूत्रे अधिकरणस्य अनारम्भात् दोष ।

तत्रैव भास्करभाष्ये "अत एव चानन्याधिपति" ४।४।९ सूत्रे अधिकरणस्य आरम्भात् दोष ।

४।५ अधिकरणे श्रीपतिवल्लभभाष्ययो "तन्वभावे सन्ध्यवदुपपत्ते" ४।४।१३ सूत्रे अधिकरणस्य आरम्भात् दोष ।

४।६ अधिकरणे रामानुज-निम्ब-श्रीप-भाष्येषु "प्रदीपवदावेशस्तथा हि दर्शयति" ४।४।१५ सूत्रे अधिकरणस्य अनारम्भात् दोष —

४।७ अधिकरणे भास्करभाष्ये "दर्शयतश्चैवं प्रत्यक्षानुमाने" ४।४।२० सूत्रे अधिकरणस्य आरम्भात् दोष ।

तत्रैव निम्ब श्री-श्रीप भाष्येषु "अनावृत्ति शब्दात अनावृत्ति शब्दात्" ४।४।२२ सूत्रे अधिकरणस्य रचनायां दोष ।

एव च अस्मिन् पादे भाष्याणां दोषसमाहारे कृते दृश्यते—

| भाष्यनाम | अधिकरणस्य अरचनायां | अधिकरणस्य रचनायां |
|---|---|---|
| भास्करभाष्ये | १ दोष | ५ दोषा |
| वल्लभभाष्ये | २ दोषौ | १ दोष |
| श्रीपतिभाष्ये | २ „ | २ दोषौ |
| निम्बार्कभाष्ये | २ „ | १ दोष |
| रामानुजभाष्ये | १ दोष | ० |
| श्रीकण्ठभाष्ये | ० | १ दोष |

इति वक्तु शक्यते । तथा च अस्मिन् पादे शङ्करभास्करभाष्ययोरेव दोषाभाव ।

इदानीं द्रष्टव्यम्—

**( २ ) कास्ता श्रुतय कैश्च सूत्रैः उपजीव्यत्वेन गृहीताम् ।**

तत्र प्रथमाधिकरणे—

'सम्पद्याविर्भाव स्वेन शब्दात्" ४।४।१ इति सूत्रे

"एष सम्प्रसाद अस्मात् शरीरात् समुत्थाय पर ज्योति उपसम्पद्य स्वेन रूपेण अभिनिष्पद्यते " ( छा० ८।१२।३ )

"मुक्त प्रतिज्ञानात्" ४।४।२ इति सूत्रे

"एतं त्वेव ते भूय अनुव्याख्यास्यामि" ( छा० ८।९।३ )

'आत्मा प्रकरणात्" ४।४।३ इति सूत्रे

"य आत्मा अपहतपाप्मा" ( छा० ८।७।१ )

द्वितीयाधिकरणे

"अविभागेन दृष्टत्वात्" ४।४।४ इति सूत्रे

"ज्योतिः उपसम्पद्य" ( छा० ८।३।४ )

"ब्रह्मैव सन् ब्रह्माप्येति" (बृ० ४।४।६) 'तत्त्वमसि" (छा० ६।८।७ )

तृतीयाधिकरणे

"ब्राह्मेण जैमिनीरुपन्यासादिभ्यः" ४।४।५ इति सूत्रे

"य आत्मा अपहतपाप्मा" "सोऽन्वेष्टव्यः" ( छा० ८।७।१ )

"तस्य सर्वेषु लोकेषु कामचारो भवति" ( छा० ७।२५।२ )

"य. सर्वज्ञ. सर्ववित्" ( मु० १।९, २।२।७ )

चतुर्थाधिकरणे

सङ्कल्पादेव तु तच्छ्रुतेः" ४।४।८ इति सूत्रे

"स यदि पितृलोककामो भवति सङ्कल्पादेव अस्य पितरः समुत्तिष्ठन्ति"

( छा० ८।२।१ )

पञ्चमाधिकरणे——

"अभावं वादरिराह ह्येवम्" ४।४।१० इति सूत्रे

"सङ्कल्पादेव" (छा० ८।२।१) "य एते ब्रह्मलोके" (छा० ७।१३।१)

"मनसा एतान् कामान् पश्यन् रमते" ( छा० ८।१२।५ )

"भावं जैमिनिर्विकल्पामननात्" ४।४।११ इति सूत्रे

"स एकधा भवति त्रिधा भवति" ( छा० ७।२६।२ )

"द्वादशावदुभयविध वादरायणोऽत." ४।४।१२ इति सूत्रे

"द्वादशाहम् ऋद्धिकामा उपेयु' (?) "द्वादशाहेन प्रजाकाम याजयेत्" (?)

"तन्वभावे सन्ध्यवदुपपत्तो" ४।४।१३ इति सूत्रे

'मनसा एतान् कामान् पश्यन् रमते ( छा० ८।१२।५ )

षष्ठाधिकरणे

"प्रदीपवदावेशस्तथा हि दर्शयति" ४।४।१५ इति सूत्रे

"स एकधा भवति" ( छा० ७।२६।२ )

"तत् केन कं पश्येत् ( बृ० ४।५।१५ )

"ततोऽन्यद् विभक्तं यत् पश्येत् ( बृ० ४।३।३० )

"स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ४।४।१६ इति सूत्रे

"ततोऽन्यद्" ( बृ० ४।३।३० ) "तत् केन" ( ४।५।१५ )

सप्तमाधिकरणे—

"जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" ४।४।१७ इति सूत्रे-

"आप्नोति स्वाराज्यम्" ( तै० १।६।२ )

"प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः" ४।४।१८ इति सूत्रे

"आप्नोति स्वाराज्यम्" ( तै० १।६।२ )

"आप्नोति मनसस्पतिम्" ( तै० १।६।२ )

"विकारावर्ति च तथा हि स्थितिमाह" ४।४।१९ इति सूत्रे

"तावानस्य महिमा ततो ज्यायांश्च पूरुषः" ( छा० ३।१२।६ )

"दर्शयतश्चैवं प्रत्यक्षानुमाने" ४।४।२० इति सूत्रे

"न तत्र सूर्य्यो भाति" ( क० ५।१५ )

"न तद् भासयते सूर्य्यः" ( भ० गी० १५।६ )

"भोगमात्रसाम्यलिङ्गाच्च" ४।४।२१ इति सूत्रे

"आपो वै खलु मीयन्ते लोकोऽसौ" ( ? )

"स यथा एतां देवतां सलोकतां जयति" ( बृ० १।५।२१ )

"अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्" ४।४।२२ इति सूत्रे

"न च पुनरावर्त्तते" ( छा० ८।१५।१ )

"तेषां न पुनरावृत्तिः" ( बृ० ६।२।१५ )

इदानीं द्रष्टव्यम् एतादृशसूत्रोपजीव्यश्रुतिबलेन—

**( ४ ) कीदृशी अस्य पादसंगतिर्मेविद्भिश्चिन्ता ।**

उदाहृतश्रुतिसन्दर्भेण तथा सूत्राणाम् अक्षरार्थतः एतत्पादप्रतिपाद्यत्वेन यत् प्रतिभाति, तत् सगुणब्रह्मोपासनचरमफलं तथा निर्गुणब्रह्मज्ञानफलमेव । तत्र प्रथमाद्यधिकरणत्रयेण निर्गुणब्रह्मविदां ज्ञानफलं वर्णितं, शिष्टेषु अधिकरणेषु सगुणब्रह्मविदाम् उपासनफलम् इत्येव विरोधः । अत्र ये खलु निर्गुणब्रह्मणः शास्त्रतात्पर्य्यविषयत्वं न अंगीकुर्वन्ति, तेषां मतेन आपादम् अत्र सगुणोपासकानां चरमावस्थावर्णनमिति बोद्धव्यम् । अतः उभयमतसाधारण्येन अत्र साधकानां साधनचरमफलमेव वर्णितम् इति स्थितम् । तथा हि यथा पृथग् भाष्येषु निर्दिष्टं तत् इत्थम्—

शाङ्करभाष्ये—पूर्वभागेन निर्गुणब्रह्मविदः विदेहकैवल्यप्राप्तिः उत्तरभागेन च सगुणब्रह्मविदो ब्रह्मलोकस्थितिः इति निरूपणम् ।

भास्करभाष्ये—प्रायेण तथैव, भेदस्तु निर्गुणब्रह्मसद्भावे ।

रामानुजभाष्ये—ब्रह्मप्राप्तिरूपम् अपुनरावृत्तिलक्षणम् ।

निम्बार्कभाष्ये अर्चिरादिमार्गेण परब्रह्मप्राप्तानाम् आविर्भाववर्णनम् ।
माध्वभाष्ये परब्रह्मप्राप्तानां भोगनिरूपणम् ।
श्रीकण्ठभाष्ये— मुक्तिस्वरूपनिरूपणम् ।
श्रीकरभाष्ये——मुमुक्षूणा मुक्तिस्वरूपप्रकारं विचिन्त्य स्वाभाविकजीवभावनिवृत्तिपूर्वकशिवप्राप्तिरूप परमपुरुषार्थफलनिरूपणम् ।

अत्रापि यो भेद: दृश्यते स च प्रायेण नाममात्रेणैव, तन्मूलं च अद्वैतविशिष्टाद्वैतादि मतवादभेदः । इदानीं एतच्चतुर्थाध्यायस्य उपसहार. चिन्तनीय :

एवं च एतदध्यायस्य चतुर्षु पादेषु यद् आलोचितं तत् सर्वम् इदानीं संग्रहेण चिन्तनीयम् । विज्ञाते च जिज्ञासितविषये यथा तल्लाभाय इच्छा स्वाभाविकी, साधने च समवधारिते तत्फलजिज्ञासापि तथैव स्वाभाविकी । अतः जीवजगद्ब्रह्मज्ञानतत्साधननिरूपणानन्तरं तत्साधनफलम् अत्र चतुर्थे अध्याये अभिहितम् । अनुसृतः अतः नैसर्गिकः पन्थाः सूत्रकृद्भिः भगवद्भि ।

तत्र अस्य प्रथमे पादे श्रवणाद्यावृत्त्या निर्गुणम्, उपासनया सगुणं वा ब्रह्म साक्षात्कृतवतः जीवतः पुण्यपापलेपविनाशलक्षणाया मुक्तेः अभिधानम्, द्वितीये च पादे म्रियमाणस्य उत्क्रान्तिप्रकारप्रदर्शनम्, तृतीये च पादे सगुणब्रह्मविदः मृतस्य उत्तरमार्गाभिगमनवर्णनम्, तथा अन्तिमे पादे पूर्वभागे निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिकथनम्, उत्तरभागे च सगुणब्रह्मविदो ब्रह्मलोकस्थिते निरूपणम् । तथापि यथा तृतीयाध्यायारम्भे साधनफलभूतपरलोकगमनप्रकारवर्णन दृश्यते, एतच्चतुर्थाध्यायस्य प्रारम्भेऽपि तथा श्रवणाद्यावृत्तिलक्षणं साधनमपि वर्णितं दृश्यते । एतद्धि आपातदृष्ट्या अध्यायसंगतिलङ्घनेन मन्तव्यम् । तथापि यथा तृतीयाध्यायस्य परलोकगमनागमनादिप्रकारवर्णनं नित्यानित्यवस्तुविवेकवैराग्यरूपब्रह्मज्ञानसाधनचतुष्टयान्तर्गत-प्रथमसाधनद्वयसूचकत्वेन गृह्यते, तथा अत्रापि चतुर्थाध्याये यत् श्रवणाद्यावृत्तिकर्तव्यतादिरूपसाधनवर्णनं, तदपि चतुर्थाध्यायप्रतिपाद्यफलनिरूपणस्य अङ्गत्वेन विवेचनीयम् । तेन च विवेचनप्रकारेण इत्थमेव भवितव्यम्, श्रवणमनननिदिध्यासनरूपं यत् साधनं तत् कर्मोपासनादिरूपबहिरङ्गसाधनाना, तथा नित्यानित्यवस्तुविवेकशमदमादिषट्सम्पत्तिमुमुक्षुत्वरूपसाधनचतुष्टयस्य फलरूपमेव भवति । एवं च श्रवणाद्यावृत्तेः अपि फलरूपत्वं सिध्यति । अत. नात्र अध्यायसंगतिलङ्घनं शंकनीयम् ।

ततश्च अत्र सगुणनिर्गुणभेदेन यत् निरूपणं पादविभागत कृतं, तत् शंकरभाष्यानुसारेणेति बोद्धव्यम्, भगवद्भास्कररामानुजादीना मतेन ब्रह्मणः यः निर्गुणत्वोपदेशः श्रुतिषु दृश्यते सोऽपि सगुणपरत्वेन व्याख्यायते । एतदर्थम् अत्रापि "अविभागो वचनात्" ४।२।१६ तथा "अविभागेन दृष्टत्वात्" ४।४।४ इति सूत्रद्वयमेव पुष्कल निदर्शनम् । अत्र या व्याख्या भगवद्-

भास्कररामानुजादीनां सम्मता, सा तु तेषां स्वकीयसिद्धान्तानुसारिणी, न तु सूत्राक्षरानुयायिनी, इति अतिस्पष्टतया प्रतिभाति। एतदर्थं तत्तत् भाष्यादिकं द्रष्टव्यम्। स्यादेतत्। अधुना एतदध्यायस्य समालोचनफलमत्र समाहर्त्तव्यम्। तद् यथा—

| भाष्यकाराः | प्रथमपादे | | द्वितीयपादे | | तृतीयपादे | | चतुर्थपादे | | समष्टिः |
|---|---|---|---|---|---|---|---|---|---|
| | अधि॰ रचनायां दोषः | अधि॰ अरचनायां दोषः | अधि॰ रचनायां दोषः | अधि॰ अरचनायां दोषः | अधि॰ रचनायां दोषः | अधि॰ अरचनायां दोषः | अधि॰ रचनायां दोषः | अधि॰ अरचनायां दोषः | |
| शं० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| भा० | ० | ० | ० | ० | ० | १ | ० | ० | १ |
| रा० | ० | ३ | २ | २ | ० | १ | ० | १ | ९ |
| नि० | १ | ५ | १ | ७ | ० | १ | १ | २ | १८ |
| म० | ० | ६ | ३ | ४ | १ | १ | ५ | १ | २१ |
| श्रीक० | १ | ० | ० | २ | ० | १ | १ | ० | ५ |
| श्रीकर | ० | ४ | २ | २ | ० | १ | २ | २ | १३ |
| व० | १ | ८ | २ | ६ | ० | २ | १ | २ | २२ |
| | ३ | २६ | १० | २३ | १ | ८ | १० | ८ | ८९ |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| एवं च भास्कर-भाष्ये | १ | दोषः, | तत्र | रचनायां | ० | अरचनायां | १ |
| रामानुज- " | ९ | दोषाः | " | " | २ | " | ७ |
| निम्बार्क- " | १८ | " | " | " | ३ | " | १५ |
| मध्व- " | २१ | " | " | " | ९ | " | १२ |
| श्रीकण्ठ- " | ५ | " | " | " | २ | " | ३ |
| श्रीकर " | १३ | " | " | " | ४ | " | ९ |
| वल्लभ- " | २२ | " | " | " | ४ | " | १८ |
| | ८९ | | | | २४ | | ६५ |

अत्रापि केवलं शंकरभाष्ये दोषाभावः परिलक्ष्यते।

ततश्च अस्मिन् अध्याये न एकोऽपि नियमः सङ्कलितः। सर्वेषां नियमानां संग्रहः ग्रन्थोपसंहारप्रस्तावे प्रदर्शनीयः।

इदानीं द्रष्टव्य समग्राध्यायस्य कतमे सूत्रे कस्य कीदृशः दोषः—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| न प्रतीके न हि सः | ४।१।४ | सूत्रे | वल्लभभाष्ये | अधिकरणस्य | अरचनायां | दोषः | १ |
| ब्रह्मदृष्टिरुत्कर्षात | ४।१।५ | ,, | रा-नि-श्रीप-व-भाष्येषु | ,, | ,, | ,, | ४ |
| आसीनः सम्भवात् | ४।१।७ | ,, | वल्लभभाष्ये | ,, | ,, | ,, | १ |
| यत्रैकाग्रता तत्राविशेषात् | ४।१।११ | ,, | रा-नि-म-श्रीप-भाष्येषु | ,, | ,, | ,, | ४ |
| आप्रायणात् तत्रापि हि दृष्टम् | ४।१।१२ | ,, | नि-श्रीप-भाष्ययोः | ,, | ,, | ,, | २ |
| इतरस्याप्येवमसंश्लेषः पाते तु | ४।१।१४ | ,, | मा-नि-व-भाष्येषु | ,, | ,, | ,, | ३ |
| अनारब्धकार्य्ये एव तु पूर्वे तदवधेः | ४।१।१५ | ,, | नि-म-व ,, | ,, | ,, | ,, | ३ |
| अग्निहोत्रादि तु तत्कार्य्यायैव तद्दर्शनात् | ४।१।१६ | ,, | म-व-भाष्ययोः | ,, | ,, | ,, | २ |
| अतोऽन्यापि ह्येकेषामुभयोः | ४।१।१७ | ,, | नि-व ,, | ,, | रच० | ,, | २ |
| यदेव विद्ययेति हि | ४।१।१८ | ,, | रा-म-श्री-श्रीप-व-भाष्येषु | ,, | अर० | ,, | ५ |
| भोगेन त्वितरे क्षपयित्वा सम्पद्यते | ४।१।१९ | ,, | म-व-भाष्ययोः | ,, | ,, | ,, | २ |
| तन्मनः प्राण उत्तरात् | ४।२।३ | ,, | नि-व ,, | ,, | ,, | ,, | २ |
| सोऽध्यक्षे तदुपगमादिभ्यः | ४।२।४ | ,, | नि-व ,, | ,, | ,, | ,, | २ |
| भूतेषु तच्छ्रुतेः | ४।२।५ | ,, | रा-म-श्रीप-व-भाष्येषु | ,, | रच० | ,, | ४ |
| नैकस्मिन् दर्शयतो हि | ४।२।६ | ,, | मध्वभाष्ये | ,, | ,, | ,, | १ |
| तदपीतेः संसारव्यपदेशात् | ४।२।८ | ,, | रा-नि-म-श्रीप-व ,, | ,, | अर० | ,, | ५ |
| प्रतिषेधादिति चेन्न शारीरात् | ४।२।१२ | ,, | रा-नि-म-श्री-श्रीप-व ,, | ,, | ,, | ,, | ६ |
| तानि परे तथा ह्याह | ४।२।१५ | ,, | व-भाष्ये | ,, | ,, | ,, | १ |
| अविभागो वचनात् | ४।२।१६ | ,, | नि-श्री-भाष्ययोः | ,, | ,, | ,, | २ |
| रश्म्यनुसारी | ४।२।१८ | ,, | म-नि ,, | ,, | ,, | ,, | २ |
| निशि नेति चेन्न सम्बन्धस्य यावद् देह-भावित्वात् दर्शयति च | ४।२।१९ | ,, | रा-नि-श्रीप-व-भाष्येषु | ,, | रच० | ,, | ४ |
| अतश्चायनेऽपि दक्षिणे | ४।२।२० | ,, | नि-म-व ,, | ,, | अर० | ,, | ३ |
| योगिन प्रति च स्मर्य्यते स्मार्त्ते चैते | ४।२।२१ | ,, | म-भाष्ये | ,, | रच० | ,, | १ |
| वायुमब्दादविशेषविशेषाभ्याम् | ४।३।२ | ,, | व ,, ... | ,, | अर० | दोषः | १ |
| तडितोऽधि वरुणसम्बन्धात् | ४।३।३ | ,, | म ,, . | ,, | ,, | ,, | १ |
| वैद्युतेनैव ततस्तच्छ्रुते | ४।३।६ | ,, | म ,, . | ,, | रच० | ,, | १ |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात् तत्क्रतुश्च | ४।३।१५ | सूत्रे | भा-रा नि-म-श्री-श्रीप-भाष्येषु | | अधि० | अर० | दोष | ६ |
| मुक्तः प्रतिज्ञानात् | ४।४।२ | ,, | म | भाष्ये | ,, | रच० | ,, | १ |
| आत्मा प्रकरणात् | ४।४।३ | ,, | म | ,, | ,, | ,, | ,, | १ |
| अविभागेन दृष्टत्वात् | ४।४।४ | ,, | य | ,, | ,, | अर० | ,, | १ |
| ब्राह्मेण जैमिनिरुपन्यासादिभ्यः | ४।४।५ | ,, | श्रीप | ,, | ,, | ,, | ,, | १ |
| सङ्कल्पादेव तु तच्छ्रुतेः | ४।४।८ | ,, | नि-म | भाष्ययोः | ,, | ,, | ,, | २ |
| अत एव चानन्याधिपतिः | ४।४।९ | ,, | म | भाष्ये | ,, | रच० | ,, | १ |
| तन्वभावे सन्ध्यवदुपपत्तेः | ४,४।१३ | ,, | श्रीप-व | भाष्ययोः | ,, | ,, | ,, | २ |
| प्रदीपवदावेशस्तथा हि दर्शयति | ४,४।१५ | ,, | रा नि-म-श्रीप-भाष्येषु | | ,, | अर० | ,, | ४ |
| दर्शयतश्चैवं प्रत्यक्षानुमाने | ४,४।२० | ,, | म | भाष्ये | ,, | रच० | ,, | १ |
| अनावृत्तिः शब्दादनावृत्तिः शब्दात् | ४।४।२२ | ,, | नि-म-श्री श्रीप-भाष्येषु | | ,, | ,, | ,, | ४ |

एवं च येषु सूत्रेषु प्रत्येकं भाष्यस्य दोषाः ते तावत्— समष्टि — ८९

वल्लभभाष्यस्य दोषाः—

| | |
|---|---|
| न प्रतीके न हि सः | ४।१।४ |
| ब्रह्मदृष्टिरुत्कर्षात् | ४।१।५ |
| आसीनः सम्भवात् | ४।१।७ |
| इतरस्याप्येवमसंश्लेषः पाते तु | ४।१।१४ |
| अनारब्धकार्ये एव तु पूर्वे तदवधेः | ४।१।१५ |
| अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् | ४।१।१६ |
| अतोऽन्यापि ह्येकेषामुभयोः | ४।१।१७ |
| यदेव विद्ययेति हि | ४।१।१८ |
| भोगेन त्वितरे क्षपयित्वा सम्पद्यते | ४।१।१९ |
| तन्मनः प्राण उत्तरात् | ४।२।३ |
| सोऽध्यक्षे तदुपगमादिभ्यः | ४।२।४ |
| भूतेषु तच्छ्रुतेः | ४।२।५ |
| अपीतेः संसारव्यपदेशात् | ४।२।८ |
| प्रतिषेधादिति चेन्न शारीरात् | ४।२।१२ |
| तानि परे तथा ह्याह | ४।२।१५ |
| निशि नेति चेन्न सम्बन्धात् यावद्देहभावित्वात् दर्शयति च | ४।२।१९ |
| अतश्चायनेऽपि दक्षिणे | ४।२।२० |
| वायुमब्दादविशेषविशेषाभ्याम् | ४।३।२ |
| तडितोऽधि वरुणः सम्बन्धात् | ४।३।३ |
| अविभागेन दृष्टत्वात् | ४।४।४ |
| सङ्कल्पादेव तु तच्छ्रुतेः | ४।४।८ |
| तन्वभावे सन्ध्यवदुपपत्तेः | ४।४।१३ |

रामानुजभाष्यस्य दोषाः—

| | |
|---|---|
| ब्रह्मदृष्टिरुत्कर्षात् | ४।१।५ |
| यत्रैकाग्रता तत्राविशेषात् | ४।१।११ |
| यदेव विद्ययेति हि | ४।१।१८ |
| भूतेषु तच्छ्रुतेः | ४।२।५ |
| तदपीतेः संसारव्यपदेशात् | ४।२।८ |
| प्रतिषेधादिति चेन्न शारीरात् | ४।२।१२ |

| | | | |
|---|---|---|---|
| माध्वभाष्यस्य दोषाय— | | प्रतिषेधादिति चेन्न शारीरात् | ४।२।१२ |
| मुक्त प्रतिज्ञानात् | ४।४।२ | अविभागो वचनात् | ४।२।१६ |
| आत्मा प्रकरणात् | ४।४।३ | अप्रतीकालम्बनान् नयतीति बादरायण | |
| अतएव चानन्याधिपति | ४।४।९ | उभयथा दोषात् तत्क्रतुश्च | ४।३।१५ |
| प्रदीपवदावेशस्तथा हि दर्शयति | ४।४।१५ | अनावृत्ति. श० ात् अनावृत्ति शब्दात् | ४।४।२२ |
| दर्शयतश्चैव प्रत्यक्षानुमाने | ४।४।२० | भास्करभाष्यस्य दोषाय— | |
| अनावृत्ति शब्दात् अनावृत्ति शब्दात् | ४।४।२२ | अप्रतीकालम्बनान्नयतीति बादरायण | |
| श्रीकण्ठभाष्यस्य दोषाय— | | उभयथा दोषात् तत्क्रतुश्च | ४।३।१५ |
| यदेव विद्ययेति हि | ४।१।१८ | | |

एवं च अधिकरणरचनानियमानुसारेण विभिन्नभाष्याणां पर्य्यालोचने कृते शंकर-भाष्यस्यैव निर्दोषत्वं तथा च व्यासमतसन्निकृष्टत्वम् उपलभ्यते।

अत्रेदं द्रष्टव्यम्, ब्रह्मजिज्ञासया प्रवृत्तस्य शास्त्रस्य प्रथमाद्यध्यायद्वये स्वपक्षस्थापन परपक्षखण्डनाभ्याम् यथा साक्षात् तत्त्वनिर्णय कृत, तथा साधनफलाख्यतृतीयचतुर्थाध्याय-द्वयेऽपि षड्विधतात्पर्य्यनिर्णयान्तर्गताभ्यासमुखेन प्रसंगत तत्त्वनिर्देश कृत इति। स च तृतीयाध्याये द्वितीयपादे पञ्चम-षष्ठ-सप्तमाधिकरणेषु दृश्यते, तथा चतुर्थाध्याये चतुर्थपादे प्रथमादितृतीयाधिकरणेषु अपि उपलभ्यते। अत्र यत सूत्रितं भगवता सूत्रकारेण, तेन ब्रह्मण निर्गुणत्वपक्ष यथा स्फुटीभवति न तथा तस्य सगुणत्वपक्ष, उभयत्वपक्षो वा इति च। तत्र सगुणब्रह्मवादिनां तथा तस्य सगुणत्वनिर्गुणत्वोभयत्वपक्षपातिनां मते व्याख्यानं क्लिष्टकल्पनमेव प्रतिभाति। तथापि 'अनावृत्ति शब्दात्" इति उपसंहारसूत्रेण, सगुणब्रह्मविदां ब्रह्मलोकात् अनावृत्तिकथनात् "अथातो ब्रह्म जिज्ञासा" इति उपक्रमसूत्रोक्तं ब्रह्मण सगुणत्वमेव प्रसज्यते, न तु निर्गुणत्वम् इत्येव सूत्रकाराभिप्राय इत्येव संलक्ष्यते। परन्तु एतादृशी शङ्का न समीचीना। उपसंहारे सगुणनिर्गुणब्रह्मविदाम् उभयेषां फलवर्णनस्य उपपत्ते, "अविभागेन दृष्टत्वात्" इति सूत्रात् निर्गुणब्रह्मविदामेव फलवर्णनं स्पष्टम्। तथापि सगुणब्रह्मविदां सुखभोगसम्भावनायां प्रकारप्रदर्शनाय कैमुतिकन्यायेन तेषां ब्रह्मलोकप्राप्तानाम् अनावृत्ति कथनम् इति अयमेव सूत्रकाराणाम् आशय। अन्यथा अभ्यासापूर्वतापमृतिलिङ्गानां व्यर्थतापत्ति, श्रुतियुक्तिविरोधापत्तिश्च। ततश्च उपक्रमोपसंहारयो मध्ये उपक्रमस्यैव बलाधिक्यम् इति प्रसिद्धे। एतदर्थं महामहोपाध्यायसर्वतन्त्रस्वतन्त्र-अप्पयदीक्षित-विरचित "उपक्रमपराक्रम" ग्रन्थ अनुसन्धेय। तत्र प्रथमसूत्रे ब्रह्मजिज्ञासाया विषयीभूतं यद् ब्रह्म तत् हि निर्गुणम् इत्येव संगतम्। ज्ञानफलम् अज्ञाननिवृत्तिरेव, सा च निवृत्ति अधिष्ठानज्ञानेनैव सम्भवति। तच्च अधिष्ठानं निर्विशेषमेव स्यात्, सविशेषस्य अधिष्ठानत्वे विशेषाणां ब्रह्मणा

साकं सम्बन्धस्य दुर्निरूपतया, तेषां कल्पितत्वस्य अवश्यम्भावितया सविशेषब्रह्मणि कल्पिते तद्घटकीभूतविशेषाणामपि कल्पनायै विशेषान्तरापेक्षायाम् अनवस्थापत्तेः, निर्विशेषचिन्मात्रस्यैव अधिष्ठानत्वं युक्तम् । एवं च निर्विशेषब्रह्मज्ञानायैव विचारकर्त्तव्यता उपक्रमसूत्रे प्रतिज्ञाता इति स्पष्टम् । तेन उपक्रमबलाधिक्यात् उपसंहारसूत्रं तदानुकूल्येन व्याख्येयम् । निर्गुणब्रह्मविदां लोकाभावात् सिद्धा एव अपुनरावृत्तिः, सगुणब्रह्मविदां लोकसत्त्वेऽपि अपुनरावृत्तिः, ब्रह्मलोके ब्रह्मणा तारकब्रह्ममन्त्रस्य उपदेशदानश्रवणात् ( नृः ताः उपः ) अतो व्यर्थैव इयमाशङ्का । अग्रे अन्तिमे उपसंहारे एतत् सविस्तरं वक्ष्यते । एवं च एतदध्यायेऽपि शङ्करभाष्यस्यैव निर्दोषत्वं व्याससमतसन्निकृष्टत्वं च प्रसिध्यति ।

इति चतुर्थाध्याय-समालोचनम् ।

## तृतीयपादोपसंहारः

एवं च अधिकसम्मत्यनुसारेण सूत्रकृताम् एतद्ब्रह्मसूत्रग्रन्थस्य यद् रचनाकौशलं प्रतीयते, तदवलम्ब्य अस्य अधिकरणरचनायाः पर्यालोचने कृते यत्प्राप्तं तदेव इदानीं प्रदर्शनीयम् । अधिकसम्मतनियमानुसारेण प्रत्यध्यायं विभिन्नभाष्यदोषाणां यः पृथक् निर्णयः कृतः स एवात्र इदानीं समाह्रियते । द्वितीयपादान्ते सूत्ररचनानियमनिरपेक्षनिर्णयः मतसाम्याधिक्यानुसारी निर्णयो वा प्रदर्शितः, अधुना एतत्तृतीयपादान्ते सूत्ररचनानियमसापेक्षनिर्णयफलं प्रदर्श्यते । तथाहि

| भाष्यनाम | प्रथमाध्याये | | द्वितीयाध्याये | | तृतीयाध्याये | | चतुर्थाध्याये | | |
|---|---|---|---|---|---|---|---|---|---|
| भाष्यनाम | अधि० रचनायाम् | अधि० अरचनायां | अधि० रचनायाम् | अधि० अरचनायां | अधि० रचनायाम् | अधि० अरचनायां | अधि० रचनायाम् | अधि० अरचनायां | समष्टिः |
| शं० | ० | ० | ० | ० | ० | ० | ० | ० | |
| भा० | ० | ० | ० | ० | १ | १ | ० | १ | ३ |
| रा० | १ | ४ | ११ | ५ | ४ | १५ | २ | ७ | ४६ |
| नि० | १ | ८ | १० | १० | २ | २० | ३ | १५ | ६६ |
| म० | ४ | ३ | १८ | १४ | ४२ | १९ | ६ | १२ | १२१ |
| श्री० | ३ | ३ | ६ | ६ | ६ | ६ | ३ | ५ | ४७ |
| श्रीप० | ० | ० | २ | ५ | ९ | १३ | ३ | ७ | ३९ |
| व० | २ | २ | १० | ९ | १४ | २६ | ४ | १८ | ८८ |
| | ११ | २० | ६० | ४९ | ८१ | १०६ | २४ | ६५ | ४१६ |

एतेन प्रतीयते—

| | | | |
|---|---|---|---|
| शंकरभाष्ये दोषाभाव | | माध्वभाष्ये | १२१ दोषा |
| भास्कर „ | ३ दोषा | श्रीकण्ठ „ | ४७ „ |
| रामानुज „ | ४९ „ | श्रीपति „ | ३९ „ |
| निम्बार्क „ | ६९ „ | वल्लभ „ | ८८ „ |

एते च नियमसापेक्षदोषा। अत्र यदि तेन सह द्वितीयपादनिरूपितनियमनिरपेक्षा दोषा तुलिता स्यु, तदा इत्थमेव फलम्—

| भाष्यनाम | नियमनिरपेक्षदोषा | नियमसापेक्षदोषाः | समष्टि |
|---|---|---|---|
| शांकरभाष्ये | १३ | ० | १३ |
| भास्करभाष्ये | ११ | ३ | १४ |
| रामानुजभाष्ये | २३ | ४९ | ७२ |
| निम्बार्कभाष्ये | ५३ | ५९ | ११२ |
| माध्वभाष्ये | १०६ | १२१ | २२७ |
| श्रीकण्ठभाष्ये | २८ | ४४ | ७२ |
| श्रीपतिभाष्ये | १९ | ४२ | ६१ |
| वल्लभभाष्ये | ७६ | ८८ | १६४ |
| समष्टि | ३१९ | ४१६ | ७३५ |

अधुना यदि अत्रोक्त-४१६-दोषाणां विश्लेषणं कृतं स्यात्, केषु केषु सूत्रेषु कस्य कति दोषा इति पृथक् कृत्वा प्रदर्शिता स्यु, तदा इत्थमेव फलं लभ्यते—

(१) तत्र प्रथमम् एकैकस्य भाष्यस्य दोषा —

रामानुज भाष्यदोषा —१।२।११, १।३।२१, ३।३।३२ सूत्रेषु = ३ दोषा।

भास्करभाष्यदोष —३।२।१४क सूत्रे = १ दोष

निम्बार्कभाष्यदोषा — १।१।४, १।४।२३, २।३।१०, २।३।११, २।३।१७, २।३।४२, २।४।१७ ४।१।२४, ३।२।२८ सूत्रेषु = ९ दोषा

माध्वभाष्यदोषा —१।१।२५, १।३।४३, १।४।८ १।४।९, १।४।१६, २।१।३, २।१।५, २।१।१२, २।१।१४ २।१।१७ २।२।५, २।२।६, २।२।९, २।२।२८, २।२।३०, २।३।१६,

२।३।२६, २।३।२८, २।३।३०, २।३।३१, २।३।४१, २।३।५१, २।४।३, २।४।४, २।४।१२, ३।१।२, ३।१।३, ३।१।४, ३।१।५, ३।१।६, ३।१।७, ३।१।६, ३।१।१५, ३।१।१६, ३।१।१८, ३।१।२७, ३।२।५, ३।२।६, ३।२।२८, ३।२।३४, ३।२।३७, ३।३।१३, ३।३।१७, ३।३।२१, ३।३।२८, ३।३।३३, ३।३।३५ ३।३।४७, ३।३।४६, ३।३।५०, ३।३।५१, ३।३।५२, ३।४।१०, ३।४।१३, ३।४।१४ ३।४।३२, ३।४।३४, ३।४।४०, ३।४।४७, ४।२।६, ४।२।२१, ४।३।६, ४।४।२, ४।४।३, ४।४।६, ४।४।२० सूत्रेषु=६६ दोषाः

श्रीकण्ठभाष्यदोषाः १।१।१६, १।२।३, १।२।१७, २।१।८, २।१।२१, २।४।१४, २।४।१६, ३।३।२२, ३।३।४१, सूत्रेषु=९ दोषा.

श्रीपतिभाष्यदोषाः ३।४।१७, ४।४।५ सूत्रयोः=२ दोषौ

वल्लभभाष्यदोषाः १।१।३, १।२।५, २।१।२, २।१।१७, २।३।२६, २।४।५, २।४।६, २।४।१५ ३।१।२१, ३।१।२२, ३।२।१०, ३।२।२५, ३।२।२८, ३।३।१०, ३।३।११, ३।३।१९, ३।३।२३, ३।३।२६, ३।३।३०, ३।३।३६, ३।३।५३, ३।३।५४, ३।३।५५, ३।४।४४, ३।४।५१, ४।१।४, ४।१।७, ४।२।५, ४।३।२, ४।३।३, ४।४।४ सूत्रेषु=३१ दोषाः

(२) भाष्यद्वयदोषाः

रा० नि० भाष्ययोः दोषाः—१।३।४०, २।३।८, २।३।१४ सूत्रेषु=६ दोषाः

रा० म० " " २।३।१६ सूत्रे=२ दोषौ

नि० म० " " १।४।१६, २।२।८, ३।३।२७, ३।४।२६, ४।२।१८सूत्रेषु=१०दोषाः

नि० श्री० " " १।४।१४, ३।४।५२, ४।२।१६ सूत्रेषु=६ दोषाः

नि० श्रीप० " " ३।३।३१, ४।१।१२ सूत्रयोः=४ दोषाः

नि० व० " " १।४।२८, ३।२।६, ४।१।१७, ४।२।३, ४।२।४, ४।४।८ सूत्रेषु=१२ दोषाः

म० श्री० " " २।२।२६, ३।३।१२ सूत्रयो=४ दोषाः

म० व० " " २।१।७, २।१।२६, २।२।७, २।४।१०, २।४।२१, ३।१।१७, ३।१।२३, ३।१।२६, ३।२।८, ३।२।१४, ३।२।१९ ३।२।२३, ३।३।६, ३।३।२० ३।४।२१, ३।४।२३, ३।४।२५, ३।४।२८, ३।४।३६, ४।१।१६, ४।२।१६ सूत्रेषु=४२ दोषाः

श्रीप० व० " " २।१।३२, ३।३।६३, ४।४।१३ सूत्रेषु=६ दोषा.

श्री० व० " " ३।४।५० सूत्रे=२ दोषौ

श्री० श्रीप० भाष्ययो दोषा ३।४।५६ सूत्रे = २ दोषौ

रा० श्रीप० " " २।४।८, ३।४।३८ सूत्रयो = ४ दोषा

(३) भाष्यत्रयदोषा —

रा० नि० श्री०—१।३।२२, १।३।४२, २।३।११, ३।३।१२, २।३।१३, २।३।१५ सूत्रेषु = १८ दोषा

रा० नि० व०—२।१।२४, ३।२।२२ सूत्रयो = ६ दोषा

रा० म० व०—२।३।१६ सूत्रे = ३ दोषा

रा० श्री० श्रीप०—२।४।२२, ३।४।२७ सूत्रयो = ६ दोषा

रा० म० श्रीप० ३।२।२७ सूत्रे = ३ दोषा

नि० म० व०—१।४।१५, ४।१।१४, ४।१।१५, ४।२।२० सूत्रेषु = १२ दोषा

नि० श्रीप० व०—२।४।१३ सूत्रे = ३ दोषा

म० श्री० श्रीप०—३।२।३६ सूत्रे = ३ दोषा

म० श्री० व०—३।४।४८ सूत्रे = ३ दोषा

म० श्रीप० व०—३।३।६५ सूत्रे = ३ दोषा

रा० नि० श्रीप०—२।३।९, ३।३।६० सूत्रयो = ६ दोषा

(४) भाष्यचतुष्टयदोषा —

रा० म० श्रीप० व०—४।२।५ सूत्रे = ४ दोषा

रा० नि० श्री० श्रीप०—३।३।१६, ३।४।४१ सूत्रयो = ८ दोषा

रा० नि० श्रीप० व०—३।३।९, ३।३।१४, ४।१।५, ४।२।१९ सूत्रेषु = १६ दोषा

रा० नि० श्री० व०—२।१।३७, ३।३।५ सूत्रयो = ८ दोषा

नि० म० श्री० श्रीप०—४।४।२२ सूत्रे = ४ दोषा

नि० म० श्री० व०—३।४।९ सूत्रे = ४ दोषा

रा० नि० म० श्रीप०—३।३।४०, ४।१।११, ४।४।१५ सूत्रेषु = १२ दोषा

(५) भाष्यपंचकदोषा —

रा० नि० म० श्री० व०—२।२।१२ सूत्रे = ५ दोषा

रा० म० श्री० श्रीप० व०—४।१।१८ सूत्रे = ५ दोषा

रा० नि० म० श्रीप० व०—३।४।१८, ४।२।८ सूत्रयो = १० दोषा

रा० नि० म० श्री० श्रीप०—२।१।३०, ३।३।२९, ३।३।४५, ३।४।४३, सूत्रेषु = २० दोषा

रा० नि० श्री० श्रीप० व०—३।३।३४, ३।३।१७ सूत्रयो = १० दोषा

भा० रा० नि० श्री० श्रीप०—३।३।२६ सूत्रे = ५ दोषाः

(६) भाष्यषट्कदोषाः —

भा० रा० नि० म० श्री० श्रीप० ४।३।१५ सूत्रे — ६ दोषाः

रा० नि० म० श्री० श्रीप० व०—२।३।४०, ४।२।२२ सूत्रयोः = १२ दोषाः

एतेन एकाकी कः कतिषु सूत्रेषु दोषाक्रान्तः, तथा द्वौ मिलित्वा, त्रयः मिलित्वा, चत्वारः पंच षट् च मिलित्वा कतिषु सूत्रेषु दोषग्रस्ताः इति सर्वं ज्ञातुं शक्यते। तथा च कस्य केन सह कीदृशः सम्बन्धः सोऽपि अवगन्तुं शक्यः। नियमनिरपेक्षमतसाम्याधिक्यविचारस्थले द्वितीयपादे एवंरीत्या बहुशः विचारितम्। अत्रापि तथा कर्तुं शक्यते, बाहुल्यभयात् विरम्यते।

अत्र नियमनिरपेक्षं नियमसापेक्षं च यद् द्विविधनिर्णयफलं प्रदर्शितं, तत्र नियमसापेक्षं यत्फलं तदेव मुख्यत्वेन ग्रहणीयम्। यतः तत्र नियमरचनायाम् अष्टानां भाष्याणां मध्ये अधिकसम्मतिरेव निर्दोषत्वस्य व्यासमतसन्निकृष्टत्वस्य च हेतुत्वेन कल्पिता। तादृशनियमनिवहैः भाष्याणां दोषादोषनिर्णयः कृत एव। तेन दोषश्चात्र स्वस्वीकृतनियमलंघनमेव नान्यः। नियमनिरपेक्षदोषादोषनिर्णयकाले यत् तत्निर्णायकत्वेन गृहीतम्, एतद्ग्रन्थस्य द्वितीयपादे, तत्तु आचार्यवर्याणां महत्त्वम् असाधारणत्वादिकमेव गुणजातम्। अत्र तु तथा न कृतमिति बोद्धव्यम्। परन्तु तत्र इदं विचार्यं यत् सिद्धान्तानुसारेणैव भास्करादयः सप्त आचार्याः शंकराचार्यसिद्धान्तविरोधिनः। शंकराचार्यस्तु अद्वैतवादी, भास्कराचार्यादयः सर्वे तद्विरोधिनः। भास्करः द्वैताद्वैतवादी, रामानुजः विशिष्टाद्वैतवादी, निम्बार्कः द्वैताद्वैतवादी, मध्वः द्वैतवादी, श्रीकण्ठः शैवविशिष्टाद्वैतवादी, श्रीपतिः शैवविशिष्टाद्वैतवादी, वल्लभ शुद्धाद्वैतवादी इति। अतः अद्वैतसिद्धान्तविरोधित्वे सर्वे सजातीयाः। यत्र एकस्य विरोधिन एकाधिकाः भवन्ति, तत्र मतसाम्याधिक्यफलम् एकस्यैव प्रतिकूलं भवति। अतः एतादृशमतसाम्यसार्थक्यं न सम्यक् सफलम्, तथापि कालगतपरत्वापरत्वानुरोधेन शंकरभिन्नाना सर्वेषां शंकरात् अपरत्व निश्चितमेव। ब्रह्मसूत्रग्रन्थस्य शंकरप्राक्तनभाष्यादीनाम् उपलब्धिः तेषां मध्ये नैकस्यापि अभवत् इति तेषाम् वचनादिभिरेव अनुमातुं शक्यते। शंकरभाष्ये संगृहीतपूर्वपक्षादयः एव भास्करादिपरभविकानाम् आचार्याणाम् प्राचीनमतावगमोपायः आसीत् इत्येव बहुभिः कल्प्यते। यद्यपि भास्कराचार्यः उपवर्षाचार्यमतानुसारीति तदीयभाष्ये उक्तम्, रामानुजाचार्यः बोधायनमतानुगामीति तदीयभाष्ये घोषितम्, एवम् अन्येऽपि निम्बार्क-मध्वाचार्यादयः सर्वे स्वकीयभाष्याणां प्राचीनर्षिमतमूलकत्वादिकं प्रतिपादयितुं प्रयतमानाः आसन् इति दृश्यते, तथापि तत्र कियत्परिमाणं विश्वासार्हत्वं सत्यं वा, तत् नितरां विवादास्पदीभूतमिति निरपेक्षचेतसाम् अनुभवः। अतः साक्षादप्राप्तमूलकमतवादिभिः परवर्तिभिः सह अथवा सम्प्रदायसंरक्षणमतिभिः विरुद्धपक्षावलम्बिभिः

सह मतसाम्याधिक्यमात्रोपायेन व्यासमतविप्रकृष्टत्वरूपदोषविनिर्णय न सम्यक् पन्था भवितुम् अर्हति। अत अत्र सर्वै प्रायेण स्वीकृतयुक्त्यनुकूलनियमानुसारेण य निर्णय स एव अत्र कथञ्चित् सत्यसमीपवर्ती इति कल्पनं विना गत्यन्तर नास्तीति समीचीनं मतम्। अधिक-स्वीकृतानां तथा स्वस्वीकृतानां नियमानां स्थलान्तरे लंघनमेव अत्र दोषत्वेन गृहीतम्। अवतार-कल्पानाम् अनन्यसाधारणज्ञानसम्पन्नानां, किमधिक दैवीशक्तिसमन्वितानाम् आचार्याणां यदि दोषत्वेन किमपि सम्भाव्यं स्यात् मेरुसविधे सर्षपतुलितानाम् अस्माक दृष्टौ तदा तत्र अयमेव एक पन्था विद्यते नान्य। तेन नियमाधीननिर्णयफलमेव अत्र शरणम्। व्याससम्मतभाष्यनिर्णयकामै विद्वद्भि तदनुसारेण शंकरभाष्यस्यैव निर्दोषत्वम्, अथ किं व्यासमतानुमतत्वम् इत्येव सिध्यति। तदनन्तरं भास्कर-श्रीपति-श्रीकण्ठ-रामानुज-निम्बार्क-वल्लभ-माध्वभाष्याणां यथाक्रम स्थानम्। भास्करे सम्प्रदायानुरोधाल्पत्वात् शंकरसमसामयिकत्वाच्च दोषाल्पत्वमेव आपतितम् इति कल्पयितु शक्यते। रामानुज निम्बार्क-माध्वानां सम्प्रदाया यथा अधुनापि प्राबल्येन उपलभ्यन्ते, भास्करस्य न तथा पूर्वस्मिन् कालेऽपि। ततश्च रामानुजादीनां मध्ये अद्वैतिभि सह साम्प्रदायिकविरोध अपि अभवत् इत्यपि प्रवादाद्विरूपण श्रूयते, अतस्तेषां भाष्यादिषु शांकरमतानुसरणसम्भावना अतियत्नेन तै निवारिता। शंकरसमये गृहविवाद नासीत्, भास्करसमये स आरब्ध, रामानुजादीनां समये स च प्रबलो जात। तेन मतभेदोऽपि शांकरभाष्येण सह तेषां रामानुजादीनां समधिक समभवत्। भास्करे तु एतेषाम् अभावात् शंकरव्याख्यानेन सह तस्य व्याख्यानं नात्यन्तं पृथक् सञ्जातम्। अत नियमसापेक्षनिर्णय एव अत्र कथञ्चित् सत्यसंस्पर्शी भवितुम् अर्हति इति कल्प्यते।

## नियमानां परीक्षणम्

परन्तु तथा सत्यपि, अत्र संकलितनियमानां परीक्षणं कर्त्तव्यम्। नियमसफलत्वेऽपि यदि पक्षपातादिकदोषा प्रसज्येरन् तदा तादृशनियमै किम् आश्वसनीयम्। अतोऽत्र प्रतिपादं विक्षिप्तान् समग्रान् नियमान् संगृह्य समग्रेषु ५५५ सूत्रेषु कथं ते प्रयुज्यन्ते इत्येव अत्र वयं विचारयाम। एतत् कार्यं प्रतिसूत्रम् अस्माभि कृतमेव, तदेवात्र पुन द्रष्टव्यं स्मर्तव्यं वा। दृष्टं च आदित अन्तपर्यन्तं विंशति नियमा संकलिता अस्मिन् तृतीये पादे, तथैव एकादशसामान्य-नियमा एतद्ग्रन्थस्य प्रथमपादरूपभूमिकाभागे ८२—८४ पृष्ठयो निरूपिता इति। ते च सामान्यनियमा, यथा—

### सामान्यनियमा'

१। एकेन वा एकाधिकसूत्रेण वा यथाप्रयोजनम् अधिकरणानि रचयितव्यानि। तेन कियन्ति सूत्राणि प्रत्यधिकरणं वर्तिष्यन्ते तत्र न नियम। (८२ पृष्ठ द्रष्टव्य)

२। यत्र एकेन सूत्रेण अधिकरण रचितं स्यात्, तत्र तदेव सिद्धान्तसूत्रं भवत्येव। न तु पूर्वपक्षसूत्रं कचिदपि। तत्र पूर्वाधिकरणस्य सिद्धान्तं दृष्ट्वा पूर्वपक्ष ऊहनीय। (८२ पृ)

३। अधिकरणद्वयमध्ये यः सम्बन्ध. सोऽत्र संगतिशब्देन व्यवह्रियते। (८२-३ पृ.)

४। उद्देश्यतया विधेयतया वा सूत्रस्थप्रथमान्तपदस्यैव अधिकरणारम्भसूचकत्वम्। यथा "जन्माद्यस्य यतः" इति सूत्रे जन्मादिपदम्। ( ८३ पृः )

५। ऊहनीयप्रथमान्तपदस्यापि अधिकरणारम्भसूचकत्वम्। यथा---"शास्त्रयोनित्वात्" इति सूत्रे "तद् ब्रह्म सर्वज्ञम्" इति ऊहनीयप्रथमान्तपदम्। ( ८३ पृः )

६। यत्र एकाधिकेन सूत्रेण अधिकरण रचित स्यात्, तत्र सर्वाणि क्वचित सिद्धान्त-बोधकानि, क्वचित् कतिपयानि तथा, शिष्टानि पूर्वपक्षबोधकानि यथा। विलक्षणत्वाधिकरणम् ( ३।२।३ ) ( ८३ पृ )

७। पूर्वपक्षसूत्रम् अधिकरणारम्भे तन्मध्ये वा दृश्यते, मतान्तरज्ञापनार्थं क्वचिदन्ते, यथा ४।३।५ कार्याधिकरणे पूर्वपक्षेण अधिकरणसमाप्तिः। यत्र पूर्वपक्षानन्तर सिद्धान्तपक्षः तत पूर्वपक्ष· मतान्तरज्ञापनार्थम् उक्त·, तत्रैव पूर्वपक्षसूत्रे अधिकरणसमाप्ति· नान्यत्र। ( ८३ पृ )

८। कुत्रचित् सूत्रशृङ्खलामध्ये आक्षेपसमाधानरूपेण एकाधिकवारम् पूर्वपक्षसूत्राणि सिद्धान्तसूत्राणि च दृश्यन्ते। यथा १।३।८ देवताधिकरणम्। ( ८४ पृ. )

९। कुत्रचित् एकस्मिन् एव सूत्रमध्ये पक्षद्वयं सन्निवेशितम्। यथा---"गौणश्चेन्नात्म-शब्दात्" इति १।१।६ सूत्रम्। ( ८४ पृः )

१०। एकेन एकाधिकसूत्रेण वा यत्र अधिकरण भवति, तत्र अधिकरणस्य षडङ्गानि अन्तर्निहितानि विज्ञेयानि। ( ८४ पृः )

११। अधिकरणाङ्गानि षट्, यथा सगति, फलभेद·, विषय·, सशय·, पूर्वपक्षः, सिद्धान्तपक्ष इति। सूत्रकृता तु एतत्क्रमानुसारेण नैकमपि अधिकरण स्पष्टतया रचितम्, टीकाकृद्भिः सर्वत्र एतत् प्रदर्शितम्। ( ८४ पृः )

### विशेषनियमाः

१। सूत्रान्तर्गतपदानुसारेण अधिकरणनामकरणं सम्पादनीयम्, पुनरुक्तिशंका चेत् प्रतिपाद्यविषयाद्यनुसारेण तत् कर्त्तव्यम्। ( २ भा० २ पृः )

यथा---"अथातो ब्रह्मजिज्ञासा" १।१।१ इति सूत्रस्य जिज्ञासा-पदेन अस्य जिज्ञासाधि-करण नाम। "अतएव प्राण·" १।१।२३ अत्र प्राणाधिकरणं नाम कृत्वा "प्राणस्तथानुगमात्" १।१।२८ अत्र पुनरुक्तिशंकया प्रतर्दनाधिकरण नाम कृतं, प्राणशब्दस्य उभयत्र दृष्टत्वात्।

२। अध्यायारम्भे पादारम्भे च अधिकरणारम्भः नियमेन करणीय.। (२ भा० २पृः)

यथा---"आवृत्तिरसकृदुपदेशात" ४।१।१ इत्यत्र "सर्वत्र प्रसिद्धोपदेशात्" १।२।१ इति अत्र वा अधिकरणम् आरब्धम्।

३। उद्देश्यतया विधेयतया वा निराकाङ्क्षप्रथमान्तपदस्य पुन· प्राप्तिपर्यन्तम् अधि-

करणस्थिति कल्पनीया। तेन यावत् न अधिकरणारम्भकतादृशप्रथमान्तपदघटितं सूत्रं पुन उपलभ्यते तावत् अधिकरणम् असमाप्तम् इत्येव आयातम्। ( २ मा० ३ पृ )

यथा "ईक्षतेर्नाशब्दम्" १।१।५ इति सूत्रस्य अनन्तरम् आनन्दमयोऽभ्यासात् १।१।१२ इति सूत्रात् पूर्वसूत्रपर्यन्तम् ईक्षत्यधिकरणस्य स्थिति इति गम्यते।

४। उद्देश्यविधेयान्यतरभेदात् विषयभेदात् वा अधिकरणभेदेन सूत्रभेद साधीयान्, अथवा अधिकरणावयवभेदबोधनात् विधेयभेदाद् वा सूत्रभेद युक्त। किंवा अवयवविशेषस्य वैशिष्ट्यसाधनात् सूत्रभेद करणीय। चेत् पदघटित सूत्रव्यतिरिक्तस्थले अधिकरणमध्ये पूर्वपक्षसिद्धान्तपक्षभेदात् सूत्रभेद युक्त। चन्कारादिपदेन अधिकरणावयवहेतु दृष्टान्तादीनाम् एकैकस्य विजातीयवैलक्षण्यविधानाद् वा सूत्रभेद साधीयान्। ( २ मा० ४ पृ )

यथा—"शास्त्रयोनित्वात् १।१।३" इति सूत्रे शास्त्रयोनित्वरूपहेतुप्रदर्शनाद् यदेव साध्यत्वेन कल्पनीयं, यथा ब्रह्मण सर्वज्ञत्व शास्त्रप्रमाणकत्वं वा, तेन ब्रह्मरूपोद्देश्यस्य जगत्कारणरूपविधेयभिन्नव्यवस्थापनात् अथवा शास्त्रप्रमाणकत्वरूपविधेयभेदसाधनात्—"शास्त्रयोनित्वात्" इति सूत्रेण अधिकरणारम्भ संगच्छते, तेन अस्य पृथक्सूत्रत्व युक्तम्। अत "जन्माद्यस्य यत शास्त्रयोनित्वात्" इति एकसूत्रत्वकल्पनं वल्लभमतेन अवैधं भवति। तथैव निम्बार्कमतेन "शास्त्रयोनित्वात्" इति सूत्रेण सह "तत् तु समन्वयात्" इति सूत्रस्य एकाधिकरणत्वम् अयुक्त भवेत्, विधेयभेदात्।

५। यदि सूत्रमध्ये "अथ 'चेत्' 'चेन्न' 'इति चेत्' 'इति चेन्न' इत्यादिपदसत्त्वं तदा अधिकरणं नारम्भणीयम्।" ( २ मा० ६ पृ )

यथा—"गौणश्चेन्नात्मशब्दात्" १।१।६ इति सूत्रे "गौण" इति प्रथमान्तपदसत्त्वेऽपि 'चेत्' शब्दयोगात् नास्य अधिकरणारम्भकत्वम्।

६। 'च' 'अपि' 'वा' 'हि' पदयोगात् अधिकरणावयवानां हेतुप्रभृतीनां समुच्चायकत्वेन अध्याहृतस्य अनध्याहृतस्य वा प्रथमान्तपदस्य साकांक्षत्वे सिद्धे नाधिकरणारम्भकत्वम्। ( २ मा० ८ पृ )

यथा—"मान्त्रवर्णिकमेव च गीयते" १।१।१५ इति सूत्रस्य 'च' कारशब्दात् 'मान्त्रवर्णिकम्' इति प्रथमान्तपदसत्त्वेऽपि नाधिकरणारम्भकत्वम्। 'च'-कारेण अत्र हेतो समुच्चायकत्वविधानात्, न तु उद्देश्यविधेयभेदसाधनात्। "अन्तरत्वं सर्वज्ञता वा" २।२।४१ इत्यत्र वा-शब्देन साकांक्षत्वविधानात्। "अपि च स्मर्यते" १।३।२३ इत्यत्र प्रथमान्तपदाध्याहारेऽपि "अपि च" शब्देन साकांक्षत्वात् नाधिकरणारम्भकत्वम्। 'देवादिवदपि लोके" २।१।२५ इत्यत्र 'अपि' शब्दयोगात् साकांक्षत्वेन नाधिकरणारम्भ। "मार्क्ष वा नात्मविरनात् तथा हि दर्शयति" ३।१।७ इत्यत्र 'वा'-शब्दात् साकांक्षत्वम्, अत नाधिकरणारम्भ। 'अरूपवदेव हि तत् प्रधानत्वात्"

३।२।१४ इत्यत्र 'हि' शब्दस्य साकांक्षत्वसाधकत्वम् । तेन अत्रापि नाधिकरणारम्भः कृतः ।

७। इतरादिशब्दात् अर्थात् 'इतरः' 'अन्यः' 'वाक्यशेषः' 'तद्वत्प्रसंगः' 'अन्यथा' 'अप्राप्तिः' 'गौणी' 'प्रतिज्ञाहानिः' 'अविरोधः' 'व्यतिरेकः' 'एवम्' 'अथ' 'अस्मात्' 'तत्' 'अत' 'अनेन' 'असार्वत्रिकी' 'विभागः' इत्यादिशब्दवत् स्वरूपतः सापेक्षत्वार्थकप्रथमान्त-पदस्य न अधिकरणारम्भकत्वम् ।" ( २ भा० ८ पृः )

यथा "नेतरोऽनुपपत्तेः" १।१।१६ इति सूत्रस्य 'इतरः' इति प्रथमान्तपदस्य 'कस्मात् इतरः' 'कस्य इतरः' इत्यर्थबोधनेन साकाङ्क्षत्वसिद्धेः नाधिकरणारम्भकत्वम् । तेन श्रीकण्ठमतेन अत्र अधिकरणारम्भः न संगतः । तथैव "भेदव्यपदेशाच्चान्यः" १।१।२१ इति सूत्रे 'अन्यः' इति पदात् नास्य अधिकरणारम्भकत्वम् । "प्राणादयः वाक्यशेषात्" १।०।१२ इत्यत्र 'वाक्यशेषात्' इति पदात् साकाङ्क्षत्वविधानात् नाधिकरणारम्भ । "अपीतौ तद्वत्प्रसंगात् असमञ्जसम्" २।१।८ इत्यस्मिन् सूत्रे "तद्वत्प्रसंगात्" इति पदात् साकाङ्क्षत्वात् नाधिकरणा-रम्भः । "असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा" २।२।२० इत्यत्र 'अन्यथा'-पदेन साकांक्षत्व-विधानात् नाधिकरणारम्भः । "प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्" २।२।२२ इति अत्र "अप्राप्तिः"-पदेन साकाङ्क्षत्वस्य विधानात् नाधिकरणारम्भः । "गौणी असम्भवात्" २।३।३ इत्यत्र 'गौणी'-पदेन साकाङ्क्षत्वविधानात् नाधिकरणारम्भः । "प्रतिज्ञाहानिरव्यतिरेकशब्देभ्य" २।३।६ इत्यत्र "प्रतिज्ञाहानिः"-पदेन साकाङ्क्षत्वविधानात्, "अविरोधश्चन्दनवत्" २।३।२३ इत्यत्र 'अविरोध'-पदेन साकांक्षत्वात्, "व्यतिरेको गन्धवत्" २।३।२६ इत्यत्र 'व्यतिरेक'-शब्देन साकाङ्क्षत्वात्, "प्रकाशादिवन्नैवं परः" २।३।४६ अत्र 'एवं'-शब्देन साकाङ्क्षत्वविधानात्, "रेतःसिग्योगोऽथ" ३।१।२६ अत्र 'अथ'-शब्दात् साकाङ्क्षत्वात्, "अतः प्रबोधोऽस्मात्" ३।१।८ इति अत्र 'अतः अस्मात्' पदाभ्यां साकांक्षत्वात् "अतोऽनन्तेन तथा हि लिंगम्" ३।२।२६ अत्र "अतः तथा हि"-शब्दाभ्यां साकाङ्क्षत्वात् "अनेन सर्वगतत्वम् आयामशब्दादिभ्यः" ३।२।३७ अत्र 'अनेन' शब्देन साकाङ्क्षत्वात, "उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्" ३।३।३० अत्र 'तत्'-शब्देन साकाङ्क्षत्वात, "असार्वत्रिकी" ३।०।१० इति अत्र स्वरूपतः साकाङ्क्षत्वात् । "विभागः शतवत्" ३।०।११ अत्र 'विभागः'-शब्दस्य स्वरूपतः साकाङ्क्षत्वात् अत्र नाधिकरणारम्भः ।

८। विरोधे सति प्रतिपाद्यानुसारेण अधिकरणनामकरणं करणीयम् । (२ भा० ११पृ)

यथा—"प्राणस्तथानुगमात्" १।१।२८ इति सूत्रे 'प्राण'-शब्देन नाधिकरणनाम-करणम्, किन्तु तत्तात्पर्यानुसारेण । यथा 'प्रतर्दनाधिकरणम्' इति नाम कृतम् । "अत एव प्राणः" १।१।२३ इति सूत्रे प्राणाधिकरणनामकरणात् विरोधापत्तिः ।

९। यत्र अनिश्चयार्थक 'तु' शब्देन सह प्रथमान्तपदसत्त्व तत्र तेन नाधिकरणारम्भः करणीयः । ( २ भा० ११ पृ )

यथा "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" १।१।३० इति सूत्रे 'उपदेश" इति प्रथमान्तपदसत्त्वेऽपि नास्य अधिकरणारम्भकत्वम्, अनिषेधार्थक-'तु' शब्दयोगात्। "तत् तु समन्वयात्" १।१।४ इति सूत्रे 'तु' शब्दस्य निषेधार्थकत्वं यथा दृष्टं नात्र तथा। अत्र अर्थसंकोचस्य विधानात्।

१०। "विषयान्तरसूचनात् ऋते प्रथमान्ता-नाम-पदेन सिद्धान्तपक्षभूत-स्वमतानुकूल-मतान्तरज्ञापने तथा स्वनाम्ना स्वमतज्ञापने च तत्प्रथमान्तपदस्य नाधिकरणारम्भकत्वम्। (२ भा० २३ पृ०)

यथा—'साक्षादपि अविरोधं जैमिनि" १।२।२८ इति सूत्रे "जैमिनि" इति प्रथमान्तपदसत्त्वेऽपि नास्य अधिकरणारम्भकत्वम्, प्रथमान्त-नाम-पदेन सिद्धान्तभूत-स्वमतानुकूल मतान्तरज्ञापनात्। तथैव "अभिव्यक्तेरित्याश्मरथ्य" १।२।२९ "अनुस्मृतेर्बादरि" १।२।३० 'सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति" १।२।३१ इति सूत्राणाम्। तथैव "परामर्शं जैमिनिरचोदना चापवदति हि" ३।४।१८ इति पूर्वपक्षसूत्रेण विषयान्तरसूचनात् 'कार्यं बादरिरस्य गत्युपपत्ते" ४।३।७ इति सिद्धान्तसूत्रेण विषयान्तरसूचनात् अधिकरणारम्भ। तथैव "तदुपर्यपि बादरायण सम्भवात्" १।३।२६ इति सूत्रेण विषयान्तरसूचनात् अधिकरणारम्भ।

११। प्रथमान्तपदाभावेऽपि उद्देश्यविधेयान्तरसमुच्चायक-हेतुसमुच्चायक-'च'-कारादि-शब्दयोगेऽपि तथा 'चेत्' शब्दयोगेऽपि एवं च अधिकरणनिषेधेऽपि विषयश्रुतिभेदात् अधिकरणभेद करणीय।

यथा—"अनुकृतेस्तस्य च" १।३।२२ इति सूत्रे प्रथमान्तपदाभावात् 'अनुकृते' इति हेतुबोधकशब्देन सह 'च'-कारयोगेन हेतुसमुच्चायकत्वबोधनात् नास्य अधिकरणारम्भकत्वम्, तथापि 'न तत्र सूर्यो भाति' (मुण्डक २।२।१०) इत्यादि श्रुतेर्विषयत्वात् पूर्वाधिकरणाश्रित दहरश्रुतित भेदात् च अत्र अधिकरणारम्भ सगच्छते। तथा 'नातिचिरेण विशेषात्" ३।१।२३ इति सूत्रेऽपि बोद्धव्यम्।

१२। प्रथमान्तपदाभावेऽपि यत्र 'अपि' 'च' 'वा' 'हि' प्रभृति-प्रसंगान्तरत्वबोधक-शब्देन उद्देश्यविधेयान्यतरमेव प्रसज्येत, तत्र पृथग् अधिकरण युक्तम्।

यथा—"न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च" १।४।११ इति सूत्रे प्रथमान्त-पदाभावेऽपि 'अपि'-शब्देन तथा 'च'-कारेण प्रसंगान्तरस्य बोधनात् अस्य अधिकरणारम्भकत्वम्।

१३। 'च' 'अपि' प्रभृतिपदेन उद्देश्यविधेयान्यतरातिरिक्तविषयस्य उद्देश्यविधेय विशेषणरूपेण सन्निवेशे 'अपि'-पदस्य 'च'-कारस्य च नाधिकरणारम्भबोधकत्वम्।

यथा—"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" १।४।२३ इति सूत्रे पूर्वाधिकरणोक्त यत् ब्रह्मण निमित्तकारणत्वरूपविधेयत्वविधानं तदनन्तरम् अत्र 'च' कारेण ब्रह्मण प्रकृतित्व

रूपोपादानकारणत्वव्यवस्थापनात् विशेषणद्वारा विधेयान्तरस्य विधानात् अधिकरणभेदः युज्यते एव। एतावन्तः नियमाः प्रथमाध्याये संकलिताः इति।

१४। 'चेत्' 'इति चेन्न'-प्रभृतिशब्दसत्त्वेऽपि यत्र शंकाभागे पंचम्यन्त-प्रथमान्त-पदद्वयसत्त्वं तत्र अधिकरणारम्भः युक्तः।

यथा—"भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्" २।१।१३ इति सूत्रे शंकाभागे 'भोक्त्रापत्तेः" इति पंचम्यन्तपदस्य तथा 'अविभागः' इति प्रथमान्तपदस्य सत्त्वात् अत्र अधिकरणारम्भः युक्त एव।

१५। यत्र पूर्वसूत्रे 'व्याख्यातम्' 'तदुक्तम्' एवंसजातीयकं प्रसंगसमाप्तिसूचकं पदं, तत्र परसूत्रस्य निराकांक्षत्वबोधकत्वे सति अधिकरणारम्भः करणीयः।

यथा "विकरणत्वान्नेति चेत् तदुक्तम्" २।१।३१ इति सूत्रात् परं यत् "न प्रयोजनवत्त्वात्" २।१।३२ इति सूत्रं, तत्र प्रथमान्तपदाभावेऽपि तस्य अधिकरणारम्भकत्वम्। तथा "एतेन शिष्टापरिग्रहा अपि व्याख्याताः" २।१।१२ इति सूत्रात् परं भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्" २।१।२३ इति सूत्रे अधिकरणारम्भः।

१६। यत्र हेतुत्रयं 'च'-कारादिपदेन समाह्रियते, तत्र अधिकरणसमाप्तिकल्पनं समुचितम्। तेन तदनन्तरं यत् सूत्रं तत्र प्रथमान्तपदाभावेऽपि तेन अधिकरणारम्भः संगच्छते।

यथा- "उपपद्यते चाप्युपलभ्यते च" २।१।३६ इति सूत्रात् परं "सर्वधर्मोपपत्तेश्च" २।१।३७ इति सूत्रेण अधिकरणारम्भः संगच्छते। तथा "नैकस्मिन्नसम्भवात्" २।२।३३ इति सूत्रे इतः पूर्ववर्त्तिसूत्रद्वये 'च'-कारद्वयस्य वर्तमानत्वात् अधिकरणारम्भकत्वम्।

१७। पूर्वापरसूत्रयोर्मध्ये च-कारयोगात् मध्यपतितसूत्रस्य प्रथमान्तपदस्य साकांक्षत्वम्, तेन तस्य न अधिकरणारम्भकत्वम्। हेतुबोधकप्रवाहान्तःस्थितस्य च-कारस्य मध्येऽपि अध्याहारेण साकाक्षत्वविधानात् मध्यपतितस्य प्रथमान्तपदस्य न अधिकरणारम्भकत्वम्।

यथा "वैधर्म्याच्च न स्वप्नादिवत्" २।२।२९ इति सूत्रात् अनन्तरं "न भावोऽनुपलब्धेः" २।२।३० इति सूत्र, ततः "क्षणिकत्वाच्च" २।२।३१ इति सूत्रम्; अत्र "न भावोऽनुपलब्धेः" २।२३० इति मध्यपतितसूत्रस्य प्रथमान्तपदसत्त्वेऽपि अस्य पूर्वापरसूत्रद्वयमध्ये 'च'-कारयोगात् न अधिकरणारम्भकत्वम्। "पञ्चवृत्तिर्मनोवद् व्यपदिश्यते" २।४।१२ इति अत्रापि तथा। "नानुमानमतच्छब्दात्" १।३।३ इति अत्र अपि तथा।

१८। उक्तपूर्वपक्षे प्रथमान्तपदेन सह निषेधार्थक-'तु'-शब्दस्य न अधिकरणारम्भकत्वम्। अनुक्तपूर्वपक्षव्यावर्तकत्वे 'तु'-शब्दस्य न बाधकत्वम्।

यथा—"तद्गुणसारत्वात् तु तद्व्यपदेशः प्राज्ञवत्" २।३।२९ इति सूत्रे पूर्वपक्षव्यावर्तक-'तु'-शब्दसत्त्वेऽपि 'तद्गुणसारत्वात्' इति पदेन पूर्वपक्षस्य उक्तत्वात् नास्य अधिकरणारम्भकत्वम्।

"तत्तु समन्वयात्" १।१।० इति सूत्रस्य अनुक्तपूर्वपक्षत्वात् पूर्वपक्षव्यावर्तक-'तु'-शब्देन अधिकरणारम्भकत्वम्। अत्र न तथा।

१९। 'तु'-शब्दवर्जित प्रथमान्तपदात् 'स्यात्'-शब्दसत्त्वम् अधिकरणारम्भकम्।

यथा—"पूर्वविकल्प प्रकरणात् स्यात् क्रिया मानसवत्" ३।३।४५ इति सूत्रे 'पूर्वविकल्प' इति प्रथमान्तपदसत्त्वेऽपि 'तु'-शब्दयुक्त-'स्यात्'-शब्दस्य अभावात् नास्य अधिकरणारम्भकत्वम्। तथैव स्मर्यमाणमनुमानं स्यादिति" १।२।२५ इति सूत्रे न अधिकरणारम्भ। अत्र प्रथमान्तपदसत्त्वेऽपि 'तु'-युक्त-'स्यात्' शब्दस्य अभावात्। तथैव "शमदमाद्युपेत स्यात्तथापि तु तद्विधेस्तदंगतया तेषामवश्यानुष्ठेयत्वात्" ३।४।२७ इत्यत्र बोद्धव्यम्। तेन "चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" २।३।१६ इति सूत्रे प्रथमान्तपदात् 'तु'-शब्द-युक्त-'स्यात्' शब्दस्य वर्तमानत्वात् अधिकरणारम्भकत्वम्, अत न व्यभिचार।

२०। पूर्वपक्षसूत्रीय प्रथमान्त-नाम-पदेन परमतनिर्देशे कृते तेन विषयान्तर सूचिते अधिकरणारम्भ करणीय। विषयान्तरस्य अनिर्देशे न करणीय।

यथा—"स्वामिन फलश्रुतेरित्यात्रेय" ३।४।४४ इति सूत्रे अधिकरणारम्भ कृत। परन्तु "साक्षादप्यविरोधं जैमिनि" १।२।२८ इति सूत्रस्य स्वमतप्रतिकूलपूर्वपक्षत्वाभावात् अनेन न अधिकरणारम्भ कृत। अत्र स्वमतानुकूलमतान्तरज्ञापनमात्रस्य कृतत्वात्। तथा "परामर्शं जैमिनिरचोदना चापवदति हि" ३।४।१८ इति सूत्रेण प्रथमान्त-नाम-पदेन स्वमतप्रतिकूलविषयान्तरस्य ज्ञापनात् अधिकरणारम्भ कृत। इति विशेषनियमा।

एतै नियमनिवहै अष्टानां भाष्याणाम् अधिकरणरचनाविषयक तुलनाफल यत् लब्धं तत्तु प्रदर्शितमेव। नियमनिरपेक्षतुलनाफलं तु एतद्ग्रन्थस्य द्वितीये पाठे सन्निबद्धम्। सूत्रपाठे, सूत्रयोगे, सूत्रविभागे, अतिरिक्तसूत्रग्रहणे, गृहीतसूत्रवर्जने, तथा सूत्रक्रमविपर्यये च दशानां भाष्याणां तुलना कृता। तत तुलनाफलमपि द्वितीयपादोपसंहारे प्रदर्शितम्। तत्र नियम विध न किंचित् अवलम्बितम्, असम्भावितत्वात्। सूत्रकर्ता स्वातन्त्र्य न सर्वथा युक्तितन्त्रम्। शांकरभाष्यादपि प्राचीनतरं भाष्यं यदि किंचन भाष्यत, तदा तद्भाष्येण सह तुलयित्वा भाष्याणां दोषादोषविचार कथंचित् सम्भविष्यत्। परन्तु तादृशभाष्यादिकम् इदानीं नैकमपि लभ्यते। अत कतम पाठः समीचीन इति जानाति भगवान् बादरायण स्वयम्। अत व्याससम्मतब्रह्मसूत्रभाष्यविनिर्णये, नियमसापेक्षं यत् अधिकरणरचनातुलनाफल तदेव अत्र प्रमाणं शरणं च अस्माकम्। सूत्रपाठादिविषयकतुलनाफलं तन्निर्णये अलम्।

## नियमानां प्रकृतिनिर्णय।

एतेषां सामान्य-विशेषनियमानां मध्ये चतुर्थ-विशेषनियममन्तरेण सर्वे नियमा अधि-

करणविषयकाः । तत्र कतिचित् अधिकरणप्रकृतिपरिचायकाः, कतिचित् अधिकरणनामनिर्देशविषयकाः, अपरे च अधिकरणारम्भणीयत्वविषयकाः तन्निषेधविषयकाश्च वर्तन्ते ।

सामान्यनियमाना मध्ये, चतुर्थ-पंचमौ अधिकरणारम्भविषयकौ, अन्ये अधिकरणपरिचायकाः ।

विशेषनियमाना तु तृतीय एव अधिकरणप्रकृतिपरिचायकः । अधिकरणनामनिर्देशविषयकौ प्रथमाष्टमौ । अधिकरणारम्भणीयत्वविषयकाः द्वितीय-एकादश-द्वादश-त्रयोदश-चतुर्दश-पचदश-षोडश-ऊनविंश-विंश-सख्यकाः नियमाः । अधिकरणारम्भणीयत्वनिषेधविषयकास्तु पंचम-षष्ठ-सप्तम-नवम-दशम-सप्तदश-अष्टादश-संख्यकनियमाः । चतुर्थविशेषनियमस्तु सूत्रविषयकः एव ।

( १ ) तत्रापि प्रकारान्तरेण प्रथमान्तपदसंक्रान्तनियमाः त्रयः, यथा चतुर्थ-पचम-साधारणनियमौ, तथा तृतीयविशेषनियमः इति ।

( २ ) पादारम्भे अधिकरणारम्भ-करणीयत्वनियमः द्वितीयः विशेषनियमः एकः एव।

( ३ ) च-कारादि-पदसंक्रान्तनियमा ४र्थः, ६ष्ठः ; ११शः, १२शः, १३शः, १६शः, १७शः इति सप्त ।

( ४ ) 'चेत्' शब्दघटितनियमौ ५मः, १४श इति द्वौ ।

( ५ ) इतरादि-साकाक्षशब्दघटितनियमः ७मः इति एकः एव ।

( ६ ) तु-शब्दघटितनियमौ ९मः १८शश्चेति द्वौ ।

( ७ ) नाम-पदघटितनियमौ १०म २०शश्चेति द्वौ ।

( ८ ) 'व्याख्यातम्' 'तदुक्तम्' इत्यादि-पदघटितनियमः १५शः इति एकः।

( ९ ) 'स्यात्' पदघटितनियमः—१९श इति एकः एव।

## नियमानां सारसंग्रहः ।

एतेषां नियमाना यत् सारभूतं तद् हि—

१। उद्देश्यतया वा विधेयतया वा यत्र निराकाक्षप्रथमान्तपदम् अथवा तादृशपदस्य अध्याहारः आवश्यकः तत्रैव अधिकरणारम्भः । प्रथमान्तपदस्यैव निर्देशपरत्वात् साकांक्षत्वस्य च अस्वातन्त्र्यं हि प्रसिद्धमेव, तेन तदेव अधिकरणारम्भबोधकम् ।

२। पादारम्भे सर्वत्र अधिकरणारम्भः करणीयः। अधिकरणव्यापकपादभेदात् व्याप्याधिकरणस्यापि भेदस्य अवश्यम्भावित्वात्।

३। विषयश्रुतिभेदस्यापि अधिकरणारम्भकत्वम् । श्रुत्यर्थनिर्णयस्यैव एतद्ग्रन्थस्य मुख्यप्रयोजनत्वात् ।

४। अधिकरणसमाप्तेरपि पराधिकरणस्य आरम्भकत्वम् । समाप्तैरेव सम्बन्धविघटकत्वप्रसिद्धे ।

५। प्रथमान्तपदस्य विशेषण पूर्वप्रकृतेन सह साकांक्षत्वम् अधिकरणारम्भस्य बाधकम् । आकांक्षाया सम्बन्धघटकत्वप्रसिद्धे ।

६। च वा तु हि अपि चेत् नहि इतर अन्य-इत्यादिशब्दाना साकांक्षत्वबोधकत्वम्, समुच्चय-विकल्प-संकोच-निषेधाद्यर्थपरत्वात् । तेन एतेषां सत्त्वम् अधिकरणारम्भस्य बाधकम् ।

७। च-कारादिना हेतो समुच्चये नाधिकरणारम्भ । हेतुसाध्ययो व्याप्तिसम्बन्धात् साकांक्षत्वसिद्धे । किंतु प्रकृतोद्देश्यविधेयान्यतरमेवबोधकत्वे निराकांक्षत्वसिद्धे तदारम्भ विषयान्तरस्य सूचनात् ।

८। उपर्युपरि-हेतुत्रयप्रदर्शनम् अधिकरणसमाप्तिसूचकम् । त्रिरुक्तस्य वक्तव्यशेषत्वेन व्यवहारात्, प्रतिज्ञाया पूर्णरूपत्वाच्च ।

९। हेतुबोधकपूर्वापरसूत्रद्वयमध्यपतितसूत्रस्य सहेतुकप्रथमान्तपदसत्त्वं नाधिकरणारम्भकत्वम् । सजातीयबाहुल्यस्य सामर्थ्याधिक्यनियमात् । एतदेव नियमरचनाया मूलमत्र अस्माकम् आसीत् ।

## नियमानां साम्प्रदायिकोपदेशाधीनत्वम् ।

एवं च सूत्ररचनायां ये च नियमा सूत्रकृद्भि अनुसृता ते सर्वे युक्तिमूलका लोकविरुद्धा च इति । तथापि साम्प्रदायिकोपदेशस्य आनर्थक्यं न कल्पनीयम् । नियमम् अनुसृत्यापि विप्रतिपत्ते सम्भवात् । यत सूत्रोपजीव्यश्रुतिस्मृतिप्रमृतिग्रहणे भाष्यकाराणां मतानैक्यं दृश्यते, तत्रापि हेतु श्रुत्यादीनां पदार्थावलम्बनेन सूत्राणाम् अरचितत्वमेव । न वा एतत् सूत्रकृतां न्यूनत्वम् इति कल्पयितुं शक्यते । यत गुरुशिष्यक्रमेण विद्या समधिगम्या, अन्यथा सा न फलवती भवति इति सज्जनानुभवत्वेन प्रसिद्धमेव । गुरोरेव तत्त्वप्रकाशतत्त्वस्य प्रतीकत्वात् । अत अत्र साम्प्रदायिकोपदेशस्य आनर्थक्यं न शक्नीयम् । चरमोपसंहारे वैयासिकसाम्प्रदायिकस्य विचारविष्यते ।

## भाष्याणां मध्ये श्रेष्ठतमत्वनिर्देशे हेत्वन्तरम् ।

अत्र अधिकरणरचनानियमानुसारेण शांकरव्याख्यानस्य श्रेष्ठत्वे निर्दोषत्वे वा अपर एको हेतु उपलभ्यते । स च हेतु—आलोच्यमानानां भाष्याणां मध्ये नियमविरुद्धं सत् केवलमेक शांकरभाष्यमेव एकक, तथा अन्येन सह न अन्येषां प्रतिपक्षत्वेन दृश्यते । सर्वत्र शंकरमतं नियमानुसारि सत् कस्यचित् अपरस्य एकस्यापि अनुकूलमेव भवति इति परिलक्ष्यते । अन्यत सर्वं भाष्यं नियमविरुद्धं सत् बहुषु स्थलेषु एककमेव स्वकीयव्याख्यानविशेषस्य प्रवर्तकम् इति दृश्यते । तथा च शांकरभाष्ये नियमानुवर्तनेन सह तत्प्रतिपक्षस्यापि अनुमोदनं

समर्थनं वा यथा लभ्यते, न तथा भाष्यान्तरेषु इति अकामेनापि अंगीकर्तव्यम् इति। श्रीपति-भाष्यमपि एककं न कस्यापि विरोधि, तथापि अनेन सह मिलित्वा तथैव भवति। अतः तस्य न शांकरभाष्यसमकक्षत्वम् इत्यपि ध्येयम्।

अत्र अयम् अपरः एकशंकावसरः सोऽपि अत्र निरसनीयः। अत्रेदं शंक्यते कथं व्याससम्मतब्रह्मसूत्रभाष्यनिर्णयार्थं केवलम् अधिकरणरचनाजन्यः दोषगुणविचारः कृतः, सूत्रार्थ-विचारः कथं न सम्पादितः इति। एतदर्थं सूत्रार्थविचारः एव मुख्यं कारणम्। अतः अधिकरण-रचनाविचारद्वारा योऽत्र निर्णयः कृतः स न सम्यक् पन्थाः, स न अविसम्वादी उपायः इति।

अस्योत्तरम् इदम् एतदर्थम् अधिकरणरचनाविचारः एव उपजीव्यत्वेन तथा मुख्यत्वेन समाश्रयणीयः। यतः ग्रन्थोऽयं ब्रह्मसूत्राख्यः आपाततः श्रुत्यध्ययनजन्यसंशयस्य मीमांसामुखेन तत्त्वज्ञानतत्साधनफलादीनां दार्शनिकशैलीम् अनुसृत्य दार्शनिकरीत्या प्रकटनार्थं। एतदर्थमेव सूत्राणि रचितानि, न तु न्यायसांख्यादीनामिव श्रुतिमूलकस्वानुभवसिद्धपृथङ्-मोक्षमार्गप्रदर्शनार्थं। तेन श्रुत्यर्थः एव सूत्रार्थः, श्रुत्यर्थानुसारेणैव च सूत्रार्थं करणीयः। श्रुतितात्पर्यविरुद्धः सूत्रार्थः न कदापि साधनीयः। अतः अत्र व्यासमतं नाम स्वतन्त्रं किंचिदपि नैव सम्भवति। यदेव श्रुतितात्पर्यं तदेव व्यासंमतम्। श्रुतितात्पर्यमपि पूर्वमीमांसादर्शनोक्तलोकवेदसाधारण-नियमनिवहैरेव आविष्करणीयम्। अतश्च व्यस्यन्तार्थः एव सूत्रार्थः भवितुम् उचितः। तथा सति ग्रन्थेऽस्मिन् व्यासमतं नाम किंचिदपि यदि वर्तते तत् तु एतद्ग्रन्थरचनायामेव व्यासानुसृतमार्गरूपं यत् किंचित्, अथवा व्यासावलम्बितग्रन्थ-रचनाशैलीरूपं यत् किंचित्, अथवा ग्रन्थप्रतिपाद्यविषयविन्यासरूपं यत् किंचित् भवितुम् अर्हति। एतदेव अत्र मुख्यत्वेन अधिकरणरचनम् अधिकरणविन्यासः वा भवति। अधिकरणविन्यासे तथा अधिकरणारम्भे तत्समापने च व्यासीयवैलक्षण्यं स्वातन्त्र्यं वा यथा प्रकटीभवितुं सम्भा-व्यते, न तथा सूत्रार्थवर्णनेन, तस्य श्रुत्यर्थरूपत्वात्। अतः व्याससम्मतभाष्यनिर्णयार्थम् अत्र अधिकरणरचनाजन्यवैलक्षण्यमेव विचारणीयम्। तेन च एतदेव अत्र सम्यगुपायत्वेन कल्पि-तम् अवलम्बितं च अस्माभिः।

अथ यद्युच्येत पूर्वपक्षश्रुतिनिर्णये तथा तस्य सिद्धान्तश्रुतिनिर्देशे च व्यासमतत्वेन किंचिदपि अवगन्तव्यम्। यथा जैमिनिवादरिप्रभृतीनां मतत्वेन क्वचित् किंचित् किञ्चित् ग्रन्थे-ऽस्मिन्नेव उक्तम्। अतः श्रुतिसाहाय्येनैव योऽपि सिद्धान्तः अत्र सन्निबन्धः, स एव व्यासीयः सिद्धान्तः न तु सर्वत्र श्रौतसिद्धान्तः इति एव। नेयं शंका संगता। यतः सिद्धान्तश्रुतिनिर्दे-शोऽपि मीमांसादर्शनावलम्बितमार्गेणैव सम्पादितः, न तु व्यासस्य अलौकिकशक्तिबलेन आविष्कृतः। तेन यत्र कुत्रचित् श्रुत्यर्थमीमांसानियमम् अलंघित्वा एतादृशी सम्भावना व्यासेनैव आशंकिता तत्रैव वादरायण इति स्वनाम्ना तन्निर्देशः कृतः तेनैव। अन्यत्र सर्वत्रैव मीमांसानियमानुसरणफलमेव

प्रदर्शित सूत्रकृद्भि । इयं च मया ग्रन्थस्य आदितः अन्तपर्यन्तम् अवलम्बिता इति दृश्यते । अत अत्र एतादृशशंकावसर नास्त्येव । ग्रन्थेऽस्मिन् ग्रन्थकृत स्वकीयमतानुप्रवेशप्रसक्तालेशोऽपि नास्ति। एतदेव एतद्ग्रन्थस्य 'स्मृत्यनवकाशदोपप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसगात्" २।१।१ इति सूत्रे प्रपंचितम् । अत्र पौरुषेयमतमात्रस्य निषिद्धत्वम् उक्तम् । तथापि एतेन सूत्रार्थ विचारस्य वैफल्यम् अत्र न कल्पनीयम् । सूत्राक्षरत एव योऽर्थ येन केनापि लभ्यते, केन-चिदर्थेन अननुरुद्ध सन्, सोऽपि अर्थ श्रुतितात्पर्यरूपव्यासमतनिर्णयार्थ प्रयोजनीय एव। सोऽपि एक पन्था प्र मस्यास्य तात्पर्यनिर्णये व्यासमतविनिर्णये वा । परन्तु अत्रापि स्वकीय संस्कारप्राधान्यं दुष्परिहरणीयमेव । संस्कारवशात् स्पष्टार्थोऽपि अज्ञातसारेण अन्यथा नीयते । बहूनि सूत्राणि एवंजातीयकानि दृश्यन्ते, यत्र एकतरपक्षविनिर्णयाशा कथंचित् दुराशा इत्येव प्रतिभाति । वागजालविस्तरपटुता यस्य यादृशी भवति, तदुक्तय एव प्रायेण अभ्रान्तत्वेन गृह्यन्ते । तर्काप्रतिष्ठानता तावत् विभिन्नमाप्याणां तर्केणैव अवधार्यते । अत सूत्रार्थविचारम् अपेक्ष्य अधिकरणविचार एव सुगम पन्था बहूनां मादृशानाम् अल्पबुद्धीनाम् । अत एव अत्र सूत्रपाठादिविविधविषये अधिकसम्मतिनिरूपणेन तथा अधिकरणरचनाविषयक-विचारद्वारैव व्यासाभिमतब्रह्मसूत्रभाष्यनिर्णयाय प्रयत्नोऽयं कृत । अस्य साफल्य तदैव भविष्यति यदा विद्वांस अत्र सूत्रार्थविचारद्वारापि प्रवर्तेरन् इति ।

इति श्रीचिद्घनानन्दपुरी-विरचिते व्याससम्मतब्रह्मसूत्र
भाष्यनिर्णये तृतीयपाद ।






समर्थनं वा यथा लभ्यते, न तथा भाष्यान्तरेषु इति अकामेनापि अंगीकर्तव्यम् इति। श्रीपति-भाष्यमपि एककं न कस्यापि विरोधि, तथापि अनेन सह मिलित्वा तथैव भवति। अतः तस्य न शांकरभाष्यसमकक्षत्वम् इत्यपि ध्येयम्।

अत्र अयम् अपरः एकशंकावसरः सोऽपि अत्र निरसनीयः। अत्रेदं शंक्यते कथं व्याससम्मतब्रह्मसूत्रभाष्यनिर्णयार्थं केवलम् अधिकरणरचनाजन्यः दोषगुणविचारः कृतः, सूत्रार्थ-विचारः कथं न सम्पादितः इति। एतदर्थं सूत्रार्थविचारः एव मुख्यं कारणम्। अतः अधिकरण-रचनाविचारद्वारा योऽत्र निर्णयः कृतः स न सम्यक् पन्थाः, स न अविसम्वादी उपायः इति।

अस्योत्तरम् इदम् एतदर्थम् अधिकरणरचनाविचारः एव उपजीव्यत्वेन तथा मुख्यत्वेन समाश्रयणीयः। यतः ग्रन्थोऽयं ब्रह्मसूत्राख्यः आपाततः श्रुत्यध्ययनजन्यसंशयस्य मीमांसामुखेन तत्त्वज्ञानतत्साधनफलादीनां दार्शनिकशैलीम् अनुसृत्य दार्शनिकरीत्या प्रकटनार्थः। एतदर्थमेव सूत्राणि रचितानि, न तु न्यायसांख्यादीनामिव श्रुतिमूलकस्वानुभवसिद्धपृथङ्-मोक्षमार्गप्रदर्शनार्थः। तेन श्रुत्यर्थः एव सूत्रार्थः, श्रुत्यर्थानुसारेणैव च सूत्रार्थः करणीयः। श्रुतितात्पर्यविरुद्धः सूत्रार्थः न कदापि साधनीयः। अतः अत्र व्यासमतं नाम स्वतन्त्रं किंचिदपि नैव सम्भवति। यदेव श्रुतितात्पर्यं तदेव व्यासंमतम्। श्रुतितात्पर्यमपि पूर्वमीमांसादर्शनोक्तलोकवेदसाधारण-नियमनिवर्हेणैव आविष्करणीयम्। अतश्च व्यय्यन्तार्थः एव सूत्रार्थः भवितुम् उचितः। तथा सति ग्रन्थेऽस्मिन् व्यासमतं नाम किंचिदपि यदि वर्तते तत् तु एतद्ग्रन्थरचनायामेव व्यासानुसृतमार्गरूपं यत् किंचित्, अथवा व्यासावलम्बितग्रन्थ-रचनाशैलीरूपं यत् किंचित्, अथवा ग्रन्थप्रतिपाद्यविषयविन्यासरूपं यत् किंचित् भवितुम् अर्हति। एतदेव अत्र मुख्यत्वेन अधिकरणरचनम् अधिकरणविन्यासः वा भवति। अधिकरणविन्यासे तथा अधिकरणारम्भे तत्समापने च व्यासीयवैलक्षण्यं स्वातन्त्र्यं वा यथा प्रकटीभवितुं सम्भा-व्यते, न तथा सूत्रार्थवर्णनेन, तस्य श्रुत्यर्थरूपत्वात्। अतः व्याससम्मतभाष्यनिर्णयार्थम् अत्र अधिकरणरचनाजन्यवैलक्षण्यमेव विचारणीयम्। तेन च एतदेव अत्र सम्यगुपायत्वेन कल्पि-तम् अवलम्बितं च अस्माभिः।

अथ यद्युच्येत पूर्वपक्षश्रुतिनिर्णये तथा तस्य सिद्धान्तश्रुतिनिर्देशे च व्यासंमतत्वेन किंचिदपि अवगन्तव्यम्। यथा जैमिनिवादरिप्रभृतीनां मतत्वेन क्वचित् किंचित् किञ्चित् ग्रन्थे-ऽस्मिन्नेव उक्तम्। अतः श्रुतिसाहाय्येनैव योऽपि सिद्धान्तः अत्र सन्निबन्धः, स एव व्यासीय सिद्धान्तः न तु सर्वत्र श्रौतसिद्धान्त इति एवः। नेयं शंका सगता। यतः सिद्धान्तश्रुतिनिर्दे-शोऽपि मीमांसादर्शनावलम्बितमार्गेणैव सम्पादितः, न तु व्यासस्य अलौकिकशक्तिबलेन आविष्कृतः। तेन यत्र कुत्रचित् श्रुत्यर्थमीमांसानियमम् अलंघित्वा एतादृशी सम्भावना व्यासेनैव आशंकिता तत्रैव वादरायण इति स्वनाम्ना तन्निर्देशः कृतः तेनैव। अन्यत्र सर्वत्रैव मीमांसानियमानुसरणफलमेव

प्रदर्शित सूत्रकृद्भिः । इयं च प्रथा ग्रन्थस्य आदित अन्तपर्यन्तम् अवलम्बिता इति दृश्यते । अत अत्र एतादृशार्थकावसर नास्त्येव । ग्रन्थेऽस्मिन् ग्रन्थकृत स्वकीयमतानुप्रवेशार्थकालेशोऽपि नास्ति। एतदेव एतद्ग्रन्थस्य "स्मृत्यनवकाशदोपप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोपप्रसंगात्" २।१।१ इति सूत्रे प्रपंचितम् । अत्र पौरुषेयमतमात्रस्य निपिद्धत्वम् उक्तम् । तथापि एतेन सूत्रार्थविचारस्य वैफल्यम् अत्र न कल्पनीयम् । सूत्राक्षरत एव योऽर्थ येन केनापि लभ्यते, केनचिदर्थेन अननुरुद्ध सन्, सोऽपि अर्थ श्रुतितात्पर्यरूपव्यासमतनिर्णयार्थं प्रयोजनीय एव। सोऽपि एकः पन्था प्र यस्यास तात्पर्यनिर्णये व्यासमतविनिर्णये वा । परन्तु अत्रापि स्वकीय संस्कारप्राधान्यं दुष्परिहरणीयमेव । संस्कारवशात् स्पष्टार्थोऽपि अज्ञातसारेण अन्यथा नीयते । बहूनि सूत्राणि एवंजातीयकानि दृश्यन्ते, यत्र एकतरपक्षविनिर्णयाशा कथंचित् दुराशा इत्येव प्रतिभाति । वाग्जालविस्तरपटुता यस्य यादृशी भवति, तदुक्तय एव प्रायेण अभ्रान्तत्वेन गृह्यन्ते । तर्काप्रतिष्ठानता तावत् विभिन्नभाष्याणां तर्केणैव अवधार्यते । अत सूत्रार्थविचारम् अपेक्ष्य अधिकरणविचार एव सुगम पन्था बहूनां मादृशानाम् अल्पबुद्धीनाम् । अत एव अत्र सूत्रपाठश्रिविविधविषये अधिकसम्मतिनिरूपणेन तथा अधिकरणरचनाविषयकविचारद्वारैव व्यासाभिमतब्रह्मसूत्रभाष्यनिर्णयाय प्रयत्नोऽयं कृत । अस्य साफल्य तदैव भविष्यति यदा विद्वांस अत्र सूत्रार्थविचारद्वारापि प्रवर्तेरन् इति ।

इति श्रीचिद्घनानन्दपुरी-विरचिते व्याससम्मतब्रह्मसूत्र
भाष्यनिर्णये तृतीयपाद ।